## आयुर्दायाध्यायः ७.



## दशांतर्दशाध्यायः ८.

विषयः पृष्ठांकः



## चंद्रयोगाध्यायः १३.



## द्विग्रहयोगाध्यायः १४.



## प्रव्रज्यायोगाध्यायः १५.



## ऋक्षशीलाध्यायः १६.

## १ राशिशीलाध्यायः १७.



## २ राशिशीलाध्यायः १८.

## दृष्टिफलाध्यायः १९.



## भावाध्यायः २०.



## आश्रययोगाध्यायः २१.

## प्रकीर्णकाध्यायः २२.



## अनिष्टाध्यायः २३.



## स्त्रीजातकाध्यायः २४.

विषयः पृष्ठांकः

## नैर्याणिकाध्यायः २५.



## नष्टजातकाध्यायः २६.



## द्रेष्काणाध्यायः २७.

इति श्रीबृहज्जातकानुक्रमणिका केशवाचार्यशालग्रामकृता संपूर्णा॥

---

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,

" श्रीवेंकटेश्वर " छापाखाना, खेतवाड़ी-( मुंबई )

## श्रीमद्वाल्मीकीय रामायण भाषाटीका

### श्रीपं० ज्वालाप्रसादमिश्रकृत भाषानुवाद।

भक्तगणो! अति उत्तम टीका सरल पदोंमें हरेक देशोंके समझने योग्य कराई गई है और रुचिर स्थलोंमें मधुर दृष्टान्तों और उदाहरणोंसे अर्थ पुष्ट किया है किन्तु गूढ़ाशयोंका अर्थ तो विशेषही दरशाया है, विशेष प्रलापसे क्या? शीघ्रता करो पीछे मूल्यबढ़ाया जावेगा. यह पुस्तक कथा बांचनेमें परमोपयोगीहै. मूल्य केवल२१ ही रु०भेजनेपर यह पुस्तक घरबैठे पहुंच जावेगी॥

---

## श्रीमद्गोस्वामितुलसीदासकृत रामायण सटीक-पं०ज्वालाप्रसादजीकृतसंजीवनी टीका।

लीजिये रामायण सटीक (बारीक अक्षर) भी लीजिये असल पुस्तक श्रीगुसाईं जीकी लिपिके अनुसार व संपूर्ण क्षेपकों सहित जिसमें शंका समाधान आद्यपर्य्यंत विस्तारपूर्वक लिखेहैं. तुलसीदासका जीवनचरित्र, माहात्म्य, राम चतुर्दश वर्ष वनवासका तिथिपत्र और अष्टम रामाश्वमेध, लवकुशकाण्ड तथा कोष और सुंदर फोटोग्राफके चित्रभी संयुक्त हैं. इसके टीकाकी रचना बहुत उत्तम और अपूर्व मनभावन सुख उपजावन रामयश पावनहै. देशाटन करनेवाले तथा सर्व सामान्यकी सुगमताके लिये सुंदर नवीन छोटे अक्षरोंमें छपकर तयारहै की० ग्लेज ५ रु० रफ ४ रु०.

---

# जाहिरात.

| | |
|---|---|
| लीलावती सान्वय भाषाटीका अत्युत्तम | १-८ |
| बृहज्जातकभाषाटीका अत्युत्तम | १-८ |
| वर्षदीपकपत्रीमार्ग वर्षजन्मपत्र बनानेका | ०-४ |
| मुहूर्त्तचिंतामणि प्रमिताक्षरा रफ् रु. १ ग्लेज् | १-८ |
| मुहूर्त्तचिंतामणि पीयूषधाराटीका | ३-० |
| ताजिकनीलकंठी सटीक तंत्रत्रयात्मक | १-४ |
| ताजिकनीलकण्ठी महीधरकृत भा० टीका अत्युत्तम टैपकी छपी | १-८ |
| ज्योतिषसार भाषाटीकासहित | १-० |
| मुहूर्त्तचिंतामणि भाषाटीका महीधरकृत | १-० |
| मानसागरीपद्धति | १-० |
| बालबोधज्योतिष | ०-२ |
| चमत्कारचिंतामणि भाषाटीका | ०-४ |
| जातकालंकार भाषाटीका | ०-६ |
| जातकालंकार सटीक | ०-६ |
| जातकाभरण | ०-१२ |
| प्रश्नचंडेश्वर भाषाटीका | ०-१२ |
| लघुपाराशरी भाषाटीका अन्वयसहित | ०-३ |
| मुहूर्त्तमार्तण्ड संस्कृतटीका-भाषाटीकासमेत | १-४ |
| शीघ्रबोध भाषाटीका | ०-६ |
| संकेतनिधि सटीक पं० रामदत्तजीकृत यह ग्रंथ देखने योग्य है | १-४ |
| षट्पंचाशिका भाषाटीका | ०-४ |
| भुवनदीपक सटीक | ४-० |
| जैमिनिसूत्र सटीक चार अध्यायका | ०-७ |
| रमलनवरत्न | ०-८ |
| रमलनवरत्न भाषाटीका | ०-१२ |
| सर्वार्थचिंतामणि | ०-१२ |
| लघुजातक सटीक | ०-६ |
| सामुद्रिक भाषाटीका | ०-४ |
| सामुद्रिक शास्त्र बडा सान्वय भाषाटीका | १-४ |
| यवनजातक | ०-२ |
| भावकुतूहल भाषाटीका | १-० |
| अमरकोश भाषाटीका शब्दानुक्रमसहित रफ् १॥ ग्लेज् | २-० |
| पंचांग १० वर्षका छपके तयार है | १-८ |
| हायनरत्न | १-८ |

पुस्तक मिलनेका ठिकाना-खेमराज श्रीकृष्णदास,

" श्रीवेङ्कटेश्वर " छापखाना बंबई.

# जाहिरात।

## श्रीमद्भागवत संस्कृत तथा भाषाटीका सहित।

श्रीवेदव्यासप्रणीत श्रीमद्भागवत सबसे कठिनहै और इसका प्रचार भरतखण्डमें सबसे अधिक है यह ग्रंथ क्लिष्टताके कारण सर्व साधारण लोगोंको टीका होनेपर भी अच्छी रीतिसे समझना कठिन था कोई २ स्थलोंमें बड़े २ पण्डितोंकी भी बुद्धि चक्करमें पड़जाती थी इसलिये विना संस्कृत पढ़े सर्व साधारण पण्डित व स्वल्प विद्या जाननेवाले भगवद्भक्तोंके लाभार्थ संस्कृत मूल व अतिप्रिय व्रजभाषा टीकासहित जो कि हिन्दी भाषाओंमें शिरोमणि और माननीयहै, उसी भाषामें टीका बनवाकर प्रथमावृत्ती छपायाथा वह बहुतही जल्दी हाथोंहाथ विकगई, फिर द्वितीयावृत्तिभी विकगई अब इस्की तृतीयावृत्ति द्वितीयावृत्तिकी अपेक्षा अच्छीतरह शुद्ध करवाके मोटे अक्षरमें छपायाहै और भक्ति ज्ञानमार्गी ५०० अतीव मनोहर दृष्टांतभी दिये हैं कागज विलायती बढ़िया लगायाहै, माहात्म्य षष्ठाध्यायी भाषाटीका सहित इस्के साथही है, प्रथमावृत्तिमें मूल्य १५ रुपया इस आवृत्तिमें केवल १२ बाराही रुपया रक्खा है.

## तुलसीकृत रामायण सटीक

### लवकुशकांड सहित।

प्रत्येक दोहा चौपाईका अर्थ पंडित ज्वाला प्रसादजी कृत भाषा टीका अतिउत्तम संपूर्ण क्षेपकोंके अर्थ और माहात्म्य तुलसी दासजीका जीवनचरित्र व गूढार्थ व रामवनवास तिथिपत्र कोष और हनुमानजीका चित्र तथा सूर्य्यवंशका वृक्ष सहितविलायती सोहनेरी नाम चित्रित जिल्दकी की. ८ रुपये.

पुस्तक मिलनेका ठिकाना–

**खेमराज श्रीकृष्णदास,**

"श्रीवेंकटेश्वर" छापाखाना.

खेतवाड़ी–ख्यॉकरोड–मुंबई.

श्रीः।

अथ

# बृहज्जातकं वराहमिहिराचार्यप्रणीतम्।

## उत्पलकृतसंस्कृतटीकासमेतं

### प्रारभ्यते।

श्रीगणेशाय नमः।

ब्रह्माजशंकररवींदुकुजज्ञजीवशुक्रार्कपुत्रगणनाथगुरून्प्रणम्य ॥ यःसंग्रहोर्कवरलाभविशुद्धबुद्धेरावंतिकस्यतमहंविवृणोमिकृत्स्नम् ॥ १ ॥ यच्छास्त्रंसविताचकारविपुलैःस्कंधैस्त्रिभिर्ज्योतिषांतस्योच्छित्तिभयात्पुनःकलियुगेसंसृत्ययोभूतलम्॥ भूयःस्वल्वतरंवराहमिहिरव्याजेनसर्वंव्यधादित्थंयंप्रवदंतिमोक्षकुशलास्तस्मैनमो भास्वते ॥ २ ॥ वराहमिहिरोदधौसुवहुभेदतोयाकुलेग्रहर्क्षगणयादसिप्रचुरयोगरत्नोज्ज्वले॥ भ्रमंतिपरितोयतोलघुधियोर्थलुब्धास्ततःकरोमिविवृतिप्लवंनिजधियाहमत्रोत्पलः ॥ ३ ॥ इहशास्त्रेकानिसंवंधाभिधेयप्रयोजनानिभवंतीत्युच्यंते। वाच्यवाचकलक्षणः संबंधः वाच्योऽर्थोवाचकः शब्दः अथवोपायोपेयलक्षणः संवंधः उपायस्त्विदंशास्त्रमुपेयोयद्विज्ञानम् अथवा आब्रह्मादिविनिःसृतमिदंवेदांगमिति संबंधः राशिस्वरूपहोराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागपरिज्ञानग्रहस्वरूपग्रहराशिबलाबलवियोनिजन्माधानपरिज्ञानजन्मकालविस्मापनप्रभावकथनारिष्टायुर्दायदशांतर्दशाष्टकवर्गकर्माजीवराजयोगसनाभयोगचंद्रयोगद्विग्रहादियोगप्रव्रज्याराशिशीलदृष्टिफलभावफलाश्रयप्रकीर्णानिष्टयोगस्त्रीजातकनिर्याणनष्टजातकद्रेष्काणगुणरूपमभिधेयम् लोकानां प्राक्कर्मविपाकव्यंजकत्वं प्रयोजनम् सत्पात्रशुभाशुभकथनादिहलोकपरलोकसिद्धिरितिप्रयोजनम्।किमेभिरुक्तैरित्यत्रोच्यते यस्मान्नृणां श्रोतॄणांसंबंधाभिधेयप्रयोजनकथनाच्छास्त्रविषये श्रद्धा जायत इति।तथाचोक्तमत्रार्थे-सिद्धिः श्रोतृप्रवृत्तीनांसंबंधकथनाद्यतः। तस्मात्सर्वेषुशास्त्रेषुसंबंधःपूर्वमुच्यते ॥ किमेवात्राभिधेयंस्यादितिपृष्टस्तुकेनचित्।यदिनप्रोच्यते तस्मै फलशून्यंतुतद्भवेत्॥ सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित्। यावत्प्रयोजनंनोक्तंतावत्तत्केनगृह्यते॥इति॥ कस्यास्मिञ्छास्त्रेऽधिकारइत्यत्रोच्यते। द्विजस्यैव। यतस्तेनषडंगोवेदोऽध्येतव्यो ज्ञातव्यश्च। कान्यंगानीत्युच्यंते। शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषांगतिः। छंदसांलक्षणंचैवषडंगोवेदउच्यतइति ॥ तथाचोक्तमंगे। वेदाहियज्ञार्थमभिप्रवृत्ताःकालानुपूर्वाविहिताश्चयज्ञाः। यस्मादिदंकालविधानशास्त्रंयोज्योति-

षंवेदसवेदयज्ञानिति । ज्योतिःशास्त्रंवेदांगमेव । ननुकुतोज्योतिःशास्त्रस्यवेदांगत्वमुक्तम्।तदुच्यते ॥ चंद्रसूर्योपरागसंक्रांतिव्यतीपातवैधृतगजच्छायैकादश्यमावास्यादिपुण्यकालकथनात् यज्ञानांकालव्यंजकत्वात् । अन्येषांश्रुतिस्मृतिपुराणोक्तानांकर्मणाकालकथनाच्चास्यवेदांगत्वमेव ॥ तथाचभास्करसिद्धांते ॥ वेदास्तावद्यज्ञकर्मप्रवृत्तायज्ञाःप्रोक्तास्तेतुकालाश्रयेण ॥ शास्त्रादस्माद्वालबोधो यतःस्याद्वेदांगत्वंज्योतिषस्योक्तमस्मात् ॥ १ ॥ शब्दशास्त्रंमुखंज्योतिषंचक्षुषी श्रोत्रमुक्तंनिरुक्तंचकल्पःकरौ ॥ यातुशिक्षास्यवेदस्यसानासिकापादपद्मद्वयं छंदआद्यैर्बुधैः ॥ २ ॥ वेदचक्षुःकिलेदंस्मृतं ज्योतिषंमुख्यताचांगमध्येस्यतेनोच्यते॥संयुतोपीतरैः कर्णनासादिभिश्चक्षुषांगेनहीनोनकिंचिन्नरः ॥३॥ तस्माद्विजैरध्ययनीयमेतत्पुण्यंरहस्यंपरमंचतत्त्वम् ॥ योज्योतिषंवेत्तिनरःससम्यग्धर्मार्थमोक्षाँल्लभतेयशश्च ॥४॥ सतामयमाचारोयच्छास्त्रप्रारंभेष्वभिमतदेवतायाः प्रसादात्तन्नमस्कारेणतत्स्तुत्यातद्भक्तिविशेषेणचाभिप्रेतार्थसिद्धिंवांछति। तदयमप्यावंतिकाचार्यःश्रीवराहमिहिरनामाद्विजोऽर्काल्लब्धवरप्रसादो ज्योतिःशास्त्रसंग्रहकृद्गणितस्कंधादनंतरंहोरास्कंधंचिकीर्षुरशेषविघ्नोपशांत्यर्थंभगवतः सूर्यादात्मगामिनींवाक्सिद्धिंशार्दूलविक्रीडितेनाह-

श्रीगणेशायनमः ॥ मूर्तित्वेपरिकल्पितःशशभृतोवर्त्मापुनर्जन्मनामात्मेत्यात्मविदांक्रतुश्चयजतांभर्तामरज्योतिषाम् ॥
लोकानांप्रलयोद्भवस्थितिविभुश्चानेकधायः श्रुतौवाचंनः सद दात्वनेककिरणस्त्रैलोक्यदीपोरविः ॥ १ ॥

मूर्त्तित्वेइति।सरविर्भगवानादित्योनोऽस्मभ्यंवाचंगिरंददातुप्रयच्छतु।कीदृशोरविःअनेककिरणः।नएकःकिरणोयस्यासावनेककिरणःप्रभूतरश्मिःसहस्ररश्मिरित्यर्थः।पुनःकिंभूतःत्रैलोक्यदीपः त्रयोलोकास्त्रैलोक्यं भूर्भुवःस्वराख्यं तत्रदीपःप्रकाश्यसाधर्म्यात्।तथामूर्तित्वेपरिकल्पितःशशभृतः शशंप्राणिविशेषंविभर्त्तिधारयतीतिशशभृच्चंद्रमास्तस्यमूर्त्तित्वेशरीरत्वेपरिकल्पितः शशिनोमूर्तिरादित्य इति पर्यवस्थापितः यतोजलमयश्चंद्रःप्रकाशशून्यः प्रोक्तः तस्मिंस्तरणिकिरणप्रतिफलनादितरस्य ज्योत्स्नाप्रसरविस्तरः ॥ यस्मादुक्तमाचार्येणैवबृहत्संहितायाम् । नित्यमधःस्थस्येंदोर्भाभिर्भानोः सितंभवत्यर्धम् ॥ स्वच्छाययान्यदसितंकुंभस्येवातपस्थस्य ॥१॥ त्यजतोर्कतलंशशिनःपश्चादवलंबतेयथाशौक्ल्यम्॥ दिनकरवशात्तथेंदोःप्रकाशतेधःप्रभृत्युदयः ॥ २ ॥ सलिलमयेशशिनिरवेर्दीधितयोमूर्छितास्तमोनैशम्॥क्षपयंतिदर्पणोदरनिहिताइवमंदिरस्यांतरिति॥तथाच

भास्करसिद्धांते ॥ तरणिकिरणसंगादेषपीयूषपिंडोदिनकरदिशिचंद्रश्चंद्रिकाभि-श्चकास्ति । तदितरदिशिबालाकुंतलश्यामलश्रीर्घटइवनिजमूर्तिच्छाययैवातप-स्थः॥इति । तथाचवेदे सुषुम्नःसूर्यरश्मिश्चंद्रमाइति।अथवाशशिभृतइतिपाठः । शशिभृतोमहादेवस्यमूर्त्तित्वेपरिकल्पितः । यतोसौ भगवानष्टमूर्त्तिः क्षिति-जलपवनहुताशनयजमानाकाशसोमसूर्याख्याइत्यष्टमूर्तयस्तस्य महादेवस्यातो माहेश्वरीमूर्तिरादित्यइति।शशिभृतइति साधुपाठः।तथा वर्त्माऽपुनर्जन्मनां न-पुनर्जन्मविद्यतेयेषांतेऽपुनर्जन्मानोमुक्तास्तेषांवर्त्ममार्गः मोक्षद्वारमित्यर्थः।यतो-द्विविधोमार्गःदेवयानाख्यःपितृयाणाख्यश्च । तत्रपितृयाणमार्गद्वारभूतश्चंद्रमाः येनस्वर्गगामिनःस्वर्गंगच्छंति । मोक्षद्वारंसूर्यः । यतःसूर्यमंडलंभित्त्वामोक्षभाजो भवंतिमोक्षद्वारंगच्छंतीति।तथाचश्रीभारतेभगवान्व्यासः ।स्वर्गद्वारंप्रजाद्वारंमो क्षद्वारंत्रिविष्टपमिति । आत्मेत्यात्मविदाम् आत्मानंविदंतिजानंतीत्यात्मवि-दोयोगिनस्तेषांसएवात्माचित्तत्वम् । तेजोरूपीप्राणरूपेणहृदयांतरस्थितः । तथाचश्रुतिः सूर्यआत्माजगतस्तस्थुषश्चेति । जगतोजंगमस्यतस्थुषःस्थावरस्य सूर्यएवात्मा ॥ क्रतुश्चयजताम् । यजमानानांसएवक्रतुर्यज्ञः । यतउक्तंमनुना ॥ अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजा इति । भर्तामरज्योतिषाम् अमरादेवाः ज्योतींषिग्रहनक्षत्रादीनितेषांभर्ताप्रभुः प्रधानइत्यर्थः । यतःसर्वेएवदेवयोनयस्तस्योपस्थानंकुर्वंति ग्रहनक्षत्राणांचकेवलं तद्दर्शननित्योदयास्तमयाः । यतउक्तम् । तेजसांगोलकःसूर्योग्रहर्क्षाण्यंबुगो लकाः । प्रभावंतोहिदृश्यंतेसूर्यरश्मिप्रदीपिताइति ॥ एवंगुणाधिक्यादमरज्यो-तिषांप्रभुः लोकानांप्रलयोद्भवस्थितिविभुरिति । लोकाःभूर्लोकादयस्तेषां प्रलयेविनाशेउद्भवेउत्पत्तौस्थितौपालने । विभुर्विष्णुः भगवतोऽतीतवर्तमानभा विकालत्रयपरिच्छेदचिह्नभूतत्वात् । चशब्दोत्रावधारणे । अनेकधायःश्रुतौ श्रुतौ वेदेयोऽनेकधानेकप्रकारैःपठ्यते । तथाचश्रुतिः इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यः ससुपर्णोगरुत्मान्।एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुरिति ॥ १ ॥

भूयोभिःपटुबुद्धिभिः पटुधियांहोराफलज्ञप्तयेशब्दन्यायसम
न्वितेषुबहुशःशास्त्रेषुदृष्टेष्वपि॥होरातंत्रमहार्णवप्रतरणेभग्नो
द्यमानामहंस्वल्पंवृत्तविचित्रमर्थबहुलंशास्त्रप्लवंप्रारभे ॥ २ ॥

अधुनास्य शास्त्रस्यपरप्रणीतत्वादानर्थक्यं परिजिहीर्षुरन्यशास्त्रेभ्योस्यगुणव-त्त्वंप्रदर्शयञ्छार्दूलविक्रीडितेनाह ॥ भूयोभिरिति । होरायास्तंत्रंहोरातंत्रम् अथ वाहोराएवतंत्रंहोरातंत्रंतदेवमहार्णवोदुष्पारत्वात् तंत्र्यतेतार्यतेयेनार्थस्तत्तंत्रम् ।

अहंहोरातंत्रमहार्णवप्रतरणेभग्नोद्यमानांशास्त्रप्लवंप्रारभे । होरातंत्रमेवमहार्णवो महासमुद्रस्तत्प्रतरणेप्रतरणविषयेभग्नोद्यमानांभग्नोत्साहानांशास्त्रप्लवंप्रारभेकरोमि । शास्त्रमेवप्लवःशास्त्रप्लवस्तंशास्त्रप्लवम् । यथाप्लवस्तितीर्षूणांपरपारगमनमाशुसंपादयति ।तथेदमपिहोरातंत्रमहार्णवप्रतरणेभग्नोद्यमानामित्यस्यप्लवेनसाधर्म्यम् । केनकृतेहोरातंत्रमहार्णवप्रतरणेभग्नोद्यमानामित्यतआह।भूयोभिरिति । भूयोभिर्बहुतरैः । किंभूतैः पटुबुद्धिभिः पटुःपट्वीबुद्धिर्येषांतेपटुबुद्धयःप्रचुराः प्रज्ञास्तैः । शास्त्रेपुदृष्टेपुचिरंविचारितेषुसत्स्वपि । किंभूतेषु । शब्दन्यायसमन्वितेषु । शब्दानांन्यायःशब्दन्यायः मीमांसा । तदुक्तम् ॥ शब्दानामेवसाशक्तिस्तर्कोयःपुरुषाश्रयइति । अथवाशब्दाश्चन्यायाश्चशब्दन्यायाः शब्दोर्थवान्न्यायोमीमांसातैःसमन्वितेषुसंयुक्तेषु ॥ किमेकवारंदृष्टेषुनेत्याह बहुशइति। बहुशःबहून्वारान्व्याससमासैर्बहुप्रकारैरचितेष्वित्यर्थः । किमर्थं दृष्टेषु ॥पटुधियां होराफलज्ञप्तये चतुरबुद्धीनांहोराफलावबोधनाय।प्राक्तनकर्मविपाकोहोरा होरायाःफलंहोराफलंतस्यज्ञप्तिस्तत्फलंशभाशुभंतज्ज्ञानाय।किंभूतंशास्त्रप्लवम् स्वल्पं लघुग्रंथम्।पुनःकिंभूतम् वृत्तविचित्रम्।वृत्तैः शार्दूलविक्रीडितप्रभृतिभिर्विचित्रंरम्यं तस्मात्स्वल्पतयैवास्यगुणवत्त्वम् । यतस्तेषामत्राप्युद्यमभंगोनभवति स्वल्पमित्यनेनग्रहणधारणसुखतांप्रदर्शयति । तथाच हस्तिवैद्यकरोवीरसेनः॥समासोक्तस्यशास्त्रस्यसुखंग्रहणधारणे ॥ वृत्तविचित्रमित्यनेनसूक्ततांप्रदर्शयति । ननु स्वल्पशास्त्रस्यस्वल्पार्थतैवभविष्यतीत्याह । अर्थबहुलं बह्वभिधेयम्।अतएवपूर्वविरचितशास्त्रेभ्योस्यगौरवम् । अन्यथाहिशास्त्रसंभवात्पुनरुक्ततादोषः स्यात् । एतदुक्तं भवति । प्रागभिहितशास्त्राण्यतिविस्तृतान्यतस्तेषुभग्नोद्यमास्तदर्थमहंशास्त्रप्लवंप्रारभे । ननुकदाचिदल्पप्रज्ञतयातेभग्नोद्यमास्तत्कुतोलब्धम् । यथापूर्वशास्त्राणांमहत्त्वाद्भग्नोद्यमास्तदर्थमिदमल्पमित्यतइदमाह । पटुधियामित्यनेनैतत्प्रतिपादितंभवति नहितेबुद्धिहीनत्वात्तेषुशास्त्रेषुभग्नोद्यमाः किंतर्हि शास्त्रदोषादन्यथात्रापितेषामुद्यमभंगः स्यात् ॥ प्लवमपिस्वल्पंचलघुवृत्तमदीर्घवृत्तं विचित्रंरम्यमर्थबहुलंवित्तपरिपूर्णमेवंविधंतितीर्षूणामतिसुखावहंभवतीति ॥२॥

होरेत्यहोरात्रविकल्पमेकेवांछंतिपूर्वापरवर्णलोपात् ॥
कर्मार्जितंपूर्वभवेसदादियत्तस्यपक्तिसमभिव्यनक्ति ॥ ३ ॥

अधुना होराशास्त्रस्यपुराकृतकर्मविपाकव्यंजकत्वं वर्णद्वयपरिहारेण शब्दव्युत्पत्तिंप्रदर्शयन्निंद्रवज्रयाह ॥ होरेति । होरार्थंशास्त्रंहोरातामहोरात्रविकल्पमेकेवांछंति।अहश्चरात्रिश्चाहोरात्रंहोराशब्देनोच्यते।तस्यविकल्पोविकल्पना। एके अन्ये होरांवांच्छंतीत्यर्थः । कथमुच्यते।पूर्वापरवर्णलोपात्।अहोरात्रशब्दस्यपूर्वोवर्णोऽ-

कारोऽपरवर्णश्चत्रकारस्तयोर्लोपमदर्शनंकृत्वाहोराशब्दोवाशिष्यते । किमर्थं पुनरहोरात्रशब्दाद्धोराशब्दोव्युत्पाद्यतेइति अत्रोच्यते । मेषादयोद्वादशलग्नराशयोहोरात्रांतर्भूताः लग्नस्यचकालवशाज्ज्ञानम् लग्नवशाच्छुभाशुभज्ञानम् । अतो होरात्राश्रयत्वात्ततएवहोराशब्दोव्युत्पाद्यते । एतदेवाचार्यस्याप्यभिप्रेतम् यतः परमतमप्रतिषिद्धमनुमतमिति।तथाचसारावल्याम्।आद्यंतवर्णलोपाद्धोरास्माकं भवत्यहोरात्रात्।तत्प्रतिषिद्धः सर्वोग्रहभगणश्चित्यतेयस्मात्।किमस्यप्रयोजनमित्याह॥कर्मार्जितमिति । पूर्वभवेप्राग्जन्मनियत्सदादिशुभमशुभंमिश्रंचकर्मार्जितं तस्यपक्तिपाकंसम्यक्अभिव्यनक्तिप्रकटीकरोति । तथाचलघुजातके यदुपचितमन्यजन्मनिशुभाशुभंतस्यकर्मणः पक्तिम्।व्यंजयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइवेति।ननुशुभस्याशुभस्यवावश्यभाविनः किंव्यनक्ति।उच्यते।द्विविधंशुभाशुभं दृढकर्मोपार्जितमदृढकर्मोपार्जितंच । तत्रदृढकर्मोपार्जितस्यदशाफलंपाकक्रमेण व्यनक्तिअशुभंदशाफलंज्ञात्वायात्रादेः परिहारः कर्त्तव्यः।शुभंज्ञात्वायात्रादेरतिशयेनदानम् अदृढकर्मोपार्जितस्याष्टकवर्गेणफलव्यक्तिः।तच्चाशुभंज्ञात्वाशांत्यादिभिरुपशमंनयेत्।तथाचयवनेश्वरः।यद्यद्विधानंनियतंप्रजानांग्रहर्क्षयोगप्रभवंप्रसूतौ। भाग्यानितानीत्यभिशब्दयंतिवार्तानियोगेतिदशानराणाम् ॥तदप्यभिज्ञैर्द्विविधं निरुक्तंस्थिराख्यमौत्पातिकसंज्ञितंच । कालक्रमाज्जातकनिश्चितंयत्क्रमोपसर्पि स्थिरमुच्यतेतत् ॥ सप्तग्रहाणांप्रथितानियानिस्थानानिजन्मप्रभवानिसद्भिः । तेभ्यःफलंचारग्रहक्रमस्थाद्युर्यदौत्पातिकसंज्ञितंतत् । अनेनास्थिरस्यशांत्यादिभिरुपशमः प्रदर्शितोभवति । उक्तंच भगवताव्यासेन विहन्याद्दुर्बलंदैवं पुरुषेणविपश्चितेति ॥ ३ ॥

कालांगानिवरांगमाननमुरोहृत्क्रोडवासोभृतोबस्तिर्व्यंजनमूरुजानुयुगुलेजंघेततोंघ्रिद्वयम् ॥ मेषाश्विप्रथमानवर्क्षचरणाश्चक्रस्थिताराशयोराशिक्षेत्रगृहर्क्षभानिभवनंचैकार्थसंप्रत्ययाः॥४॥

अधुनाव्यवहारार्थकालाख्यस्यपुरुषस्यमेषादिराशिपूर्वकंशिरःप्रभृत्यंगविभागंशार्दूलविक्रीडितेनाह॥कालांगानीति।कालस्यांगानिकालांगानितानिचमेषप्रभृतिराशयोनवर्क्षचरणानवभिर्ऋक्षचरणैर्नक्षत्रपादैःप्रमाणंयेषांते । अश्विप्रथमाः अश्विनीतःप्रभृतिनवनवनक्षत्रपादाएकैकस्यप्रमाणम् मेषप्रभृतिराशयोश्विप्रथमैर्नक्षत्रपादैर्युक्ताइत्यर्थः । तथाभूताराशयो धातुरवयवाः।तथाचयवनेश्वरः द्वेद्वेसपादेभवनंगतेइति । तथाचभगवान्गार्गिः अश्विनीभरणीमेषः कृत्तिकापाद एवच।तत्पादत्रितयंब्राह्मंवृषः सौम्यदलंतथा ॥ सौम्यार्द्धमार्द्रामिथुनंत्वदित्याश्च-

रणत्रयम्।तत्पादःपुष्यमाश्लेषाराशिःकर्कटकःस्मृतः ॥ पित्र्यंभाग्यमथार्यम्णः पादःसिंहःप्रकीर्तितः ।।तत्पादत्रितयंकन्याहस्तश्चित्रार्धमेवच।तुलाचित्रादलंस्वातिर्विशाखाचरणत्रयम् । तत्पादंमित्रदैवत्यंज्येष्ठावृश्चिकउच्यते । मूलमाप्यं तथाधन्वीपादोविश्वेश्वरस्यच । तत्पादत्रितयंश्रोत्रंमकरोवासवंदलम् ॥ तद्दलंवारुणंकुंभस्तथाजाचरणत्रयम् । तत्पादएकोमीनः स्यादहिर्बुध्न्यंचरेवती ॥ चक्रेस्थिताश्चक्रस्थिताः चक्रस्थिताराशयः अथवाचक्रवत्स्थिताः अनेकसंस्थानमेषांप्रदर्शितंभवति । तत्रकालाख्यस्यवरांगंशिरोमेषः आननंमुखं तद्वृषः उरोवक्षोमिथुनं तद्धृदयंकुलीरःकर्कटः क्रोडमुदरंसिंहः वासोभृत्कटिः कन्या बस्तिर्नाभिव्यंजनयोरंतरेतुला व्यंजनंयेनपुंस्त्वंव्यंज्यतेलिंगंतद्वृश्चिकः ऊरुयुगुलंधन्वी जानुयुगलंमकरः जंघेद्वेकुंभः अंघ्रिद्वयंपादयुगलंमीनइति। तथाचबादरायणः ॥ मेषःशिरोथवदनंवृषभोविधातुर्वक्षोभवेन्नृमिथुनंहृदयंकुलीरः । सिंहस्तथोदरमथोयुवतिः कटिश्चबस्तिस्तुलाभृदथमेहनमष्टमंस्यात् । धन्वीचास्योरुयुगंमकरोजानुद्वयंभवति । जंघाद्वितयंकुंभःपादौमत्स्यद्वयंचेति । अस्यप्रयोजनम् । जन्मकालेयोराशिःपापग्रहाक्रांतः सकालाख्यस्यपुरुषस्ययस्मिन्नंगेस्थितस्तत्रांगेजातस्योपघातोवक्तव्यः। यत्रसौम्यःस्थितस्तत्रपुष्टिरिति । तथाचसारावल्याम् कालनरस्यावयवान्पुरुषाणांकल्पयेत्प्रसवकाले । सदसद्ग्रहसंयोगात्पुष्टान्सोपद्रवांश्चापीति ॥ राशिक्षेत्रमित्यादि । एषांचप्रत्येकस्यराशिरितिसंज्ञातस्यैवपर्यायनामानि क्षेत्रं गृहमृक्षंभं राशिश्चक्षेत्रंचगृहंचऋक्षं चभंचतानिराशिक्षेत्रगृहर्क्षभानि भवनंच गृहत्वाद्भवनग्रहणेसिद्धेयत्पुनर्भवनग्रहणंकृतंतत्सर्वेषांगृहपर्यायाणांग्रहणार्थम्। ऋक्षत्वादपिभग्रहणेसिद्धेयत्पुनर्भग्रहणं तेनैतद्दर्शयति । यत्रयत्रहोराशास्त्रेभग्रहणमृक्षग्रहणंवातत्रतत्रराशेरेवग्रहणंस्यान्नतुनक्षत्रस्य । एतेराश्यादयःशब्दाएकार्थसंप्रत्ययाएकार्थाभिधायकाइत्यर्थः ॥ ४॥

मत्स्यौघटीनृमिथुनंसगदंसवीणंचापीनरोश्वजघनोमकरोमृगास्यः॥ तौलीससस्यदहनाप्लवगाचकन्याशेषाःस्वनामसदृशाःस्वचराश्चसर्वे ॥ ५ ॥

अधुनाराशीनांस्वरूपविज्ञानंवसंततिलकेनाह॥ मत्स्याविति । मीनोराशिर्मत्स्यौमत्स्यद्वयमन्योन्यंपुच्छाभिमुखम् । एतत्तुकुतोलभ्यते । उच्यते । तस्यैवोभयोदयत्वात् । वक्ष्यतिच लमंसमेत्युभयतःपृथुरोमयुग्ममिति । घटीकुंभः स्कंधासक्तरिक्तघटधारीपुरुषःकुंभः । मिथुनोनृमिथुनराशिर्मिथुनंनृमिथुनं स्त्रीपुमांसौतन्मिथुनं सगदंसवीणंपुमान्सगदः स्त्रीसवीणा । चापीनरोश्वजघनः ध-

न्वीराशिश्चापीविद्यमानधन्वानरोऽश्वजघनः अश्वस्तुरगस्तस्यैवजघनंपादा यस्यसोश्वजघनः चतुष्पादित्यर्थः । मकरोमृगास्यः मकरोराशिर्मकरएवसच मृगास्योमृगमुखः । तौलीत्यादि तुलाविद्यमानतुलःपुरुषः । कन्याकुमारीप्लवगानौकास्था ससस्यदहना सस्यंचदहनश्चतौसस्यदहनौताभ्यांसहवर्ततइतिससस्यदहना । शेषाराशयोमेषवृषकर्कटसिंहवृश्चिकाः स्वनामसदृशाः स्वसंज्ञाविहिताकृतयः । तद्यथा मेषोमेषः वृषोवृषभः कर्कटः कुलीरोजलचरप्राणी सिंहः केसरी वृश्चिको वृश्चिकःकीटजातिः । तथाचसत्यः ॥ छागोवृषभोवीणागदाधरंमिथुनमंभसिकुलीरः । सिंहःशैलेकन्यानौसंस्थादीपसस्यकरा ॥ पुरुषस्तुलाधरोवृश्चिकोथधन्वीनरोहयांत्यार्धः । मकरार्धमृगपूर्वंकुंभीपुरुषोझषोमीनः । स्वचराश्चसर्वे सर्वेद्वादशराशयः स्वचराः स्वेषुस्वेषुस्थानेषुचरंति यथादृष्टस्थाननिवासिनइत्यर्थः । तद्यथा मेषवृषावारण्यौदिवा रात्रौ ग्राम्यौ मिथुनंग्राम्यः कर्कटोंबुचरः सिंह आरण्यः कन्यादर्शितदेशविभागा तुलापण्यवीथिस्थः वृश्चिकःश्वभ्रचारी धन्वीग्राम्यः मकरस्य पूर्वभागआरण्योन्योजलचरः कुंभोग्राम्यः मीनोजलचरइति । तथाचयवनेश्वरः ॥ आद्यःस्मृतोमेषसमानमूर्तिः कालस्यमूर्द्धागदितःपुराणैः ॥ सोजाविकासंचरकंदराद्रिस्तेनाग्निधात्वाकररत्नभूमिः ॥ १ ॥ वृषाकृतिस्तुप्रथितोद्वितीयःसवक्त्रकंठायतनंविधातुः ॥ वनाद्रिसानुद्विपगोकुलानांकृषीवलानामधिवासभूमिः ।२॥ वीणागदाभृन्मिथुनंतृतीयःप्रजापतेः स्कंधभुजांसदेशे ॥ प्रनर्तकोगायनशिल्पकस्त्रीक्रीडारतिर्द्यूतविहारभूमिः ॥ ३ ॥ कर्कीकुलीराकृतिरंबुसंस्थोवक्षःप्रदेशेविहितश्चधातुः ॥ केदारवापीपुलिनानितस्यदेवांगनारम्यविहारभूमिः ॥ ४ ॥ सिंहश्चशैलेहृदयप्रदेशंप्रजापतेःपंचममाहुराद्याः ॥ तस्याटवीदुर्गगुहावनाद्रिव्याधावनीदुर्गवनप्रदेशाः ॥ ५ ॥ प्रदीपिकांगृह्यकरेणकन्या नौस्थाजलेषष्ठमितिब्रुवंति ॥ कालार्थधीराजठरंविधातुः सशाद्वलास्त्रीरति शिल्पभूमिः ॥ ६ ॥ वीथ्यांतुलापण्यधरोमनुष्यः स्थितः सनाभीकटिबस्तिदेशे ॥ शुक्लार्थवीथ्यापणपट्टनाध्वसार्थाधिवासोन्नतसस्यभूमिः ॥ ७ ॥ श्वभ्रोष्टमोवृश्चिकविग्रहस्तुप्रोक्तःप्रभोर्मेढ्रगुदप्रदेशे । गुहाबिलश्वभ्रविषाश्मगुप्तिर्वल्मीककीटाजगराहिभूमिः ॥ ८ ॥ धन्वीमनुष्योहयपश्चिमार्धस्तमाहुरूरूभुवनप्रणेतुः ॥ समास्थितव्यस्तसमस्तवाजिसुरास्त्रभृद्यज्ञरथाश्वभूमिः ॥ ९ ॥ मृगार्द्धपूर्वोमकरोंबुगाधोजानुप्रदेशंतमुशंतिधातुः ॥ नदीवनारण्यसरोद्यनूपश्वभ्राधिवासोद शमःप्रदिष्टः ॥ १० ॥ स्कंधेतुरिक्तःपुरुषस्यकुंभोजंघेतमेकादशमाहुरार्याः ॥ शुष्कोदकाधारकुशस्यपक्षीस्त्रीशौंडिकोद्यूतनिवासभूमिः ॥ ११ ॥ जलेतुमीनद्वयमंत्यराशिः कालस्यपादौविहितौवरिष्ठौ ॥ सपुण्यदेवद्विजतीर्थभूमिर्नदीसमुद्रांबुचयाधिवासः ॥ १२ ॥ प्रयोजनंहृतनष्टादिषुद्रव्यस्थानपरिज्ञानम् । उक्तंच राशिभ्यःकालदिग्देशाइति ॥ ५ ॥

**क्षितिजसितज्ञचंद्ररविसौम्यसितावनिजाःसुरगुरुमंदसौरिगुरव-श्चगृहांशकपाः॥अजमृगतौलिचंद्रभवनादिनवांशविधिर्भवन-समांशकाधिपतयःस्वगृहात्क्रमशः ॥ ६ ॥**

अधुनाराशिनवमांशद्वादशांशाधिपांस्तोटकेनाह।क्षितिजासितज्ञेति।क्षितिजाद-योग्रहाःगृहपा अंशकपाश्च गृहाणांराशीनांमेषादीनांपतयःस्वामिनोभवंति क्षि-तिजोंगारकःसमेषस्याधिपतिः । सितःशुक्रोवृषभस्य । ज्ञोबुधोमिथुनस्य । चंद्रः कर्कटकस्य । रविरादित्यःसिंहस्य।सौम्योबुधः कन्यायाः । सितःशुक्रस्तुलायाः। अवनिजोंगारकोवृश्चिकस्य । सुरगुरुर्बृहस्पतिर्धन्विनः । मंदःशनैश्चरोमकरस्य । सौरिःशनैश्चरःकुंभस्य । गुरुर्बृहस्पतिर्मीनस्येति । प्रयोजनं होरास्वामिगुरुज्ञवी-क्षितयुताइत्यत्र एतएवनवांशकाधिपतयः नकेवलंमेषस्यभौमोधिपतिः याव-द्यस्मिन्राशौमेषनवांशकोदयोभवति तस्यापिभौमोधिपतिः । शेषाणामप्ये-वमेव। तेचनवांशकाःकथंभवंतीत्याह । अजमृगतौलिचंद्रभवनादिनवांशविधि-रिति । अजोमेषःमृगोमकरःतौलीतुला । चंद्रभवनंकर्कटःआदिनवांशविधिरिति प्रत्येकमभिसंबध्यते । तत्रैवमभिसंबंधोभिजायते अजादिमृगादि । तौल्यादि । चंद्रभवनादिनवांशविधिः सर्वराशीनांभवति । तत्राजादिनवांशविधिर्मेषस्य तेनमेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनुर्धराणांसंबंधिनोनवांशा मेष-स्यभवंति।मृगादिर्वृषस्य तेनमकरकुंभमीनमेषवृषमिथुनकर्कटसिंहकन्यासंबंधि-नोनवांशा वृषस्य । तुलादिमिथुनस्य तेनतुलावृश्चिकधनुर्मकरकुंभमीनमेषमि-थुनानांसंबंधिनोनवांशाःमिथुनस्य । कर्कटादि कर्कटस्य तेनकर्कटसिंहकन्या-तुलावृश्चिकधनुर्मकरकुंभमीनानांसंबंधिनोनवांशाःकर्कटस्य । एवंसिंहस्यमेषवत्। कन्याया वृषवत् । तुलाया मिथुनवत् । वृश्चिकस्यकर्कटवत् । पुनरपिधनुषो मे-षवत् । मकरस्यवृषवत्।कुंभस्यामिथुनवत् । मीनस्यकर्कटवत्।तदुक्तंग्रंथांतरे मेषके-सरिधन्विनांमेषाद्याअंशकाःस्मृताः । वृषकन्यामृगाणांचमकराद्यानवस्मृताः ॥ तुलामिथुनकुंभानांतुलाद्यानवकीर्तिताः । कर्कटालिझषाणांचकर्कटाद्यानवांशकाः इति ॥ प्रयोजनं स्तेनोभोक्तापंडिताद्याइत्यादि । भवनसमांशकाधिपतयःस्वगृ-हात्क्रमशइति भवनसमाअंशकाभवनांशकाः भवनानिद्वादशतत्समाअंशकाद्वा-दशांशकाइत्यर्थः।तेचप्रत्येकस्यराशेः स्वगृहादारभ्यगणनीयाः।तद्यथा मेषस्यमेष-वृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधन्विमकरकुंभमीनानांसंबंधिनोद्वादशभा-गाभवंति तेमेषाद्यधिपतयः।एवंवृषस्यवृषाद्यामेषांताः।मिथुनस्य मिथुनाद्यावृषां-ताः।कर्कटस्यकर्कटाद्यामिथुनांताः। सिंहस्यसिंहाद्याःकर्कांताः।कन्यायाःकन्याद्याः सिंहांताः । तुलायास्तुलाद्याःकन्यांताः ।वृश्चिकस्यवृश्चिकाद्यास्तुलांताः ।धन्विनो

धनुराद्यावृश्चिकांताः। मकरस्यमकराद्याधन्व्यंताः। कुंभस्यकुंभाद्या मकरांताः। मीनस्यमीनाद्याः कुंभांता इति ॥ प्रयोजनं चैषांतात्कालिकेंदुसहितोद्विरसांशको यइत्यादि ॥ ६ ॥

कुजरविजगुरुज्ञशुक्रभागाःपवनसमीरणकौर्पिजूकलेयाः ॥
अयुजियुजितुभेविपर्ययस्थाःशशिभवनालिझषांतमृक्षसंधिः ॥७॥

अधुनात्रिंशांशकाधिपतीन्पुष्पिताग्रयाह॥कुजेति।कुजोभौमः रविजःशनिः गुरुर्बृहस्पतिः ज्ञोबुधः शुक्रोभार्गवः एवंकुजरविजगुरुज्ञशुक्राणांक्रमेणभागाः पवनसमीरणकौर्पिजूकलेयाः तद्यथा पवनावायवःपंच पंचएवभागाःकुजस्य।ततऊर्ध्वं समीरणाःपंचैवरविजस्य एवंदश।अतऊर्ध्वंकौर्पिसंज्ञा अष्टौगुरोः कौर्प्याख्योवृश्चिकःसचगणनयाष्टमः एवमष्टादश। ततःपरंजूकसंज्ञाःसप्तभागाबुधस्य।जूकसंज्ञातुलायाःसचगणनयासप्तमः एवंपंचविंशतिः।ततऊर्ध्वंलेयसंज्ञाःपंचशुक्रस्य लेयसंज्ञासिंहस्यसचगणनयापंचमः एवंत्रिंशत्।किंसामान्येनेत्यतआह।अयुजियुजीति।अयुजिविषमराशौकुजादयोग्रहाःपवनादीनांभागानांयथाक्रमेणाधिपतयःतत्रमेषमिथुनसिंहतुलाधनुःकुंभानांविषमराशीनामेषक्रमः। युजितुभेविपर्ययस्थाः युजिसमराशौपवनादिभागाग्रहाश्चविपर्ययस्थाव्यत्ययेनतिष्ठंति।तद्यथा। तत्रादौ पंचशुक्रस्य ततःपरंसप्तबुधस्य एवंद्वादश । ततःपरमष्टौजीवस्य एवंविंशतिः। ततःपरंपंचशनेः एवंपंचविंशतिः।ततःपरंपंचभौमस्य एवंत्रिंशत्। तत्रवृषकर्कटकन्यावृश्चिकमकरमीनाः समराशयः एवंत्रिंशद्भागाधिपतयःपंचताराग्रहाः। अत्रकेचिदाहुर्यथा । विपर्ययस्थाइत्यनेनानंतराणामेवपवनादिसंख्यानांभागानां विपर्ययेणभवितव्यं नव्यवहितानांकुजादीनां।तच्चायुक्तम्।यस्मात्तुशब्दोत्रपठ्यते सचकुजादिसमुच्चयार्थः।तथाचश्रुतकीर्तिः पंचाथपंचचाष्टौसप्तचपंचैवचौजभवनेषु।धरणिसुतमंदसुरगुरुबुधशुक्राणांक्रमेणांशाः ॥ पंचैवसप्तचाष्टौपंचचपंचाथयुग्मभवनेषु।भागाभार्गवशशिसुतसुरेज्यशनिभूमिपुत्राणामिति ॥ प्रयोजनं कन्यैवदुष्टाव्रजतीहदास्यंसाध्वीसमायाकुचरित्रयुक्ता।भूम्यात्मजर्क्षेक्रमशोंशकेषुवक्रार्किजीवेंदुजभार्गवाणामित्यादि। शशिभवनालिझषांतमृक्षसंधिः अंतशब्दःप्रत्येकमभिसंबध्यते। शशिभवनांतमल्यंतं झषांतंचऋक्षसंधिः शशिभवनंकर्कटः अलिर्वृश्चिकःझषोमीनः एतेषामंतंनवमनवांशकं यत्रनक्षत्रराश्योर्युगपदवसानं तदृक्षसंधिः यस्मादाश्लेषांतिकर्कटकांतः। ज्येष्ठांतेवृश्चिकांतःरेवत्यंतेमीनांतइति एतदेवलोकेगंडांतमितिप्रसिद्धम् । उक्तंच अश्विनीपित्र्यमूलाद्यामेषसिंहहयादयः ॥ विषमर्क्षांतेवर्त्ततेपादवृद्ध्यायथोत्तरमिति ॥ प्रयोजनंचसंधौपापैःशशिनिचजडःस्यान्नचेत्सौम्यदृष्टइति ॥ ७ ॥

क्रियताबुरिजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः ॥
तौक्षिकआकोकेरोहृद्रोगश्चांत्यभंचेत्थम् ॥ ८ ॥

अधुनालोकव्यवहारार्थंमेषादीनांसंज्ञाःपथ्यार्ययाह॥क्रियेति । इत्थमेवंप्रकारनामानोमेषाद्याराशयोज्ञेयाः । तद्यथा क्रियोमेषः ताबुरिर्वृषः जितुमोमिथुनः कुलीरः कर्कटः लेयःसिंहः पाथोनःकन्या जूकस्तुला कौर्प्याख्यो वृश्चिकः तौक्षिकोधन्वी आकोकेरोमकरः हृद्रोगःकुंभः अंत्यभंमीनइति । प्रयोजनंचगोसिंहौजितुमाष्टमौक्रियतुलेइत्यादि ॥ ८ ॥

द्रेष्काणहोरानवभागसंज्ञास्त्रिंशांशकद्वादशसंज्ञिताश्च ॥
क्षेत्रंचयद्यस्यसतस्यवर्गोहोरेतिलग्नंभवनस्यचार्द्धम् ॥ ९ ॥

अधुनाग्रहस्यक्षेत्रहोराद्रेष्काणनवांशद्वादशभागत्रिंशद्भागानांवर्गसंज्ञाव्यवहारार्थमिंद्रवज्रयाह।द्रेष्काणेति।द्रेष्काणादयःषट्पदार्थाः स्वकीयग्रहस्यवर्गसंज्ञाः॥ तत्रद्रेष्काणोराशित्रिभागः होराराश्यर्द्धं नवभागोनवांशकः एषासंज्ञायेषांतेतथा ॥ त्रिंशांशकस्त्रिंशद्भागः द्वादशांशोद्वादशभागः एतत्संज्ञिताश्च एषासंज्ञाख्यायेषांतेतथा यद्यस्यग्रहस्यक्षेत्रंराशिःसतस्यवर्गः।वर्गशब्देनात्रषड्वर्गः।एतेसर्व एवग्रहस्यात्मीयवर्गसंज्ञाःएवंषड्विकल्पोराशिःषट्स्वात्मीयेषुस्थितोवर्गस्थो भवति ननुग्रहवर्गस्यषड्विकल्पानसंभवंति । यतश्चंद्रार्कयोस्त्रिंशांशकाभावःभौमादीनां होराभावः तस्मात्पक्षेसंभवंति तेनपंचस्वात्मीयेषुस्थितोवर्गस्थः एतदप्युपलक्षणार्थम्।अतोयथासंभवंत्र्यादिविकल्पस्थोग्रहोवर्गस्थउच्यते।यस्माद्भगवान्गार्गिः। क्षेत्रंहोराथद्रेष्काणोनवांशोद्वादशांशकः । त्रिंशांशकश्चवर्गोयंसर्वस्यसमुदाहृतः॥ त्र्यादिष्वपिपदार्थेषुस्थितःस्वेषुस्ववर्गगः॥पंचवर्गगतोप्येवंग्रहोभवतिनान्यथेति। प्रयोजनम् एकोपिवर्गोपगतोनराणांशुभोशुभोवापिचतुष्टयस्थः । वर्गोपिवास्योदयगोविनाशंबहुप्रकारंकुरुतेध्वगानामित्यादि॥होरालग्नयोः सहार्थमाह।होरेति। लग्नंभवनस्यचार्धमिति होरेतिलग्नमुच्यते । प्रयोजनं च होरास्वामिगुरुज्ञवीक्षितयुतेति।भवनस्यचराशेरर्द्धंहोरा । प्रयोजनम् मार्तंडेंद्वोरयुजिसमभेचंद्रभान्वोश्चहोरेति ॥ ९ ॥

गोजाश्विकर्किमिथुनाःसमृगानिशाख्याःपृष्ठोदयाविमिथुनाः
कथितास्तएव॥शीर्षोदयादिनबलाश्चभवंतिशेषालग्नंसमेत्युभयतःपृथुरोमयुग्मम् ॥ १० ॥

अधुनाराशीनांरात्रिदिनसंज्ञात्वंपृष्ठोदयशीर्षोदयत्वंचवसंततिलकेनाह॥गोजेति। गोजाश्विकर्किमिथुनाः। गोशब्देनवृषउच्यते अजोमेषः अश्वोस्यास्तीत्यश्वीधन्वी कर्कीकुलीरः। मिथुनःप्रसिद्धः एतेगोजाश्विकर्किमिथुनाः समृगाः मृगेणमकरेणसहिताःषड्राशयोनिशाख्यारात्रिबलसंज्ञाः पृष्ठोदयाविमिथुनाः त एवरात्रिसंज्ञाविमिथुनाःमिथुनवर्जिताःपृष्ठोदयसंज्ञाभवंति पृष्ठेनोदयंयांतीत्यर्थः॥ मिथुनःपुनःशीर्षोदयः। शीर्षोदयाइति। उक्तेभ्यःशेषाःसिंहकन्यातुलावृश्चिककुंभाःशीर्षोदयाः शिरसोदयंयांतिदिनबलाश्चभवंति। अत्ररात्रिदिनबलाख्यास्तइतिसंज्ञामात्रम्। यतस्तेषामुत्तरत्रबलंवक्ष्यति द्विपदादयोह्निनिशिचप्राप्तेचसंध्याद्वयइति।एवंसत्याचार्यस्यस्ववचनविरोधःस्यात् तस्मात्संज्ञामात्रंबलग्रहणम्। प्रयोजनम् रात्रिद्युसंज्ञेषुविलोमजन्मेत्यादि तथापृष्ठोभयकोदयर्क्षगाइति। यात्रायांवक्ष्यतिच शीर्षोदयेसमभिवांछितकार्यसिद्धिःपृष्ठोदयेविफलताबलविद्वश्च।तथाशस्तंदिवादिनबलेनिशिनक्तवीर्यैरात्रौविपर्ययबलेगमनंनशस्तं।अन्यच्चैभ्योमीनस्यविशेषमाह॥ लग्नंसमेत्युभयतःपृथुरोमयुग्ममिति।पृथुरोमामत्स्यस्तद्युग्मंमत्स्यद्वयं मीनोराशिः सउभयतःपृष्ठशीर्षाभ्यांलग्नंसमेत्यागच्छति॥ १०॥

क्रूरःसौम्यःपुरुषवनितेतेचरागद्विदेहाःप्रागादीशाःक्रियवृषनृयुक्कर्कटाःसत्रिकोणाः॥मार्तंडेंद्वोरयुजिसमभेचंद्रभान्वोश्चहोरे द्रेष्काणाःस्युःस्वभवनसुतत्रित्रिकोणाधिपानाम्॥ ११॥

अधुनाराशीनांक्रूरसौम्यविभागं स्त्रीपुरुषविभागं चरस्थिरद्विस्वभावविभागं दिगधिपत्वंहोराद्रेष्काणपतीनांविभागंचमंदाक्रांतयाह॥क्रूरःसौम्यइति।तेमेषादयोराशयोयथाक्रमंक्रूरसौम्यसंज्ञाः। तत्रमेषःक्रूरः। वृषःसौम्यः। मिथुनः क्रूरः। कर्कटःसौम्यः। एवंसर्वेषांयोज्यम्।तेनविषमराशयःक्रूरसंज्ञाः समराशयः सौम्यसंज्ञाः। प्रयोजनंच क्रूरेषुजाताः क्रूरस्वभावाः सौम्येषुजाताः सौम्यस्वभावाभवंतीति।तथाचाचार्यः ओजाःपुरुषाज्ञेयाः सौम्याः स्त्रीसंज्ञकाः क्रमाद्युग्मे॥ उग्रेषूग्राः पुरुषाः सौम्यायुग्मेषुभवनेषु॥ पुरुषवनिते इति। तएवमेषादयोयथाक्रमं पुरुषवनिताख्याज्ञेयाः। तेनमेषः पुरुषोनरः। वृषोवनितास्त्री एवंसर्वत्र तेनषड्विषमराशयः पुरुषसंज्ञाः षट्समराशयः स्त्रीसंज्ञाः। प्रयोजनंच पुरुषराशिषुजातास्तेजस्विनः स्त्रीराशिषुजातामृदवोभवंति। तेचरागद्विदेहाइति तएवमेषादयोराशयोयथाक्रमंयथासंख्यंचरागद्विदेहाख्याभवंति। तत्रमेषश्चरः वृषोऽगःस्थिरः मिथुनोद्विदेहोद्विस्वभावः एवंकर्कटादिषुयोज्यम्। तेनमेषकर्कटतुलामकराश्चराः वृषसिंहवृश्चिककुंभाः स्थिराः मिथुनकन्याधनुर्मीनाद्विस्वभावाः। प्रयोजनंच चरराशिषुजाताश्चरस्वभावाः स्थिरेषुस्थिर-

स्वभावा द्विस्वभावेषुमिश्रस्वभावाभवंति । तथाचसत्य: चरसंज्ञा: स्थिरसंज्ञाद्विप्रकृतिरितिराशय: क्रमश: ॥ राशिस्वभावतुल्याजायंते प्रकृतय: प्रभूतानाम्॥प्रागादीशाइति । क्रियोमेष: वृष:प्रसिद्ध: नृयुङ्मिथुनं कर्कटक: कुलीर: एतेक्रियवृषनृयुक्कर्कटा: सत्रिकोणा:त्रिकोणाभ्यांस्वपंचमनवमाभ्यांसहिता: प्रागादिषुपूर्वाद्यासुचतसृषुदिशासुईशा:स्वामिनोभवंति।मेष:स्वपंचमनवमाभ्यांसहपूर्वस्यांस्वामी । एवंवृष:स्वपंचमनवमाभ्यांसहदक्षिणस्याम् । मिथुन:स्वपंचमनवमाभ्यांपश्चिमायाम् । एवमेवकर्कोपि तेनमेषसिंहधन्विन: पूर्वस्याम् । वृषकन्यामकरादक्षिणस्याम् । मिथुनतुलाकुंभा:पश्चिमायाम् । कर्कटवृश्चिकमीनाउत्तरस्यामिति ॥ प्रयोजनम् हृतनष्टादौचौरादेर्द्रव्यस्यवादिग्विज्ञानंसूतिकागृहद्वारज्ञानंच । तथाच यातव्यादिङ्मुखगतस्य सुखेनसिद्धिर्व्यर्थश्रमोभवतिदिक्प्रतिलोमलग्नइति । मार्तंडेंद्वोरिति।मार्तंड:सूर्य: इंदुश्चंद्र: अयुज्ययुग्मराशौविषमराशौ यथाक्रमंमार्तंडेंद्वोर्होरेभवत: प्रथमाहोरासूर्यस्य द्वितीयाहोराचंद्रस्य होराशब्देनात्रराश्यर्द्धमुच्यते समभेचंद्रभान्वोश्चेति समभेसमराशौचंद्रभान्वोर्होरेभवत: । प्रथमाहोराचंद्रस्यशशिन: द्वितीयाभानो: सूर्यस्य । प्रयोजनम् सूर्यहोरायांजातास्तेजस्विनश्चंद्रस्यहोरायांमृदुस्वभावाभवंति । द्रेष्काणा:स्युरिति । द्रेष्काणोराशित्रिभाग: स्वभवनसुतत्रित्रिकोणाधिपानांसंबंधिनोद्रेष्काणाभवंति । प्रथमोद्रेष्काण:स्वभवनाधिपतेरात्मीयभवनाधिपते: ॥ द्वितीय:सुतभवनस्यपंचमस्थानाधिपते: तृतीयस्त्रित्रिकोणाधिपते: नवमस्थानाधिपते: । तेनमेषस्य प्रथमोद्रेष्काण:प्रथमस्य भौमस्य द्वितीयोपंचमस्थानसिंहाधिपतेरर्कस्य तृतीयोनवमस्थानधनुषोधिपतेर्गुरोरिति । वृषस्य प्रथम:शुक्रस्य द्वितीयोबुधस्य तृतीय: शने: । मिथुनस्य प्रथमोबुधस्यद्वितीय:शुक्रस्य तृतीय:शने: कर्कटस्यप्रथमश्चंद्रस्य द्वितीयोभौमस्य तृतीयोजीवस्य । सिंहस्यप्रथम:सूर्यस्य द्वितीयोजीवस्य तृतीयोभौमस्य कन्याया:प्रथमोबुधस्य द्वितीय:शने: तृतीय:शुक्रस्य । तुलाया:प्रथम:शुक्रस्य द्वितीय:सौरस्य तृतीयोबुधस्य । वृश्चिकस्यप्रथमोभौमस्य द्वितीयो जीवस्य तृतीयश्चंद्रस्य । धन्विन:प्रथमोजीवस्य द्वितीयोभौमस्य तृतीयो रवे: । मकरस्यप्रथम:शने: द्वितीय:शुक्रस्य तृतीयोबुधस्य । कुंभस्यप्रथम:शने: द्वितीयोबुधस्य तृतीय:शुक्रस्य । मीनस्यप्रथमोजीवस्य द्वितीयश्चंद्रस्यतृतीयो भौमस्येति । प्रयोजनम् द्विरुत्तमास्वांशकभंत्रिभागगैरित्यादि ॥ ११ ॥

केचित्तुहोरांप्रथमांभपस्यवांच्छंतिलाभाधिपतेर्द्वितीयाम् ॥
द्रेष्काणसंज्ञामपिवर्णयंतिस्वद्वादशैकादशराशिपानाम् ॥ १२ ॥

अधुनामतांतरेणहोराद्रेष्काणपतीनांलक्षणमिंद्रवज्रयाह ॥ केचिदिति । केचिद्यवनेश्वरादयःप्रथमांहोरांभपस्य राश्यधिपतेर्वांच्छंति इच्छंति । द्वितीयांलाभाधिपतेरेकादशस्थानाधिपस्य । यथामेषस्यप्रथमहोराभौमस्य । द्वितीया होरैकादशकुंभपतेःसौरस्य । एवंसर्वेषामपियोज्यम् । द्रेष्काणसंज्ञामपीति स्वद्वादशैकादशराशिपानामपिद्रेष्काणसंज्ञांवर्णयंतिकथयंति । प्रथमंस्वाधिपतेरात्मीयस्वामिनः । द्वितीयंद्वादशाधिपतेः तृतीयमेकादशराश्यधिपतेः । यथा मेषस्यप्रथमोद्रेष्काणोभौमस्य द्वितीयोजीवस्य तृतीयःसौरस्य एवमन्येषामपिज्ञातव्यम् । तथाचयवनेश्वरः॥आद्यातुहोराभवनस्यपत्युरेकादशक्षेत्रपतेर्द्वितीया । स्वद्वादशैकादशराशिपानांद्रेष्काणसंज्ञाःक्रमशस्त्रयोत्र ॥ एवंयवनेश्वरमतेनसर्वग्रहाणांहोराधिपत्यमस्ति । एतदाचार्यस्यनाभिप्रेतंसत्यादीनामपि। तथाचसत्यः॥ओजेषुरवेर्होराप्रथमायुग्मेषुचोत्तराशेषा । इंदोःक्रमशोज्ञेयाजन्मनि चेष्टौस्वहोरास्थौ ॥ राशिपतेर्द्रेष्काणस्तत्पंचमनवम १–५–९ भवनपतयःस्युः ॥ तेषामधिपतयःस्वस्वद्रेष्काणेग्रहाबलिनइति ॥ १२ ॥

**अजवृषभमृगांगनाकुलीराझषवणिजौचदिवाकरादितुंगाः॥**
**दशशिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चतेस्तनीचाः १३**

अथग्रहाणामुच्चनीचविभागंपुष्पिताग्रयाह॥अजेति । अजादयोराशयोयथाक्रमेणदिवाकरादीनांग्रहाणांतुंगाःउच्चसंज्ञाः । तद्यथा अजोमेष आदित्यस्योच्चं वृषभोवृषःसचंद्रस्य मृगोमकरःसभौमस्य अंगनाकन्याबुधस्य । कुलीरःकर्कटोजीवस्य । झषोमीनःशुक्रस्य । वणिक्तुलाधरःसौरस्य एतएवराशयोदशादिषुभागेषुसूर्यादीनांपरमोच्चसंज्ञाभवंति । तत्रादित्यस्यमेषोदशमेभागेपरमोच्चः चंद्रस्यवृषःशिखिसंख्येतृतीयेभागे । भौमस्यमकरोमनुयुक्संख्येऽष्टाविंशेभागे परमउच्चः ॥ मनवश्चतुर्दशतेषांयुगे द्विगुणामनवइत्यर्थः । बुधस्यकन्यातिथिसंख्येपंचदशेभागे । जीवस्यकर्कटइंद्रियसंख्येपंचमेभागे । शुक्रस्यमीनस्त्रिनवकसंख्येसप्तविंशे । सौरस्यतुलाविंशे । ननुसर्वएवराशिरुच्चसंज्ञः सचत्रिंशदंशकः तत्रदशादीनांतदंतर्भूतानांसिद्धैवोच्चसंज्ञातत्किंदशाद्युपादानम्।सत्यम् । किंतुपरमोच्चत्वज्ञापनार्थंदशादीनांग्रहणम् । अन्यथासर्वएवराशयोमीउच्चसंज्ञाःतेनोक्तराशिदशाद्यंशस्थाःकथिताग्रहाःपरमोच्चस्थाइत्युच्यंते । परमोच्चज्ञानेनचोच्चादव्यतिरिक्तंप्रयोजनमस्ति । तथाचभगवान्गार्गिः॥स्वोच्चगौरविशीतांशूजनयेतां नराधिपम्।उच्चस्थौधनिनंख्यातंस्वत्रिकोणगतावपि॥तथाचयवनेश्वरः॥स्वोच्चेषु सर्वान्परिगृह्यभागांस्तिष्ठत्सुसर्वेषुबलाधिकेषु । लग्नेशुभेपूर्णवपुष्मतींद्रौत्रैलोक्यराज्याधिपतिःप्रसूते ॥ अथेद्दशाएवंविधाः सूर्यादयः परमोच्चस्थिताद्रष्टव्याः ।

अत्रवृत्तभंगभयात्पूरणप्रत्ययांतादशादय आचार्येणनोक्ताः । पूरणप्रत्ययांतत्वमेषांयवनेश्वरवाक्याज्ज्ञायते । तथाचयवनेश्वरः॥सूर्यस्यभागेदशमेतृतीयेचंद्रस्य जीवस्यतुपंचमेंशे । सौरस्यविंशेत्वधिसप्तकेतुविंद्याद्भृगोःपंचदशेबुधस्य ॥ भौमस्यविंशेऽष्टयुतेपरोच्चंविंशल्लवेसूर्यसुतस्यतूच्चम् ॥ तेस्तनीचाइति तआदित्यादयोग्रहाअस्तनीचाः अस्तेनीचंयेषांते अस्तःसप्तमः प्रकृतित्वात् स्वोच्चात्सप्तमः प्रत्येकस्यनीचसंज्ञा।तद्यथा आदित्यस्यस्वोच्चान्मेषात्सप्तमस्तुलासनीचसंज्ञः । एवंचंद्रस्यसप्तमोवृश्चिकः । भौमस्यसप्तमःकर्कटः । बुधस्यमीनः । गुरोर्मकरः । शुक्रस्यकन्या । सौरस्यमेषइति । अत्रापिदशादिषुभागेषुपरमनीचस्थाद्रष्टव्याः। तथाचयवनेश्वरः॥स्वोच्चात्तुजामित्रमुशंतिनीचंत्रिंशल्लवोयच्चसमानसंख्या।अथेद्दशाएवंविधाख्यादयःपरमनीचस्थाभवंति परमनीचस्थानामनिष्टंफलंभवतीतिगार्गिणाप्रदर्शितम् । तथाचगार्गिः ॥ अंधंदिगंबरंमूर्खंपरपिंडोपजीविनम् । कुर्यातामतिनीचस्थौपुरुषंशशिभास्कराविति ॥ १३ ॥

वर्गोत्तमाश्चरगृहादिषुपूर्वमध्यपर्यंततःशुभफलानवभागसंज्ञाः ॥ सिंहोवृषःप्रथमषष्ठहयांगतौलिकुंभास्त्रिकोणभवनानिभवंतिसूर्यात् ॥ १४ ॥

अधुनाग्रहाणांवर्गोत्तममूलत्रिकोणपरिज्ञानंवसंततिलकेनाह॥वर्गोत्तमाइति।चरगृहादिषुचरस्थिरद्विस्वभावेषुराशिषुयथासंख्यंपूर्वमध्यपर्यंततआदिमध्यावसानतः ।पूर्वमध्यपर्यंतगावापाठः।येनवभागास्तेवर्गोत्तमसंज्ञाभवंतिवर्गांशकसमूहे उत्तमाःप्रधानावर्गोत्तमाः।तद्यथा चरेषुमेषकर्किंतुलामकरेषुप्रथमोनवांशोवर्गोत्तमाख्योभवति । स्थिरेषुवृषसिंहवृश्चिककुंभेषुमध्यमःपंचमोनवांशकोवर्गोत्तमः । द्विस्वभावेषुमिथुनकन्याधन्विमीनेषुपर्यंततः नवमोनवांशकोवर्गोत्तमः। एतदुक्तं भवति प्रत्येकस्मिन्राशौस्वनवमांशकोवर्गोत्तमाख्यइति । तथाचयवनेश्वरः॥ स्वेस्वेगृहेषुस्वगृहांशकायेवर्गोत्तमास्तेयवनैर्निरुक्ताइति । शुभफलानवभागसंज्ञा इति । तेचवर्गोत्तमाख्यानवभागसंज्ञाजन्मनिशुभफलदाः शुभंफलंददति । वक्ष्यतिच शुभंवर्गोत्तमेजन्मेति। तथाचसत्यः चरभवनेष्वाद्यंशाःस्थिरेषुमध्याद्विमूर्तिषुतथांत्याः । वर्गोत्तमाःप्रदिष्टास्तेष्विहजाताःकुलेमुख्याः । प्रयोजनम् स्वतुंगवक्रोपगतैस्त्रिसंगुणंद्विरुत्तमस्वांशकभत्रिभागगैरिति । सिंहोवृषइत्यादि॥ सिंहाद्योराशयो यथापाठक्रमेणसूर्यादीनांग्रहाणांत्रिकोणभवनानिमूलत्रिकोणभवनानिभवंति।तद्यथा सिंहःसूर्यस्यादित्यस्यमूलत्रिकोणसंज्ञःवृषश्चंद्रस्य प्रथमो मेषोंगारकस्य षष्ठःकन्याबुधस्य हयांगोधन्वीबृहस्पतेःतौलीतुलाशुक्रस्यकुंभःसौरस्येति।प्रयोजनम् उच्चस्वत्रिकोणगैर्बलस्थैस्त्र्याद्यैर्भूपतिवंशजानरेंद्राइत्यादि १४

होरादयस्तनुकुटुंबसहोत्थबंधुपुत्रारिपत्निमरणानिशुभास्प-
दायाः। रिःफाख्यमित्युपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञित-
गृहाणिननित्यमेके ॥ १५ ॥

अधुनालग्नादीनांद्वादशानांस्थानानांतन्वाद्याद्वादशसंज्ञास्तृतीयषष्ठदशमैकादशानांचोपचयसंज्ञावसंततिलकेनाह होरादयइति।होरादयोलग्नादयस्तेषांयथा क्रमेणतन्वादीनिनामानि तत्रलग्नस्यतनुरित्याख्या द्वितीयस्यकुटुंबम् तृतीयस्यसहोत्थः सहोत्थोभ्राता । चतुर्थस्यबंधुः बंधुशब्दोज्ञातिवाची । पुत्राख्यः पंचमः । अरिःशत्रुस्तदाख्यःषष्ठः । पत्न्याख्यःसप्तमः । मरणाख्योऽष्टमः । शुभाख्योनवमः । आस्पदाख्योदशमः । आयाख्यएकादशः । रिःफाख्योद्वादशः । इतिशब्दःप्रकारार्थद्योतकः । तेनहोरादीनांतन्वादिपर्यायाअपिसंज्ञाभूता इत्यवगंतव्यम्।उपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणीति । अरिःषष्ठं कर्म दशमम् लाभएकादशं दुश्चिक्यसंज्ञंतृतीयम् एतानिगृहाणिस्थानानिउपचयसंज्ञानीति । ननित्यमेकेइति एकेकेचिन्ननित्यमुपचयानीतिवर्णयंतिकथयंति।तेषामयमभिप्रायः । यदिपापग्रहेणस्वस्वामिशत्रुणावादृष्टाभवंतितदानोपचयास्ते । तत्रचगर्गादिवाक्यम्॥अथोपचयसंज्ञास्यात्रिलाभरिपुकर्मणाम्।नचेद्भवंति दृष्टास्तेपापस्वस्वामिशत्रुभिः । एतदाचार्यवराहमिहिरस्यनाभिप्रेतम् । यतोसौसर्वदैवोपचयाख्यैस्तैर्व्यवहरति।सत्यादयोप्येवम् ।तथाचसत्यः।दशमैकादशषष्ठतृतीयसंज्ञानिजन्मलग्नाभ्याम् ॥ उपचयभवनानिस्युःशेषाण्यृक्षाण्यपचयाख्यानि । यवनेश्वरश्च षष्ठंतृतीयंदशमंचराशिमेकादशंचोपचयर्क्षमाहुः । होरागृहस्थानशशांकभेभ्यः शेषाणिचैभ्योपचयात्मकानि । प्रयोजनम् उपचयगृहमित्रस्वोच्चगैःपुष्टमिष्टंत्वपचयगृहनीचारातिगैर्नैष्टसंपदित्यादि ॥ १५ ॥

कल्पस्वविक्रमगृहप्रतिभाक्षतानिचित्तोत्थरंध्रगुरुमानभवव्ययानि ।
लग्नाच्चतुर्थनिधनेचतुरस्रसंज्ञेद्यूनंचसप्तमगृहंदशमर्क्षमाज्ञा ॥ १६ ॥

पुनरपिहोरादीनांसंज्ञांतराणिवसंततिलकेनाह ॥ कल्पेति । एतेषामपिलग्नादीनांद्वादशानांयथाक्रमंकल्पाद्याः संज्ञाभवंति । तद्यथा लग्नंकल्पाख्यम् ॥ कल्पशब्दःशक्तिवाची । द्वितीयंस्वम् तृतीयंविक्रमम् । चतुर्थंगृहम् पंचमंप्रतिभा । षष्ठंक्षतम् । सप्तमंचित्तोत्थम्।अष्टमंरंध्रम्।नवमंगुरुम्।दशमंमानम् । एकादशंभवम्।द्वादशंव्ययम् । लग्नाच्चतुर्थनिधनइति । लग्नाच्चतुर्थस्थानंनिधनमष्टमंच तेचतुरस्रसंज्ञेचतुरस्राख्ये लग्नात्सप्तमंगृहंद्यूनं दशमर्क्षंदशमराशिराज्ञाख्याएताः संज्ञाव्यवहारार्थंज्ञेयाः ॥ १६ ॥

कंटककेंद्रचतुष्टयसंज्ञाःसप्तमलग्नचतुर्थखभानाम् ॥
तेषुयथाभिहितेषुबलाढ्याःकीटनरांबुचराःपशवश्च ॥ १७ ॥

अथकेंद्राणां संज्ञास्तत्स्थराशिविलंचदोधकेनाह॥कंटकेति ।सप्तमलग्नचतुर्थानि प्रसिद्धानि । खभंदशमम् खआकाशमध्येतत्कालंयद्भंराशिर्वर्ततेतस्यखभेतिसंज्ञा ॥ एतेषांसप्तमलग्नचतुर्थखभानांराशीनांप्रत्येकस्यकंटककेंद्रचतुष्टयाख्यास्तिस्रःसंज्ञाःतेषुस्थानेषुयथाभिहितेषुयथानिर्दिष्टेषुकीटनरांबुचराःपशवश्चराशयो बलाढ्याभवंति । तद्यथा कीटोवृश्चिकःसप्तमेस्थानेबली नरःनृराशयो मिथुनकन्यातुलाधन्विपूर्वार्धकुंभाः एतेलग्नेस्थिताबलिनः । अंबुचरा जलचरराशयः कर्कटमीनमकरपरार्द्धास्तेचतुर्थस्थानेबलिनः । पशवश्चतुष्पदाः मेषवृषसिंहधन्विपरार्द्धा मकरपूर्वार्द्धास्तेदशमस्थाबलिनः । तथाचभगवान्गार्गिः। नृयुक्तुलाघटः कन्यापूर्वमर्द्धं चधन्विनः। लग्नस्थाबलिनोज्ञेयाएतेहिनरराशयः॥ चतुर्थेकर्कटोमीनोमकरार्द्धंच पश्चिमम्।विज्ञेयाबलिनोनित्यमेतेहिजलराशयः ॥ सप्तमेवृश्चिकःकीटोबलवान्परिकीर्तितः । धन्व्यंतार्द्धाजगोसिंहाबलिनः खे चतुष्पदाः ॥ अत्रार्द्धशब्देनमकरपूर्वार्द्धमपिगृह्यतइति ॥ १७ ॥

केंद्रात्परंपणफरंपरतश्चसर्वमापोक्लिमंहिबुकमंबुसुखंचवेश्म ॥
जामित्रमस्तभवनंसुतभंत्रिकोणंमेषूरणंदशममत्रचकर्मविद्यात् १८

अधुनापरिशिष्टस्थानानांसंज्ञांतराणिवसंततिलकेनाह॥केंद्रादिति । सर्वस्मात्केंद्राद्वितीयस्थानंपणफरम् तेनद्वितीयपंचमाष्टमैकादशस्थानानांपणफरसंज्ञा।परतश्चसर्वमापोक्लिमम् सर्वस्मात्पणफरात्परंसर्वंस्थानमापोक्लिमं तेनतृतीयषष्ठनवमद्वादशस्थानानामापोक्लिममितिसंज्ञा । हिबुकमंबुसुखंचवेश्म वेश्मशब्दोगृहपर्यायः वेश्मेतिचतुर्थस्यप्राक्संज्ञाभिहितातस्यैवहिबुकसंज्ञा अंबुसंज्ञा सुखसंज्ञाच।जामित्रमस्तभवनम् । अस्तभवनंसप्तमस्थानम्।यतःसर्वएवग्रहाउदयराशेः सप्तमराशावस्तंयांति तदेवास्तभवनंजामित्रम् । सुतभंत्रिकोणम् सुतभंपंचमस्थानं त्रिकोणसंज्ञम् मेषूरणंदशमं दशमस्थानंमेषूरणसंज्ञंच अत्रास्मिन्दशमेस्थानेकर्मेत्यपरांसंज्ञांविद्यात् जानीयात् ॥ १८ ॥

होरास्वामिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाकेंद्रस्थाद्विपदादयोह्निनिशिचप्राप्तेचसंध्याद्वये ॥पूर्वार्द्धेविषयादयःकृतगुणामानं प्रतीपंचतद्दुश्चिक्यंसहजंतपश्चनवमंत्र्याद्यंत्रिकोणंचतत् ॥१९ ॥

अथ होरादीनांराशीनांबलंव्यवहारार्थंप्रमाणंचशार्दूलविक्रीडितेनाह ॥ होरेति। होरालग्नंतत्स्वामिनातत्पतिनावीक्षितादृष्टावीर्योत्कटाबलवतीभवति। तथातेनै-वयुतासंयुताबलवती भवति। तथा गुरुणाजीवेनवीक्षितायुताचबलवती भ-वति ज्ञेनबुधेनवीक्षितायुताच बलवतीभवति। नान्यैश्चेति। अन्यैर्ग्रहैःस्वामि-गुरुज्ञवर्जितैः दृष्टायुतावाबलवतीनभवति । अथ यद्युक्तानुक्तैर्मिश्रैर्युतदृष्टा भवति तदामध्यबला अर्थादेवस्वामिगुरुज्ञवर्जमन्यैर्युतदृष्टाबलहीनाभवति। तथाच बादरायणः। जीवस्वनाथशशिजैर्युतदृष्टाबलवतीभवतिहोरा। शेषैर्ब-लहीनास्यादेवंमिश्रैस्तुमध्यबला ॥बलहीनायदिसर्वैर्नवीक्षितानैवयुक्तावा॥केंद्र-स्थाइति।वीर्योत्कटाइत्यनुवर्त्तते अत्रादिशब्दोलुप्तोद्रष्टव्यः। केंद्रस्थाः सर्वएवरा-शयोबलिनोभवंति पणफरस्थामध्यबलाः आपोक्लिमस्थाहीनबलाः।अत्रकेचित् केन्द्रपणफरापोक्लिमस्थानां द्विपदचतुष्पदकीटानांयथाक्रमंबलवत्त्वंव्याचक्षते। तदयुक्तम्। यस्माद्बादरायणः केंद्रस्थातिबलाः स्युर्मध्यबलाः पणफराश्रिताज्ञे-याः।आपोक्लिमगाः सर्वेहीनबलाराशयः कथिताइति। द्विपदादयोह्निनिशिच प्रातेचसंध्याद्वयइति। वीर्योत्कटाइत्यनुवर्त्तते द्विपदादयोद्विपदचतुष्पदकीटाः यथाक्रममह्निनिशिचप्रातेचसंध्याद्वयेवीर्योत्कटाभवंति।अह्निदिनेद्विपदाबलिनः निशिरात्रौ चतुष्पदाः संध्याद्वयेकीटाः अत्रनकेवलंवृश्चिकः यावदाप्याः सर्वे कीटग्रहणेनज्ञेयाः। अत्रचश्रीदेवकीर्तिः मिथुनतुलकुंभकन्यादिवाबलाधन्विन-श्चपूर्वार्धम्।अजवृषसिंहारात्रौमृगहययोः पूर्वपश्चार्द्धे।वृश्चिकमीनकुलीरामकरां-त्यार्द्धंचसंध्यायामिति।पूर्वार्द्धेविषयादयः कृतगुणाइति विषयाइन्द्रियाणिता निपंच तदादयः पंचषट्सप्ताष्टनवदशयावत् एतेसर्वएवकृतगुणाश्चतुर्गुणिताः पूर्वार्द्धेमानम्। कस्य। प्रकृतत्वाद्भचक्रस्य पूर्वार्द्धेप्रथमराशिषट्केइत्यर्थः। प्रती-पंचतत् यदेवचक्रपूर्वार्द्धे मेषादीनांराशीनां षण्णांप्रमाणंतदेव प्रतीपंविपर्यस्तं तुलादिषुषट्सुमानम्।तद्यथा विषयादयः५। ६।७। ८। ९। १० एते चतुर्गुणिता जाताः २०।२४।२८।३२।३६।४०एतेप्रमाणंमेषादीनांव्यत्ययाच्चतुलादीनामिति। तथाचसत्यः।चतुरुत्तरोत्तराःस्युर्विंशतिभागाभवंतिमेषाद्ये।मानमिहार्द्धेपूर्वेमीना-द्येचोत्क्रमादर्द्धे॥भागव्यवहारश्चक्षेत्रेभागेनैकेनकालेदशचषकाभवंति। यस्माद्या कलाक्षेत्रेसाकालेप्राणइति। यस्माद्भट्टब्रह्मगुप्तेनोक्तम् ॥ लंकासमपश्चिमगंप्राणे-नकलांभमंडलंभ्रमतीति। एवमेतेभागादशगुणिताश्चषकाभवंति।तत्रैतज्जातम् कालेयाघटिकासाषष्ट्यधिकेनशतत्रयेणगुणिताप्राणाभवंति क्षेत्रेचताएवविलि प्तास्तासांषष्ट्याभागमपहृत्यषड्भागाःक्षेत्रेभवंति एवंमेषादीनांप्राणभागादश-गुणिताश्चषकाभवंति तेनचषकशतद्वयंमेषमीनयोःप्रमाणम् एवंचत्वारिंशदधि-कंशतद्वयंवृषकुंभयोः ॥ शतद्वयमशीत्याधिकंमिथुनमकरयोः शतत्रयंविंशत्य-

धिकंकर्कटधनुषोः शतत्रयंषष्ट्यधिकंसिंहवृश्चिकयोः शतचतुष्टयंकन्यातुलयोः एतएवचषकादशविभक्ताभागत्वेनपरिकल्पिताः यतःक्षेत्रेदशभिश्चषकैर्भागोभवति । ननुचरदलवशात्प्रतिदेशमननुरूपेषुराश्युदयेषुगणितस्कंधसिद्धेषुकिमर्थमेकरूपंतदुदयप्रमाणंदर्शितमाचार्येण । अत्रोच्यते । नष्टचिंतादिष्वर्थपरिज्ञानायपुरुषावयवानां ह्रस्वदीर्घत्वज्ञापनायोपयुज्यते । तथाचयवनेश्वरः । आद्यंतराशेरुदयप्रमाणंद्वौद्वौमुहूर्तौनियतंप्रदिष्टौ।क्रमोत्क्रमाभ्यामधिपंचमंस्याचक्रार्द्धयोर्विद्ध्युदयप्रमाणम्॥एवंप्रमाणानिगृहाणिविद्ध्वाह्रस्वानिमध्यानितथायतानि।चक्रांगभेदैः सदृशीकृतानिमार्गप्रमाणानिविकल्पयीत । अंगविभागकल्पनंवक्ष्यति कादिविलग्नविभक्तभगात्रइति । तत्रयस्मिन्नंगेदीर्घराशिर्भवति दीर्घाधिपोवाग्रहस्तदंगंदीर्घंभवति मध्ययोर्मध्यं ह्रस्वयोर्ह्रस्वमिति । तथाचसारावल्याम् ह्रस्वास्तिमिगोजघटामिथुनधनुःकर्किमृगमुखाश्चसमाः । वृश्चिककन्यामृगपतिवणिजोदीर्घाःसमाख्याताः।एभिर्लग्नादिगतैःशीर्षप्रभृतीनिसर्वजंतूनाम् । सदृशानिच जायंतेगगनचरैश्चैवतुल्यानि ॥ तथाचसत्यः॥ दीर्घाधिपतिर्दीर्घेगृहेस्थितोऽवयवदीर्घकृद्भवति । एवमादिष्वर्थेष्वेतैर्विकल्पनाकार्या लग्नोदयनिरूपणागणितस्कंधसिद्धेरेवकार्येति । दुश्चिक्यंसहजमिति । सहजस्यतृतीयस्थानस्यदुश्चिक्यसंज्ञा तपश्चनवममिति नवमस्थानस्यतुतपःसंज्ञा त्र्याद्यंत्रिकोणंचतत् तदेवनवमं स्थानंत्र्याद्यंत्रिकोणं त्रिशब्दआद्योयस्यतत्रिकोणमित्यर्थः । त्रिकोणंचतदेव नवममिति ॥ १९ ॥

रक्तःश्वेतःशुकतनुनिभःपाटलोधूम्रपांडुश्चित्रःकृष्णःकनकसदृशःपिंगलःकर्बुरश्च॥बभ्रुःस्वच्छःप्रथमभवनाद्येषुवर्णाःप्लवत्वं स्वाम्याशाख्यंदिनकरयुताद्भाद्द्वितीयंचवेशिः ॥ २० ॥

अधुनाराशिवर्णान्मंदाक्रांतयाह ॥ रक्तइति । प्रथमभवनंमेषस्तदाद्येषु ॥ मेषादिषुराशिषुयथाक्रममेतेवर्णाः । तत्रमेषोरक्तोलोहितवर्णः । वृषःश्वेतः शुक्लः । मिथुनःशुकतनुनिभः हरितइत्यर्थः । कर्कटःपाटलः पाटलापुष्पवर्णः ईषत्कृष्णरक्तइत्यर्थः।सिंहोधूम्रपांडुरीषच्छुक्लः । कन्याचित्रा नानावर्णेत्यर्थः । तुलाकृष्णः। वृश्चिकः कनकसदृशः सुवर्णवर्णः । धन्वीपिंगलः पीतवर्णः । मकरः कर्बुरः शुक्लकपिलव्यामिश्रवर्णः । कुंभोबभ्रुः नकुलवर्णसदृशः । मीनःस्वच्छवर्णोमत्स्यवर्णइत्यर्थइति।प्रयोजनम् वियोनिजन्मज्ञानेलग्नांशकादिवक्ष्यति प्लवत्वंस्वाम्याशाख्यमिति । स्वामिनआशास्वाम्याशा आशादिक् तत्रप्लवत्वं प्लवस्यभावःप्लवत्वम् । सर्वस्यराशेःस्वाम्याशाख्यंस्थानंप्लवत्वंनिम्नतेत्यर्थः । यथा मेषवृश्चिकयोर्भौमोधिपतिः तस्यदक्षिणादिक्तत्रतौप्लवसंज्ञौ वृषतुलयोः

शुक्रोधिपतिः तस्याग्नेयीदिक् तत्रतौप्लवसंज्ञौ मिथुनकन्ययोर्बुधोधिपतिस्तस्योत्तरादिक् तत्रतौप्लवसंज्ञौ कर्कटस्यचंद्रोधिपतिस्तस्यवायवीदिक् तत्रसप्लवसंज्ञः सिंहस्यादित्योधिपतिस्तस्यपूर्वादिक् तत्रसप्लवसंज्ञः धन्विमीनयोर्जीवोधिपतिस्तस्यैशानीदिक् तत्रतौप्लवसंज्ञौ मकरकुंभयोः सौरोधिपतिस्तस्यपश्चिमादिक् तत्रतौप्लवसंज्ञौ । एवंराशिस्वामिनोया दिक् तद्दिक्प्लवोराशिर्ज्ञेयः । प्रयोजनम् हृतनष्टादिषु तद्दिङ्मुखं चौरादेः । अन्यच्चयात्रायामुपयुज्यते । तथाचसारावल्याम् भवनाधिपतिग्रामप्लवइहयवनैः प्रबंधतः कथितः ॥ तत्प्लवगोविनिहन्यादचिरेणमहीपतिःशत्रूनिति ॥ दिनकरयुताद्वाद्वितीयंचवेशिरिति । दिनकरःसूर्यस्तेनयुतोयोराशिस्तस्माद्वितीयोवेशिसंज्ञः ।प्रयोजनंयात्रायांवक्ष्यति।वेशिर्विलग्नोपगतोयियासोरिति ॥ तथाच ॥ वेशिस्थानेचसद्ग्रहइत्यादि । अत्रसंज्ञाध्यायेयाःसंज्ञाउक्तास्ता द्विप्रकाराः तत्रकाश्चित्संज्ञामात्रप्रयोजनाः ॥ काश्चित्फलनिर्देशप्रयोजनाः ॥ तत्रेमाःसंज्ञामात्रप्रयोजनाः । यथालग्नस्यहोरा । तृतीयस्यदुश्चिक्यम् । चतुर्थस्य हिबुकम् । पंचमस्यत्रिकोणम् । सप्तमस्यद्यूनम् । नवमस्यत्रिकोणसंज्ञा । दशमस्यमेषूरणम् । द्वादशस्यरिःफम् । चतुर्थाष्टमयोश्चतुरस्रसंज्ञा । लग्नचतुर्थसप्तमदशमानांकंटककेंद्रसंज्ञा चतुष्टयसंज्ञाच । तथाद्वितीयपंचमाष्टमैकादशस्थानानांपणफरसंज्ञा । तृतीयषष्ठनवमद्वादशानामापोक्लिमसंज्ञा । एताःसंज्ञामात्रप्रयोजनाः इमाश्चफलनिर्देशप्रयोजनाः । तत्रलग्नस्यतनुसंज्ञाकल्पसंज्ञाच तेनलग्नाच्छरीरवृद्ध्यन्वेषणमारोग्यान्वेषणंचकार्यम् । द्वितीयस्यकुटुंबसंज्ञास्वसंज्ञाच तेनतस्माज्ज्ञातिधनान्वेषणंकार्यम् । तृतीयस्यसहजसंज्ञाविक्रमसंज्ञाच तेनतस्माद्भ्रातृणांपुरुषार्थस्यचान्वेषणंकार्यम् । चतुर्थस्यबंधुसंज्ञा वेश्मसंज्ञासुखसंज्ञाच तेनतस्माद्बंधुसुखगृहाणांचान्वेषणंकार्यम् । पंचमस्यबुद्धिसंज्ञापुत्रसंज्ञाच तेनतस्माद्बुद्धिपुत्रयोरन्वेषणंकार्यम् । षष्ठस्यारिसंज्ञाक्षतसंज्ञाच अरिशब्दःशत्रुवाची क्षतशब्दोव्रणवाची तेनतस्मादरातिव्रणान्वेषणंकार्यम् । सप्तमस्यदारसंज्ञाचित्तोत्थसंज्ञाजामित्रसंज्ञाच दारशब्दोभार्यावाची चित्तोत्थशब्दः कामवाची जामित्रशब्दोविवाहवाची तेनतस्माद्भार्याकामविवाहान्वेषणंकार्यम् । अष्टमस्यमरणरंध्रसंज्ञा मरणंमृत्युः रंध्रशब्दःपापपर्यायः तेनतस्मान्मरणपापान्वेषणंकार्यम् । नवमस्यशुभसंज्ञागुरुसंज्ञातपःसंज्ञाच शुभशब्देनात्रधर्मोज्ञेयः गुरवोमातृपितृपूर्वकाः तपोव्रतादि तेनतस्माद्धर्ममातृपितृपूर्वकाणांगुरूणांतपसांचान्वेषणंकार्यम् । दशमस्यास्पदकर्मसंज्ञा आस्पदशब्दःकर्मवाचीस्थानवाचीवा।कर्मास्पदसंज्ञेसुप्रसिद्धे तेनतस्मात्क्रियाभावान्वेषणंकार्यम् । एकादशस्यभवायसंज्ञा । भावशब्दोत्रविद्यादिगु-

णसंपत्प्राप्तिवाची आयशब्दोर्थवाची तेनतस्मात्तयोरन्वेषणंकार्यम्।व्ययइति द्वादशस्याख्या तेनतस्माद्व्ययान्वेषणंयकार्यम् ।तृतीयषष्ठदशमैकादशस्थानानामुपचयसंज्ञा उपचयकरत्वात्।इदंचतेषामुपचयकरत्वं यदितत्रस्थाःपापाअपिशुभफलप्रदाभवंति । तथाहि । षष्ठस्थानंविनासौम्याःसर्वत्रभावविवृद्धिकराः।षष्ठस्थाः पुनररिहानिंनकुर्वंतिक्षतहानिंच ॥ पापास्तूपचयस्थाभावविवृद्धिंकुर्वाणाअपिषष्ठमुपचयस्थानंप्राप्यतच्चिंत्यदुष्टभावयोररिक्षतयोरपिहानिंकुर्वंति ।यतस्तेषामुपचयकराइत्यन्वर्थसंज्ञा । उपचयस्थास्तएवपापदाभावहानिंकुर्वाणाअपिअष्टमद्वादशस्थानविचिंत्यमनिष्टभावंभावस्यानिष्टत्वात्स्थानस्योपचयात्मकत्वाद्वृद्धिंप्रापयंति।तथाचश्रीदेवकीर्तिः।सौम्याः षष्ठेपापास्तन्वर्थसुखारिधर्मधीद्युनगाः।कुर्युर्भावविपत्तिंशेषोपगताश्चतद्वृद्धिमिति एतद्विशेषवचनंविनासर्वत्रोपतिष्ठतइति।२०॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौराशिप्रभेदोनामप्रथमोऽध्यायः ॥ १ ॥

कालात्मादिनकृन्मनस्तुहिनगुःसत्त्वंकुजोज्ञोवचोजीवोज्ञान-
सुखेसितश्चमदनोदुःखंदिनेशात्मजः ॥राजानौरविशीतगूक्षि-
तिसुतोनेताकुमारोबुधःसूरिर्दानवपूजितश्चसचिवौप्रेष्यःसह-
स्रांशुजः ॥ १ ॥

अथातोग्रहयोनिप्रभेदाध्यायोव्याख्यायते । तत्रचराचरंजगद्ग्रहमयमेवप्राक्कालाख्यस्यपुरुषस्यकालांगानीत्येवंमेषादिनाराशिनक्षत्रमयोंगविभागःप्रदर्शितः तत्प्रदर्शनेनग्रहमयएवासौप्रदर्शितोभवति यतोराशिस्वामिनोग्रहाएव अधुना तस्यात्मादीन्भावान्ग्रहमयानेवजगत्पालकांस्तथाराजादीन्ग्रहमयानेवशार्दूलविक्रीडितेनाह॥कालात्मादिनकृदिति।कालस्यात्माकालात्मा दिनकृत्सूर्यः। तस्यैवतुहिनगुश्चंद्रोमनः तुहिनेनहिमेनसदृशाःशीतलाः गावोरश्मयोयस्यसतुहिनगुः । सत्वंकुजोभौमः ।सत्वास्यलक्षणम् अधिकारकरंसत्वंवासनाभ्युदयागमे। सत्वशब्दोत्रशौर्यपर्यायः यच्चासिंहादीनामस्ति । तथाच एकाकिनिवनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्वश्रयान्मृगपतौराजेतिगिरःपरिणमंति ॥ उत्कृष्टतरस्वभावेनेत्यर्थः। ज्ञोबुधोवचोगिरः । जीवोबृहस्पतिःज्ञानसुखे ज्ञानंचसुखंचज्ञानसुखे सितःशुक्रोमदनःकामः । दिनस्येशोदिनेशःसूर्यस्तस्यात्मजः पुत्रःशनैश्चरोदुःखम् । अत्रकालग्रहणंकालस्यसर्वगतत्वप्रदर्शनार्थम् । अत्रनकेवलंकालपुरुषस्यमेषाद्याराशयःशिरः प्रभृत्यंगविभागेनस्थिताःयावदादित्यादयश्चात्मविभागेनसर्वस्यजगतःस्थिताः । प्रयोजनम् पीडितेग्रहे देहवतोपितदंगभावात्मगुणपीडनंवक्तव्यंपुष्टेपुष्टिरिति । नकेवलंयावज्जन्मनिबलवद्भिर्ग्रहैरेतए-

भावाआत्मादयःशुभाभवंतिदुर्बलैर्दुर्बलाः किंतुसौरस्यविपरीतम् । तथाचसारावल्याम्॥आत्मादयोगगनगैर्बलिभिर्बलवत्तराः । दुर्बलैर्दुर्बलाज्ञेयाविपरीतंशनेः स्मृतमिति । राजानावित्यादि।रविरादित्यःशीतगुश्चंद्रःएतौराजानौनृपौ क्षितिर्भूमिरस्याःसुतःपुत्रोंगारकःसनेतासेनापतिः कुमारोबुधः कुमारोयुवराजः राजपुत्रइतिकेचित्।सूरिर्बृहस्पतिः दानवपूजितः शुक्रः एतौसचिवौमंत्रिणौ सहस्रांशुःसूर्यस्तस्माज्जातःशनैश्चरः सप्रेष्योदासः । ननुजगत्पालनकरणेशनैश्चरः प्रेष्यः किमत्रोच्यते प्रेष्योपिस्वकर्मणां पालकएव । प्रयोजनं जन्मनिप्रश्नकाले वाबलवानुपचयस्थोग्रहोभवति तदुक्तोराजादिकस्तस्यकार्यसाधकोभवति अन्यथाहानिकरः ॥ १ ॥

हेलिःसूर्यश्चंद्रमाःशीतरश्मिर्हैम्नाविज्ज्ञोबोधनश्चेंदुपुत्रः॥
आरोवक्रःक्रूरदृक्चावनेयःकोणोमंदःसूर्यपुत्रोसितश्च ॥ २ ॥

अधुनाव्यवहारार्थंसूर्यचंद्रबुधांगारकशनैश्चराणांसंज्ञाःशालिन्याह॥हेलिरिति। सूर्यआदित्योहेलिसंज्ञः चंद्रमाःशीतरश्मिसंज्ञः शीतारश्मयःकिरणायस्यसः । इंदुपुत्रोबुधः सहैम्नाविज्ज्ञोबोधनः एतास्तस्यसंज्ञाःअवनिर्भूस्तस्यापत्यमावनेयो भौमः सआरःवक्रःक्रूरदृक् एताःभौमस्यसंज्ञाः सूर्यपुत्रःसौरः कोणःमंदः असितः एताःशनैश्चरस्यसंज्ञाः ॥ २ ॥

जीवोंगिराःसुरगुरुर्वचसांपतीज्यःशुक्रोभृगुर्भृगुसुतःसितआस्फुजिच्च॥राहुस्तमोगुरसुरश्चशिखीतिकेतुःपर्यायमन्यमुपलभ्यवदेच्चलोकात् ॥ ३ ॥

अधुनागुरुशुक्रराहुकेतूनांसंज्ञावसंततिलकेनाह ॥ जीवइति । जीवोबृहस्पतिः सएवांगिराः सुरगुरुः सुरादेवास्तेषांगुरुः वचसांपतिः तथाइज्यः पूज्यः देवानाम् एताबृहस्पतेःसंज्ञाः । शुक्रोभार्गवः सएवभृगुः भृगुसुतः सितः आस्फुजित् चशब्दःसमुच्चयार्थः एताः शुक्रस्यसंज्ञाः । राहुः स्वर्भानुः सएवतमः अगुः नविद्यंतेगावोरश्मयोयस्यसः अरश्मिरित्यर्थः असुरोदैत्यः एताराहोःसंज्ञाः॥ शिखीतिकेतुः केतोःशिखीतिसंज्ञा शिखाविद्यतेयस्यसशिखी अन्यंपर्यायं लोकादन्यशास्त्रादुपलभ्यवदेत्ब्रूयात् । यथा । रविस्तीक्ष्णांशुर्दिवाकरोभास्वांस्तीक्ष्णरश्मिर्भानुर्विवस्वानित्यादिकाःसूर्यस्य । शशांकस्तुहिनगुर्मृगांकःशशीनिशाकरोनक्षत्रपतिरित्याद्याश्चंद्रस्य । कुजोलोहितोभौमःक्ष्मातनयइत्याद्या भौमस्य । सौम्योरौहिणेयश्चांद्रिर्मृगांकतनयइंदुज इत्याद्याबुधस्य । सूरिःसुरे-

योवाक्पतिर्देवपुरोहितइंद्रमंत्रीत्याद्याःगुरोः । भार्गवउशनादैत्येज्योऽसुरगुरुःदैत्यार्चिगित्याद्याःशुक्रस्य । यमोरविजःपातंगिश्छायासुतइत्याद्याःसौरस्य। सैंहिकेयःस्वर्भानुर्दानवोमृतचौरोविधुंतदइत्याद्याराहोरिति ॥ ३ ॥

रक्तश्यामोभास्करोगौरइंदुर्नात्युच्चांगोरक्तगौरश्चवक्रः ॥
दूर्वाश्यामोज्ञोगुरुर्गौरगात्रःश्यामःशुक्रोभास्करिःकृष्णदेहः ॥४॥

अधुनाग्रहवर्णाञ्छालिन्याह ॥ रक्तश्यामइति । रक्तश्चासौश्यामः पाटलपुष्पवर्णइत्यर्थः । एवंविधोभास्करआदित्यः । इंदुश्चंद्रोगौरः श्वेतवर्णप्रायः । वक्रोंगारकःसनात्युच्चोनातिदीर्घोरक्तगौरःपद्मपत्राभः । ज्ञोबुधःसदूर्वाश्यामः शाद्वलवर्णः । गुरुर्बृहस्पतिःसगौरगात्रोगौरशरीरः । शुक्रःश्यामवर्णोनातिगौरोनातिकृष्णः । भास्करिःसौरिःसकृष्णदेहोऽसितशरीरः।वर्णप्रयोजनं सर्वग्रहेषुयोबलवांस्तद्वर्णस्तत्कालजातोभवति प्रश्नकालेचौरादेरपि ॥ ४ ॥

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासितावह्न्यंब्वग्निजकेशवेंद्रशचिकाः सूर्यादिनाथाःक्रमात्॥प्रागाद्यारविशुक्रलोहिततमःसौरेंदुवित्सूरयःक्षीणेंद्वर्कमहीसुतार्कतनयाःपापाबुधस्तैर्युतः ५

अधुनाग्रहाणांवर्णस्वाम्यंग्रहदेवतास्वदिक्स्वाम्यं सौम्यपापत्वंचशार्दूलविक्रीडितेनाह॥वर्णाइति । ताम्रादयोवर्णाःसूर्यादिग्रहनाथाः सूर्यादयोग्रहनाथाः स्वामिनोयेषांते ताम्रवर्णस्यादित्योनाथःस्वामी सितस्यश्वेतस्यचंद्रःअतिरक्तस्यातिलोहितस्यभौमः हरितस्यशुकवर्णस्यबुधः विशेषणआसमंतात्पीतोव्यापीतस्तस्य हरिद्रासदृशस्यजीवः चित्रस्यनानावर्णस्यशुक्रः असितस्यकृष्णवर्णस्यसौरिः । प्रयोजनम् हृतनष्टादिद्रव्यवर्णज्ञानंजन्मनिप्रश्नकालेचोक्तद्रव्यलाभोन्यथाहानिः ग्रहपूजायांतद्वर्णकुसुमपूजा । तथाचयाज्ञवल्क्यः ॥ वर्णैर्मंडलकेषुचेति । वह्नीत्यादि । सूर्यादिनाथाइत्यनुवर्तते । सूर्यादीनांनाथाः सूर्यादिनाथाः आदित्यस्यवह्निरग्निर्नाथःस्वामी चंद्रमसोंबुजलम् भौमस्याग्निजःकुमारः स्वामिकार्तिकेयइत्यर्थः । बुधस्यकेशवोविष्णुः । गुरोरिंद्रःशतक्रतुः । शुक्रस्यशचींद्राणी । सौरस्यकः प्रजापतिर्ब्रह्मेत्यर्थः । प्रयोजनम् ग्रहपूजायां ग्रहोक्तदेवताः पूज्याः। तथाचयवनेश्वरः।देवाग्रहाणांजलवह्निविष्णुप्रजापतिस्कंदमहेंद्रदेवीं । चंद्रार्कचांद्यर्कजभौमजीवशुक्रांश्चयज्ञेषुयजेतशश्वत्।तथाचौरनामानयने बलवद्ग्रहोक्तदेवतापर्यायनाम।तथाचयात्रायांग्रहदेवतांसंपूज्यतद्दिशंयायात् । तथाचसारावल्याम्॥ताम्रसितरक्तहारितकपीतविचित्रासिताइनादीनाम्।पावक-

जलगुहकेशवशक्रशचीविधसःपतयः ॥ पूर्वादिग्रहदेवांस्तन्मंत्रैःसमभिपूज्यतामाशाम् । कनकगजवाहनादीन्प्राप्नोतिनृपोरितः शीघ्रम् ॥ प्रागाद्याइति।प्रागाद्याः पूर्वप्रथमादिशस्तासांपूर्वादीनांरव्यादयोनाथाः तत्रपूर्वस्यांदिशिरविरादित्योधिपतिः पूर्वदक्षिणस्यांशुक्रः दक्षिणस्यांलोहितोंगारकः दक्षिणपश्चिमायांतमो राहुः पश्चिमायांसौरिःशनैश्चरः पश्चिमोत्तरस्यामिंदुश्चंद्रः उत्तरस्यांवित्बुधः उत्तरपूर्वस्यांसूरिर्बृहस्पतिः । प्रयोजनम् केंद्रस्थेग्रहेसूतिकागृहद्वारज्ञानंहृतनष्टादिषुचौरादेर्गमनंच । क्षीणेंद्वर्केति । क्षीणश्चासाविंदुश्चक्षीणेंदुः कृष्णाष्टम्यर्द्धाच्छुक्लाष्टम्यर्द्धंयावत्क्षीणश्चंद्रःपरतःपूर्ण आयुर्दायविधौकृष्णपक्षत्रयोदश्यंतात्प्रभृतियावदमावास्यांतेसूर्यमंडलान्नोद्गतस्तावत्क्षीणइति । यस्माद्यवनेश्वरश्चंद्रस्यपापत्वंनकदाचिदपीच्छतितद्वाक्यम् मासेतुशुक्लप्रतिपत्प्रवृत्तेराद्येशशीमध्यबलोदशाहे । श्रेष्ठोद्वितीयेल्पबलस्तृतीयेसौम्यैस्तुदृष्टोबलवान्सदैव ॥ तथाच क्रूरग्रहोर्कः कुजसूर्यजौचपापौशुभाः शुक्रशशांकजीवाः । सौम्यस्तुसौम्योव्यतिमिश्रितोन्यैर्वर्गैस्तुतुल्यप्रकृतित्वमेतीति।तस्मादेतावत्क्षीणइति ॥अर्क आदित्यःमहीसुतोंगारकः अर्कतनयःसौरिः एतेसदैवपापाः बुधस्तैर्युतस्तेषामेकतमेनयुक्तःपापएव सौम्याःशेषाः।शुक्लपक्षाष्टम्यर्द्धात्कृष्णपक्षाष्टम्यर्द्धंयावत्चंद्रःसौम्यः बुधः पापवियुतःसौम्यएव जीवशुक्रौसदैवसौम्याविति । प्रयोजनम् पापसौम्यग्रहबलाज्जातः पापात्मकःसौम्यस्वभावश्चभवति ॥ ५ ॥

बुधसूर्यसुतौनपुंसकाख्यौशशिशुक्रौयुवतीनराश्चशेषाः ॥
शिखिभूखपयोमरुद्गणानांवशिनोभूमिसुतादयःक्रमेण ॥ ६ ॥

अधुनाग्रहाणांप्रकृतिविभागंमहाभूताधिपत्यंचौपच्छंदसिकेनाह । बुधसूर्यसुताविति । बुधश्चांद्रिःसूर्यसुतः शनिः एतौनपुंसकाख्यौनपुंसकनामानौ शशी चंद्रः शुक्रोभार्गवएतौद्वौयुवतिसंज्ञौ । शेषारविजीवभौमानराःपुरुषसंज्ञाःपुरुषनामानः । प्रयोजनं जन्मनिर्निचितायांहृतनष्टादिषुबलवंतः स्वपक्षमेवकुर्वंति एषामुपतापेतदाश्रितानामुपतापः । शिखिभूखपयोमरुद्गणानामिति शिख्यादीनांपंचानांमहाभूतानांपंचग्रहाभूमिसुतादयःक्रमेणवशिनः । तद्यथा शिखिनोग्नेर्भूमिसुतोंगारकोवशीभौमोग्नेः स्वामीत्यर्थः । एवंभूमेर्बुधः । खस्याकाशस्य जीवः । पयसोंऽभसःशुक्रः । मरुतोवायोःशनैश्चरः । गणग्रहणमत्रवृत्तपूरणार्थं । नन्वादित्यचंद्रयोःकस्मान्नोक्तमित्यत्रोच्यते । तयोः पूर्वमेवोक्तं वह्न्यंब्विति तावेवप्रसिद्धौ । प्रयोजनम् स्वदशायांमहाभूतकृतांछायांव्यंजयंति । वक्ष्यतिच छायांमहाभूतकृतांचसर्वइति ॥ ६ ॥

विप्रादितःशुक्रगुरूकुजार्कौशशीबुधश्चेत्यसितोंऽत्यजानाम् ॥
चंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमंसत्वरजस्तमांसि ॥ ७ ॥

अधुनाग्रहाणांब्राह्मणादिवर्णाधिपत्यंगुणविभागंचोपजातिकयाह विप्रादित इति।विप्रादितोब्राह्मणादिवर्णचतुष्टयस्यस्वामिनोग्रहाअधिपतयःशुक्रोभार्गवोगुरुर्बृहस्पतिरेतौद्वौब्राह्मणानामधिपती कुजोभौमोऽर्कआदित्यः एतौद्वौक्षत्रियाणां शशीचंद्रोवैश्यानां शूद्राणां बुधःअसितःशनैश्चरोंऽत्यजानां वर्णप्रतिलोमभवानां चांडालमागधनिषादादीनाम् । प्रयोजनम् हृतनष्टादिषुग्रहबलाच्चौरादीनांग्रहोक्तवर्णप्रभावः एषामुपघातेतद्वर्णोपघातः । तथाचसत्यः ॥गुरुशुक्रौरविरक्तौचंद्रः सौम्यःशनैश्चरश्चेति । विप्रक्षत्रियविट्शूद्रसंकराणांप्रभुत्वकराः । अजयेजयेथतुष्टावभीतौवित्तनाशनेलाभे । तेभ्यस्तेभ्यः कुर्युर्गुणांश्चदोषांश्चपक्षांस्तान् । चंद्रार्कजीवाइत्यादि । चंद्रःशशी अर्कआदित्यः जीवोबृहस्पतिः एतेसत्वसंज्ञाः । ज्ञो बुधः सितः शुक्रः एतौद्वौरजःसंज्ञौ । कुजोंऽगारकः आर्किः सौरः एतौद्वौ तमःसंज्ञौ । एतेयथाक्रमंसत्वादिगुणाधिपतयोग्रहाः । प्रयोजनं सत्वरजस्तमो वात्रिंशांशेयस्यभास्करस्तादृगिति । अन्येपुनर्ग्रहबलाद्वर्णयंति ।तथाचश्रीदेवकीर्तिः ॥ बलवद्भिस्तद्गुणोभवेज्जातइति । अत्राचार्यस्ययवनेश्वरेणसहमतभेदः तेनभौमःसात्विकउक्तः । तथाचतद्वाक्यं सत्वाधिकाभास्करभौमजीवाभृग्वात्मकोराजसिकः शशीच । शनैश्चरस्तामसिकोबुधस्तुसंयोगतोस्माल्लभतेविशेषान्॥ आचार्यस्यसत्यवचनमभिमतम्।तथाचसत्यः॥तामसिकौकुजसौरीराजसिकोभार्गवःशशिसुतश्च।जीवशशिभास्कराःसात्विकाग्रहवत्प्रकृतयोनृणाम्॥ एवंयत्रयत्राचार्यस्ययवनेश्वरेणसहमतभेदस्तत्रांगीकृतंसत्यमतमपि ।अथपूर्वमभिहितंसत्वं कुजः । चंद्रार्कजीवाःपुनःकिमित्युक्तम् । उच्यते ।इहगुणवचनःसत्वशब्दस्तत्र शौर्यपर्यायः यःकार्याकार्यप्रवृत्तानांसिंहादीनामप्यस्ति येनएकाकिनोपिवनवासिनः।तथाच एकाकिनिवनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्वस्थितेमृगपतौराजेतिगिरःपरिणमंति ॥ अथगुणस्वरूपं यःसात्विकस्तस्यदयास्थिरत्वंसत्यार्जवंब्राह्मणदेवभक्तिः । रजोधिकःकाव्यकलाक्रतुस्त्रीसंसक्तचित्तःपुरुषोतिशूरः । तमोधिकोवंचयितापरेषांमूर्खोलसः क्रोधपरोतिनिद्रइति ॥ ७ ॥

मधुपिंगलदृक्चतुरस्रतनुःपित्तप्रकृतिःसवितालपकचः ॥
तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्चशशीमृदुवाक्शुभदृक् ॥ ८ ॥

अधुनाचंद्रार्कयोः स्वरूपंतोटकेनाह॥मधुपिंगलदृगिति । मधुवत्पिंगलादृष्टिर्यस्यसः ईषत्कातराक्षः चतुरस्रतनुः प्रसारितभुजद्वयप्रमाणसमोच्छ्रायः पित्त-

प्रकृतिः पित्ताधिकः अल्पकचोविरलकेशः एवंविधः सविताआदित्यः । तनुवृत्ततनुरित्यादि । तन्वीचासौवृत्ताचतनुवृत्तातादृशीतनुर्यस्यसतनुवृत्ततनु । कृशवर्तुलांगइत्यर्थः । बहुवातकफःप्रभूतमारुतश्लेष्मा प्राज्ञोमेधावी मृदुवाक्कोमलभाषी शुभदृक् दर्शनीयाक्षः एवंविधःशशीचंद्रः ॥ ८ ॥

क्रूरदृक्तरुणमूर्तिरुदारःपैत्तिकःसुचपलःकृशमध्यः ॥
श्लिष्टवाक्सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ॥ ९ ॥

अथांगारकबुधयोः स्वरूपंस्वागतयाह ॥क्रूराइति।क्रूरादुष्टादृक्दृष्टिर्यस्यसक्रूरदृगंगारकः सचतरुणमूर्तिः नित्यंयौवनोपेताकारविग्रहः । उदारोदाता पैत्तिकः पित्तबहुलः सुचपलोतीवास्थिरचित्तः कृशमध्यस्तनूदरः एवंविधोऽगारकः श्लिष्टवागित्यादि श्लिष्टवाग्गद्गदभाषी सततहास्यरुचिः नित्यंपरिहासशीलः पित्तमारुतकफप्रकृतिर्दोषत्रयोल्बणस्वभावः एवंविधोज्ञोबुधः ॥ ९ ॥

बृहत्तनुःपिंगलमूर्धजेक्षणोबृहस्पतिःश्रेष्ठमतिःकफात्मकः ॥
भृगुःसुखीकांतवपुःसुलोचनःकफानिलात्मासितवक्रमूर्द्धजः॥१०॥

अथजीवशुक्रयोः स्वरूपंवंशस्थेनाह ॥ बृहत्तनुरिति । बृहत्तनुःस्थूलशरीरःमूर्धजाःकेशाईक्षणे नयनेच पिंगलेकपिलेयस्य । कपिलकेशकातराक्षइत्यर्थः । श्रेष्ठमतिर्धर्मानुगप्रज्ञः कफात्मकःश्लेष्मात्मा एवंविधो बृहस्पतिः । भृगुरित्यादि । सुखीनित्यंसुखासक्तः । कांतवपुर्दर्शनीयशरीरः । सुलोचनःशोभनाक्षः । कफानिलात्माश्लेष्ममारुतप्रकृतिः असितवक्रमूर्द्धजः असिताः कृष्णावक्राः कुटिला मूर्द्धजाः केशाःयस्य । कृष्णकुटिलकेशइत्यर्थः । एवंविधोभृगुःशुक्रः ॥ १० ॥

मंदोलसःकपिलदृक्कृशदीर्घगात्रःस्थूलद्विजःपरुषरोमकचोनिलात्मा ॥ स्नाय्वस्थ्यसृक्त्वगथशुक्रवसेचमज्जामंदार्कचंद्रबुधशुक्रसुरेज्यभौमाः ॥ ११ ॥

अधुनाशनैश्चरस्वरूपंस्नाय्वादिसारत्वंचग्रहाश्रयंवसंततिलकेनाह॥मंदोलसइति। अलसःक्रियास्वपटुःकपिलदृक्पिंगलाक्षः।कृशंदुर्बलं दीर्घमुच्चतरंगात्रंयस्य गात्राणिवासः दुर्बलोर्ध्वदेहः स्थूलद्विजोबृहद्दंतः।परुषरोमकचःरूक्षतनूरुहकेशः अनिलात्मा वातप्रकृतिः एवंविधोमंदःशनैश्चरः । स्नाय्वस्थीत्यादि॥मंदादीनांग्रहाणां स्नाय्वादिसारत्वं स्नाय्वस्थिनीप्रसिद्धार्थेदेहवतांशनैश्चरादित्यौ स्नाय्वस्थिसारौ शनैश्चरःस्नायुसारः आदित्योस्थिसारः । असृग्रुधिरंतंचंद्रमाः । त्वक्चर्मतद्बुधः । अथशब्दआनंतर्यार्थे।शुक्रंरेतः तच्छुक्रः।वसामेदस्तत्सुरेज्योगुरुः।मज्जाअस्थ्यंतर्ग-

तोधातुविशेषःसभौमः । ग्रहाणांस्वरूपज्ञानप्रयोजनम् लग्नवांशपतुल्यतनुःस्यादित्यत्रोपयुज्यते।जन्मकालेयोग्रहोबलवांस्तत्पठितस्वरूपस्तत्कालजातोभवति तद्धातुसारश्च हतनष्टादिषुप्रश्नकालेप्येवंविधाधातुरूपाश्चौरादयः व्याधिप्रश्नेयल्लग्नंयश्चलग्नेनवांशकोवर्ततेतत्स्वामिनोबलवशादभिहितदोषभवापीडा।११।

देवांब्वग्निविहारकोशशयनक्षित्युत्करेशाःक्रमाद्वस्त्रंस्थूलमभुक्तमग्निकहतंमध्यंदृढंस्फाटितम् ॥ ताम्रंस्यान्मणिहेमयुक्तिरजतान्यर्काच्चमुक्तायसीद्रेष्काणैःशिशिरादयःशशुरुचज्ञग्वादिषूद्यत्सुवा ॥ १२ ॥

अधुनाग्रहाणांस्थानवस्त्रद्रव्यतुंप्रभुत्वंशार्दूलविक्रीडितेनाह॥देवांब्वग्नीति। अर्कात्प्रभृतितदादीनांग्रहाणांक्रमाद्देवादीनि स्थानानि तत्रदेवस्थानमादित्यस्य। अंबुस्थानंचंद्रमसः। अग्निस्थानंभौमस्य। विहारस्थानंक्रीडास्थानंबुधस्य। कोशो भांडारागारंतत्स्थानंबृहस्पतेः। शयनस्थानंशुक्रस्य। क्षित्युत्करःअवकरराशिस्तत्स्थानंशनैश्चरस्य। एषांस्थानानामेतईशाःस्वामिनः। प्रयोजनं बलवतिग्रहेग्रहोक्तस्थानेप्रसवज्ञानं हतनष्टादेश्चौरादेः स्थानंद्रव्यस्यच। वस्त्रमित्यादि अर्कादिति सर्वत्रानुवृत्तिः तत्रस्थूलतंतुकृतमादित्यस्यवस्त्रम्। अभुक्तंनवंचंद्रस्य। अग्निनाहतमेकदेशदग्धंभौमस्य।किनांबुनाहतंक्लिन्नंबुधस्य।मध्यंनातिनवंनातिजीर्णंबृहस्पतेः। दृढकालांतरस्थायिशुक्रस्य। स्फाटितंजीर्णंशनैश्चरस्य। प्रयोजनं सूतिकावस्त्रज्ञानेहतनष्टादिचिंतायांचबलवद्ग्रहवशाद्वस्त्रज्ञानम्। ताम्रंस्यादित्यादि। आदित्यस्यताम्रं चंद्रस्यमणयः भौमस्यहेमसुवर्णं बुधस्ययुक्तिः युज्यतइतियुक्तिः रीतिकांस्यादि रजतंरौप्यंबृहस्पतेः स्वस्थानस्थस्यसुवर्णमपि मुक्ताशुक्रस्य अयःकृष्णलोहंसीसत्रपुणीचशनैश्चरस्य। तथातैनवसूक्ष्मजातकेउक्तं अर्कादिताम्रमणिहेमयुक्तिरजतानिमौक्तिकंलोहम्। वक्तव्यंबलवद्भिः स्वस्थानेहेमजीवेपि। तथाचबादरायणः॥ अर्कस्यताम्रंमणयोहिमांशोर्भौमस्यहेमेंदुसुतस्ययुक्तिः।जीवस्यरौप्यंस्वगृहेस्थितस्यतस्यैवहेमोशनसश्चमुक्ता॥तीक्ष्णांशुदेहप्रभवस्यसीसंकृष्णायसंचप्रवदंतितज्ज्ञाः। प्रयोजनं सूतिकागृहेबलवद्ग्रहेद्रव्यसत्ताहतनष्टादिचिंतायांद्रव्यनाशादिपरिज्ञानं तच्छुभदशायांतस्मिन्नुपचयस्थेतदाप्तिः उक्तविपरीतेहानिः। द्रेष्काणैरित्यादि।अत्रशकारादिभिर्गुपर्यंतैर्वर्णैःसंज्ञाद्यैः शनैश्चरप्रभृतीनांगुर्वंतानांवृत्तानुरोधान्निर्देशःकृतः शनैश्चरशुक्ररुधिरचंद्रबुधगुरुषूद्यत्सुलग्नगतेषु शिशिरादयःषडृतवोज्ञेयाः तत्रशकारोपलक्षितशनैश्चरःतस्मिन्नुदयतिलग्नस्थेशिशिरर्तुर्विज्ञेयःशुकारोपलक्षितःशुक्रः।तस्मिन्नुदयतिवसंतः।रुकारोपलक्षितोरुधिरोभौमस्तस्मिन्ग्रीष्मः। चकारोपलक्षितश्चंद्रस्त-

स्मिन्वर्षा । ज्ञोबुधस्तस्मिञ्छरत्।गुकारोपलक्षितोगुरुस्तस्मिन्हेमंतः । आदित्येप्युदयतिग्रीष्मः। तथाचबादरायणः॥ग्रीष्ममथप्रवदंतिकुजार्काविति । द्रेष्काणैरित्यस्यवाइत्यनेनव्यवहितेनसंबंधः। द्रेष्काणैर्वोदयद्भिः शनैश्वरादिसंबंधिभिः शिशिरादयोज्ञेयाः।एतदुक्तंभवति । लग्नेग्रहाभावेशनैश्वरद्रेष्काणेलग्नगतेशिशिरः एवंशुक्रद्रेष्काणेवसंतः भौमद्रेष्काणे ग्रीष्मः रविद्रेष्काणेग्रीष्मएव चंद्रद्रेष्काणेवर्षाः बुधद्रेष्काणेशरत् जीवद्रेष्काणेहेमंतः॥अत्रचमुख्योग्रहोदयेनर्तुनिर्देशस्तदभावेद्रेष्काणेनेतिज्ञातव्यम् । बहूनामुदयेपिद्रेष्काणेनैव केचिद्बहूनामुदयेबलवद्ग्रहेणेतिव्याचक्षते । तथाचमणित्थः॥ब्याद्यैर्लग्नोपगतैर्योबलवांस्तद्ग्रहर्तुनिर्देशइति । तत्रैतज्जातं लग्नेयोग्रहःस्थितस्तदुक्तऋतुर्वाच्यः बहुषुलग्नगतेषुयो बलवान् ग्रहाभावेद्रेष्काणपतेर्ऋतुनिर्देशः । प्रयोजनं नष्टजातकेऋतुनिर्देशो हृतनष्टादिचिंतायांचेति।अत्राचार्येणग्रहाणांशाखाधिपत्यंनोक्तम् । उक्तंचस्वल्पजातके ॥ ऋगथर्वसामयजुषामधिपागुरुसौम्यभौमसिताः । ऋग्वेदाधिपतिर्गुरुः अथर्ववेदाधिपतिःसौम्योबुधः सामवेदाधिपतिःभौमः यजुर्वेदाधिपतिःशुक्रः । प्रयोजनं बलवतिशाखाधिपेब्राह्मणोजातस्तच्छाखापाठकोभवति ब्राह्मणेचौरे जातेशाखाविज्ञानम् अनिष्टस्थानस्थेग्रहेतन्मंत्रैःशांतिरिति ॥ १२ ॥

**त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयंतिचरणाभिवृद्धितः ॥**
**रविजामरेज्यरुधिराः परेचयेक्रमशोभवंतिकिलवीक्षणेधिकाः॥१३**

अथग्रहाणांदृष्टिस्थानानिनिसर्गदृष्टिफलानि चप्रहर्षिण्याह ॥ त्रिदशेति । यस्मिन्स्थानेग्रहाःस्थितास्तस्मात्रिदशादीनिस्थानानिचरणाभिवृद्धितः पादवृद्ध्याऽवलोकयंति ग्रहोयस्मिन्राशौस्थितस्तस्माद्यस्तृतीयोग्रहोदशमश्च तथातृतीयदशमस्थौराशीयौतौपादेनचतुर्थभागदृष्ट्याऽवलोकयांति एवंत्रिकोणस्थौनवपंचमस्थानगतावर्धदृष्ट्या।चतुरस्रेऽष्टमचतुर्थेअष्टमचतुर्थस्थानस्थौपादनदृष्ट्या । सप्तमगं गृहंपरिपूर्णदृष्ट्या।चरणाभिवृद्धितइत्यत्राभिशब्दोवीप्सांद्योतयति चरणवृद्ध्या पादवृद्ध्येत्यर्थः ।यावत्पाददृष्ट्यापश्यन्तितावत्फलंप्रयच्छंति।तथाचस्वल्पजातके॥दशमतृतीयेनवमपंचमेचतुर्थाष्टमेकलत्रंच।पश्यंतिपादवृद्ध्याफलानिचैवंप्रयच्छंति।अर्थादेवग्रहोनुक्तस्थानानिनपश्यतीति।तथाचसारावल्यां सर्व्यंपश्यंतिसदा ग्रहान्ग्रहाश्वरणवृद्धितःसर्वे।त्रिदशत्रिकोणचतुरस्रसप्तमगताःक्रमेणैव।पूर्णंपश्यति रविजस्तृतीयदशमेत्रिकोणमपिजीवः।चतुरस्रंभूमिसुतः सितार्कबुधहिमकराःकलत्रंच॥तथाचयवनेश्वरः।द्वौपश्चिमौषष्ठमथद्वितियंसंस्थानराशेःपरिहृत्यराशीन्। शेषान्ग्रहःपश्यतिसर्वकालमिष्टेषुचैषांविहिताद्दगिष्टा ॥ जामित्रभेदृष्टिफलंसम-

र्धंस्वपादहीनंचतुरस्रयोश्च । त्रिकोणयोर्दृष्टिफलार्धमाहुर्दुश्चिक्यसंज्ञेदशमेच पादम् ॥ रविजामरेज्यरुधिराइति । किलेत्यागमसूचने । चरणाभिवृद्धितइत्यनुवर्तते । एतेरविजादयश्चरणाभिवृद्धितः पादोपचयाद्वीक्षणेदर्शनेक्रमशोधिकफलप्रदाभवंति । रविजःसौरिःसुदर्शनेपादफलप्रदः अमरेज्योबृहस्पतिरर्धफलप्रदः रुधिरोंऽगारकः सपादहीनफलप्रदः अपरेर्कचंद्रबुधशुक्रास्तेवीक्षणेसमग्रफलप्रदाः एतन्नैसर्गिकंग्रहाणांदृष्टिफलंस्थानवशादेतेषांयथास्वंदृष्टिफलमूह्यमेवमेके व्याचक्षते।अपरेत्वाहुः।स्थानफलमेतत्।तेनत्रिदशादिस्थानगतान्ग्रहराशीन्पश्यंतो रविजादयोदर्शनेधिकफलप्रदाभवंति । तद्यथा तृतीयदशमस्थान्ग्रहान्राशीन्वा शनैश्वरःपश्यन्नन्येभ्योग्रहेभ्योधिकफलप्रदोभवति परिपूर्णंपश्यतीत्यर्थः । एवं त्रिकोणस्थान्जीवः चतुरस्रगान्भौमः सप्तमस्थान्सूर्यचंद्रबुधशुक्राः । एतच्चबहुतराणामाचार्याणांमतम् । तथाचभगवान्गार्गिः॥दुश्चिक्यदशगान्सौरिस्त्रिकोणस्थान्बृहस्पतिः । चतुर्थाष्टमगान्भौमःशेषाःसप्तमसंस्थितान् । भवंतिवीक्षणे नित्यमुक्ताधिकफलाग्रहाइति ॥ १३ ॥

अयनक्षणवासरर्तवोमासोर्द्धंचसमाश्चभास्करात् ॥
कटुकलवणतिक्तमिश्रितामधुराम्लौचकषायइत्यपि ॥१४ ॥

अधुनाग्रहाणांकालनिर्देशंरसनिर्देशंचवैतालीयेनाह॥अयनइति । भास्करादादित्यात्प्रभृत्ययनादिकालनिर्देशः तत्रायननिर्देशोभास्करात्सूर्यात् क्षणोमुहूर्तस्तन्निर्देशश्चंद्रात् वासरोदिवसस्तन्निर्देशोभौमात् ऋतुर्मासद्वयात्मकस्तन्निर्देशो बुधात् मासनिर्देशोजीवात् मासार्द्धंपक्षस्तन्निर्देशःशुक्रात् समाःसंवत्सरास्तन्निर्देशःसौरात्। प्रयोजनम् प्रश्नलग्नेयस्यग्रहस्यनवांशकोदयःसग्रहस्तस्मान्नवांशकाद्यावत्संख्येनवांशकेभवतितावत्संख्योऽयनादिकोग्रहोपलक्षितकालशुभाशुभफलपक्तौवाच्यः । अन्येत्वेवंव्याचक्षते । लग्नेयावत्संख्योनवांशकउदितस्तावत्संख्योऽयनादिकालोंशकपतिवशाद्वक्तव्यः । तथाचमणित्थः लग्नांशकपतितुल्यः कालोलग्नोदितांशसमसंख्यः । वक्तव्योरिपुविजयेगर्भाधानेथकार्यसंयोगे ॥ कटुकलवणेत्यादि । भास्करादादित्यात्कटुकादिरसनिर्देशः तत्रादित्यात्सूर्यात्कटुकस्यरसस्यनिर्देशः कटुकंमरीचादि चंद्रात्लवणस्य भौमात्तिक्तस्य तिक्तंलिंबादि । बुधान्मिश्रस्यषड्रसस्य जीवान्मधुरस्यमिष्टस्य शुक्रादम्लस्य सौरात्कषायस्य । प्रयोजनम् आधानकालेयोवलवांस्तदुक्तरसदोहदोगर्भिण्याभवति। तथाचसारावल्याम् । मासितृतीयेस्त्रीणांदोहदकोजायतेवश्यम् । सरसाधिपस्य भावैर्विलग्नयोगादिभिश्चिंत्यः ॥ भोजनाश्रयेचप्रश्नेग्रहोदयेतन्नवांशकोदयेवातदुक्तरसान्वितभोजनज्ञानमिति ॥ १४ ॥

जीवोजीवबुधौसितेंदुतनयौव्यर्काविभौमाःक्रमाद्वींद्वर्काविकु-
जेंद्विनाश्चसुहृदःकेषांचिदेवंमतम्॥सत्योक्तेसुहृदस्त्रिकोणभव-
नात्स्वात्स्वांत्यधीधर्मपाःस्वोच्चायुःसुखपाःस्वलक्षणविधेर्ना-
न्यैर्विरोधादिति ॥ १८ ॥

अधुनामित्रामित्रविधिंशार्दूलविक्रीडितेनाह ॥जीवइति।सूर्यादीनांग्रहाणांक्रमा-
ज्जीवादयःसुहृदः तत्रादित्यस्यसूर्यस्यजीवोबृहस्पतिःसुहृन्मित्रं जीवबुधौगुरु-
सौम्यौचंद्रस्य सितःशुक्रःइंदुतनयोबुधःएतौभौमस्य विगतोर्कःसूर्योयेभ्योग्रहे-
भ्यस्ते सूर्यवर्जिताःसर्वएवबुधस्य विकुजाविगतोंगारकोयेभ्यस्तेभौमरहिताः
सर्वएवबृहस्पतेः वींद्वर्काविगतौचंद्रार्कौयेभ्यस्तेसर्वएवशुक्रस्य विकुजेंद्विनाः कु-
जोभौमइंदुश्चंद्रःइनःसूर्यःएतेविकुजेंद्विनाःसर्वएवसौरस्यशनैश्चरस्य । एवंकेषां-
चिन्मतं नवहूनाम् ।अत्रचतेषांशत्रुमित्रव्यवहारएवेष्टोनोदासीनव्यवहारस्तस्मा-
न्मित्रेभ्योन्येह्यमित्राणीतिकेचिद्यवनेश्वरादयः । तथाचयवनेश्वरः॥रवेर्गुरुर्मित्रम-
तोन्यथान्येगुरोस्तुभौमंपरिहृत्यसर्वे । चांद्रेरनर्काभृगुनंदनस्यत्वर्केंदुवर्जंसुहृदः
प्रदिष्टाः ॥ १ ॥ भौमस्यशुक्रश्शशिजश्चमित्रेइंदोर्बुधंदेवगुरुंचविद्यात् । सौरस्य
मित्राण्यकुजेंदुसूर्याःशेषान्रिपून्विद्धिनृणांचतद्वत् ॥ २ ॥ सत्योक्तइति । सत्यो-
क्तेहोराशास्त्रेस्वत्रिकोणभवनादात्मीयमूलत्रिकोणराशेःस्वांत्यधीधर्मपाः स्वो-
च्चायुःसुखपाश्चतेग्रहस्यसुहृदोभवंति। तत्रत्रिकोणंमूलत्रिकोणंतस्मात्स्वपोद्वितीय-
यराश्यधिपः तस्मादेवांत्यपोद्वादशस्थानाधिपःधीस्थानपःधीस्थानस्य पंच-
मस्याधिपः धर्मपोनवमाधिपः स्वोच्चपोग्रहोक्तस्योच्चस्यस्वामी आयुषोष्टम-
स्थानस्याधिपतिः । सुखपश्चतुर्थस्थानाधिपतिःग्रहोमित्रंभवति स्वलक्षणविधे-
र्विरोधादन्यैरपठितस्थानाधिपतिभिर्ग्रहैःसहनायंमित्रामित्रविभागःकल्पनीयः ।
विरोधादसुहृद्भवंस्वंचतल्लक्षणंस्वलक्षणंस्वलक्षणेविधिःस्वलक्षणविधिःतेनाविरोध
स्तस्मात् । एतदुक्तंभवति।योयंस्वविधिर्मित्रलक्षणविभागःप्रदर्शितःअतोन्यस्था-
नाधिपायेग्रहास्तेग्रहस्यसुहृदोनभवंति । तथाचसत्यः॥सुहृदस्त्रिकोणभवनाद्ग्रहस्य
सुतभेव्ययेथधनभवने । स्वजनेनिधनेधर्मेस्वोच्चेचभवंतिनोशेषाः । स्वजनसंज्ञं
चतुर्थस्थानं ततोद्विराश्यधिपोमित्रसंज्ञः एकराश्यधिपोमध्यमः अनुक्तराश्य-
धिपःशत्रुः । वक्ष्यतिच द्व्येकानुक्तभपान्सुहृत्समरिपून्संचिंत्यनैसर्गिकानिति ।
एकराश्यधिपोमध्यमइति यदुक्तंतथाचंद्रार्काविकराश्यधिपावपिमित्रसंज्ञौभवतः
तयोर्हिराशिद्वयस्याधिपत्याभावात् राशिद्वयस्ययोधिपतिर्ग्रहः सएवोच्चराश्य-
धिपत्वात्त्रिभपत्वंप्राप्नोति तथापिद्विभपएवज्ञातव्यः तस्यस्वराशिव्यतिरेकात्

एतन्मंदबुद्धिव्युत्पादनार्थंस्पष्टतरंव्याख्यायते। तद्यथा आदित्यस्यसिंहस्त्रिकोणंत-स्माद्द्वादशस्थानस्यकर्कटस्यचंद्रमाअधिपतिः सएकराश्यधिपोपिसन् द्विती-यराशेराधिपत्याभावादादित्यस्यमित्रम् सिंहाच्चतुर्थोवृश्चिकः नवमोमेषः त-योर्भौमोऽधिपतिः आदित्यस्योच्चंमेषः तस्याधिपोभौमः मेषस्यसिंहनवम-त्वादादित्यस्यस्वोच्चत्वादेकराशित्वंमेषस्यैकत्वाद्वृश्चिकस्य द्वितीयत्वाद्भौमोद्विरा श्यधिपोजातः तेनादित्यस्यमित्रं सिंहात्पंचमाष्टमौधन्विमीनौतयोरधिपतिर्जी-वः सचोक्तस्थानद्वयस्याधिपतित्वादादित्यस्यमित्रं सिंहाद्द्वितीयैकादशौकन्या-मिथुनौतयोर्बुधः स्वामी तत्रद्वितीयस्थानस्योक्तत्वादेकादशस्यानुक्तत्वात्पठि-तैकराश्यधिपत्वाद्बुधोरवेर्मध्यमः सिंहात्षष्ठसप्तमस्थानेमकरकुंभौ नोक्तौतयोरा-धिपत्यादादित्यस्यशनैश्चरःशत्रुः । सिंहाद्दशमतृतीयेवृषतुले तयोरनुक्तयोः स्थानयोराधिपत्याच्छुक्रआदित्यस्यशत्रुः एवंरवेः । अथचंद्रस्य यथा चंद्र-स्यवृषस्त्रिकोणंस्तस्माच्चतुर्थस्थानंसिंहस्तस्याधिपः सूर्यः सएकराश्यधिपो द्वितीयराशेराधिपत्याभावाच्चंद्रस्यमित्रं वृषाद्द्वितीयोमिथुनःपंचमःकन्या तयोर्बुधोधिपतिः सचोक्तस्थानद्वयस्याधिपत्याच्चंद्रस्यमित्रं वृषात्सप्तमद्वा-दशौवृश्चिकमेषौतयोर्भौमःस्वामी तत्रैकादशस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठि-तैकराश्यधिपत्वाद्भौमश्चंद्रस्यमध्यमः वृषादष्टमैकादशौधन्विमीनौतयोर्गुरुः स्वामीतत्रैकादशस्योक्तत्वात् अष्टमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाज्जीवश्चंद्र-स्यमध्यस्थः चंद्रस्यवृषउच्चः वृषात्षष्ठस्तुलातयोःशुक्रोधिपतिस्तत्रवृषस्योच्च-त्वेनोक्तत्वात्षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्चंद्रस्यशुक्रोमध्यस्थः वृषान्न-वमदशमौमकरकुंभौतयोःस्वामीशनिः तत्रनवमस्योक्तत्वाद्दशमस्यानुक्तत्वात्प-ठितैकराश्यधिपत्वात्सौरःचंद्रस्यमध्यस्थः एवंचंद्रस्य । अथभौमस्य तद्यथा भौमस्यमेषस्त्रिकोणं मेषाच्चतुर्थस्थानस्यकर्कटस्याधिपश्चंद्रः सएकराश्यधिपो-पिसन्द्वितीयराशेराधिपत्याभावाद्भौमस्यमित्रम् ।मेषात्पंचमस्यसिंहस्याधिपःसू-र्यः सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाद्भौमस्यमित्रम् ॥ मेषान्न-वमद्वादशौधन्विमीनौतयोर्जीवोधिपतिः । संचोक्तस्थानद्वयस्याधिपत्याद्भौ-मस्यमित्रम् ॥ मेषात्तृतीयषष्ठौमिथुनकन्येनोक्ते तयोर्बुधस्याधिपत्याद्भौ-मस्यबुधःशत्रुः। मेषाद्द्वितीयसप्तमौवृषतुलेतयोः शुक्रः स्वामी तत्रद्वितीयस्यो-क्तत्वात्सप्तमस्यानुक्तत्वात्पाठितैकराश्याधिपत्वाच्छुक्रोभौमस्यमध्यमः मेषाद्दशमै-कादशौमकरकुंभौतयोः सौरोधिपतिः भौमस्यमकरउच्चः तस्यो-क्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोभौमस्यमध्यमः एवंभौ-मस्य । अथबुधस्य कन्यामूलत्रिकोणंतस्माद्द्वादशस्थानस्यसिंहस्याधिपतिः सूर्यः सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाद्बुधस्यमित्रम् । क-

न्यायाः द्वितीयनवमौतुलवृषौतयोः शुक्रोधिपतिः सचोक्तस्थानद्वयस्याधिपत्वाद्बुधस्यमित्रम् ॥ कन्याया एकादशस्थानस्यकर्कटस्याधिपतिश्चंद्रः तस्यानुक्तत्वाद्बुधस्यशत्रुः । कन्यायाः तृतीयाष्टमौ वृश्चिकमेषौतयोर्भौमोधिपतिः तत्राष्टमस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठितैकराश्यधिपत्वात् भौमोबुधस्यमध्यमः । कन्यायाश्चतुर्थसप्तमौधन्विमीनौतयोर्जीवोधिपतिस्तत्र चतुर्थस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाज्जीवोबुधस्यमध्यमः । कन्यायाः पंचमषष्ठौ मकरकुंभौतयोः सौरोधिपतिस्तत्रपंचमस्योक्तत्वात्षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोबुधस्यमध्यमः एवंबुधस्य । अथगुरोः जीवस्यधन्वीत्रिकोणंतस्मादष्टमस्थानस्यकर्कटस्याधिपतिश्चंद्रः सएकराश्यधिपो पिसन्द्वितीयराशेराधिपत्याभावाज्जीवस्यमित्रं धनुषोनवमस्यसिंहस्याधिपतिः सूर्यः सएकराश्यधिपोपिसन्द्वितीयस्यराशेराधिपत्याभावाज्जीवस्यमित्रम् ॥ धनुषः पंचमद्वादशौमेषवृश्चिकौतयोर्भौमोधिपतिः सचोक्तस्थानस्याधिपत्याज्जीवस्यमित्रं धनुषोद्वितीयतृतीयौमकरकुंभौतयोःसौरोधिपतिस्तत्रद्वितीयस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोजीवस्यमध्यस्थः । धनुषःसप्तमदशमे मिथुनकन्येतयोर्बुधोधिपतिः सचानुक्तस्थानद्वयस्याधिपतित्वाद्गुरोःशत्रुः । धनुषःषष्ठैकादशस्थानेवृषतुलेतयोःशुक्रोधिपतिःस्थानद्वयस्यानुक्तत्वाच्छुक्रोगुरोःशत्रुः एवंजीवस्य । अथशुक्रस्य शुक्रस्यतुला त्रिकोणंतुलायाःनवमद्वादशस्थानेमिथुनकन्येतयोर्बुधोधिपतिः सचोक्तस्थानद्वयस्याधिपतित्वाच्छुक्रस्यमित्रं तुलायाश्चतुर्थपंचमौमकरकुंभौतयोरधिपतिःसौरः सचोक्तस्थानद्वयस्याधिपत्वाच्छुक्रस्यमित्रं तुलायाद्वितीयसप्तमौवृश्चिकमेषौतयोर्भौमोधिपतिः तत्रद्वितीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाद्भौमःशुक्रस्यमध्यस्थःशुक्रस्यमीनउच्चं तुलायास्तृतीयषष्ठौधन्विमीनौतयोर्जीवोधिपतिः तत्रमीनस्योच्चादुक्तत्वाद्धन्विनोऽनुक्तत्वात्पठितैकराश्यधिपत्वाजीवःशुक्रस्यमध्यस्थः । तुलादेकादशःसिंहस्तस्याधिपःसूर्यःसएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावाच्छुक्रस्यार्कःशत्रुः । तुलाकर्कटस्यदशमस्थानस्याधिपश्चंद्रः सएकराश्यधिपोपिद्वितीयराश्याधिपत्याभावाच्छुक्रस्यचंद्रःशत्रुः एवंशुक्रस्य । अथसौरस्य सौरस्य कुंभस्त्रिकोणं कुभात्पंचमाष्टमे मिथुनकन्येतयोर्बुधोधिपतिः सचोक्तस्थानद्वयस्याधिपतित्वात्सौरस्यमित्रं सौरस्योच्चस्तुला । कुंभाच्चतुर्थनवमौवृषतुलौतयोराधिपतिःशुक्रःसचोक्तस्थानद्वयस्याधिपतित्वात्सौरस्यमित्रं । कुंभाद्द्वितीयैकादशौधान्विमनौतयोर्जीवोधिपतिः तत्रद्वितीयस्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरस्यजीवो मध्यस्थः । कुंभात्षष्ठः कर्कटस्तस्याधिपतिश्चंद्रस्तस्यानुक्तत्वात्सौरस्यचंद्रः

शत्रुः । कुंभात्सप्तमः सिंहस्तस्याधिपतिः सूर्यस्तस्यानुक्तत्वात्सौरस्यसूर्यः शत्रुः । कुंभात्तृतीयदशमौमेषवृश्चिकौतयोर्भौमोधिपतिस्तयोरनुक्तत्वाद्भौमः सौरस्यशत्रुरिति ॥ १५ ॥

शत्रूमंदसितौसमश्चशशिजोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौशेषाःसमाःशीतगोः ॥ जीवेंदूष्णकराःकुजस्यसुहृदोज्ञोरिःसितार्कीसमौमित्रेसूर्यसितौबुधस्यहिमगुः शत्रुःसमाश्चापरे॥१६॥ सूरेःसौम्यसितावरीरविसुतोमध्योपरेत्वन्यथासौम्यार्कीसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी॥शुक्रज्ञौसुहृदौसमःसुरगुरुःसौरस्यचान्येरयोयेप्रोक्ताःस्वत्रिकोणभादिषुपुनस्तेमीमयाकीर्तिताः ॥ १७ ॥

अधुनासत्योक्तानेकद्वयेकानुक्तभपान्ग्रहस्यसुहृन्मध्यस्थशत्रूञ्छार्दूलविक्रीडितद्वयेनाह॥शत्रूमंदासितावितिरवेरादित्यस्यमंदः सौरःसितः शुक्रः एतौद्वौशत्रू रिपू शशिजोबुधःसमोमध्यस्थः नशत्रुर्नमित्रमुदासीनइत्यर्थः शेषाग्रहाश्चंद्रांगारकगुरवोमित्राणीति । तीक्ष्णांशुरित्यादिशीतगोश्चंद्रमसः तीक्ष्णांशुःसूर्यः हिमरश्मिजोबुधः एतौद्वौसुहृदौमित्रे शेषाःसमाएवभौमजीवशुक्रसौराः समामध्यस्थाउदासीनाइत्यर्थः । जीवेंदूष्णकराइति । कुजस्यभौमस्यजीवोबृहस्पतिः इंदुश्चंद्रःउष्णकरःसूर्यःएतेसुहृदोमित्राणि ज्ञोबुधः अरिःशत्रुः सितार्कीशुक्रसौरौ समौमध्यस्थाविति । मित्रेसूर्यसिताविति।सूर्योरविःसितः शुक्रः एतौद्वौबुधस्य मित्रेसुहृदौ । हिमगुश्चंद्रमाः शत्रुरारिः अपरेऽन्येभौमगुरुसौराः समामध्यस्था इति।सूरेरित्यादि । सूरेर्बृहस्पतेः सौम्योबुधः सितःशुक्रः एतावरीशत्रू रविसुतः सौरोमध्यस्थः अपरेअन्येरविचंद्रभौमाः अन्यथामित्राणीत्यर्थः।सौम्यार्कीत्यादि। शुक्रस्यसौम्यार्कीबुधसौरौसुहृदौमित्रे कुजोभौमः गुरुर्जीवः एतौद्वौसमौमध्यस्थौ शेषावादित्यचंद्रावरीशत्रू।शुक्रज्ञावित्यादि । सौरस्यशनेःशुक्रज्ञौसितबुधौसुहृदौमित्रे सुरगुरुर्जीवःसमोमध्यस्थः अन्येऽपरेरविशशिभौमाःअरयःशत्रवः । येप्रोक्ताइत्यादि । येमयास्वत्रिकोणभादिषुपूर्वंत्रिकोणभवनात्स्वात्स्वांत्यधीधर्मपाइत्यादिनाग्रंथेनोक्तास्तएवेहप्रविभज्यपुनर्भूयः कीर्तिताः उदाहरणत्वेनप्रदर्शिताइति ॥ १६ ॥ १७ ॥

अन्योन्यस्यधनव्ययायसहजव्यापारबंधुस्थितास्तत्कालंसुहृदःस्वतुंगभवनेप्येकेरयस्त्वन्यथा॥द्व्येकानुक्तभपान्सुहृत्समरिपून्संचिंत्यनैसर्गिकांस्तत्कालेचपुनस्तुतानधिसुहृन्मित्रादिभिःकल्पयेत् ॥ १८ ॥

एवंनैसर्गिकंमित्रामित्रमध्यस्थविभागमुक्त्वाधुनातात्कालिकंमित्रामित्रविभागंशार्दूलविक्रीडितेनाह॥अन्योन्यस्येति । अन्योन्यस्यपरस्परमेतेषुधनादिषुस्थानेषुग्रहस्यग्रहाव्यवस्थितास्तत्कालेजन्मनियात्रायांविवाहेप्रश्नेवा तत्समयेसुहृदो मित्राणिभवंति । धनस्थानंद्वितीयं व्ययस्थानंद्वादशम् आयस्थानंएकादशं सहजस्थानंतृतीयं व्यापारस्थानंकर्माख्यंदशमम् बंधुस्थानंचतुर्थम् एतेषुस्थानेषुयोग्रहः स्थितः सयस्माद्ग्रहाद्व्यवस्थितस्तस्यसुहृन्मित्रंभवति सचतस्यापि यतउक्तमन्योन्यस्येति स्वतुंगभवनेप्येकइति एकेऽन्येपुनराचार्याः ग्रहस्ययस्योच्चेयोग्रःस्थितःसतस्यस्वोच्चस्थितंतत्कालंमित्रमिच्छंति तेचयवनेश्वरादयःतथाचतद्वाक्यं । मूलत्रिकोणाद्धनधर्मबंधुपुत्रव्ययस्थानगताग्रहेंद्राः।तत्कालमेतेसुहृदोभवंतिस्वोच्चेचयोयस्यविकृष्टवीर्यइति॥ एतदप्याचार्यस्यनाभिप्रेतं यस्मादनेनैवस्वल्पजातकेउक्तं तत्कालेचदशायबंधुसहजस्वांत्येषुमित्रंस्थिताइति । अरयस्त्वन्यथेति । अन्यथाअन्येनप्रकारेणग्रहस्यग्रहाव्यवस्थितास्तत्कालेऽरयः शत्रवोभवंति।अन्योन्यमिति।तद्यथा एकराशिगतःपंचमषष्ठसप्तमाष्टमनवमस्थानस्थश्चतत्कालंशत्रुर्ग्रहस्यग्रहोभवति । द्व्येकानुक्तभपानिति।पूर्वमेवदर्शितं द्वितीयभपानेकभपाननुक्तभपांश्चमित्रमध्यस्थशत्रून्नैसर्गिकान् शत्रूमंदसितावित्यादिनाग्रंथेनोक्तान्संचित्यविज्ञायतत्कालेजन्मादौतानेवाधिसुहृन्मित्रादिभिरुपलक्षितान्कल्पयेत्।तत्रधनादीनिमित्रस्थानानितेषुनैसर्गिकसुहृत्स्थितोधिमित्रंभवति । मध्यस्थोमित्रम् । शत्रुर्मध्यस्थइति।धनादिवर्जितेष्वन्येषुस्थितोनिसर्गसुहृन्मध्यस्थोभवति मध्यस्थः शत्रुः शत्रुरधिशत्रुरिति अमुनाग्रहाणांचतुर्विधंबलंभवति स्थानदिक्चेष्टाकालबलाख्यम् ॥ १८ ॥

स्वोच्चसुहृत्स्वत्रिकोणनवांशैःस्थानबलंस्वगृहोपगतैश्च॥
दिक्षुबुधांगिरसौरविभौमौ।सूर्यसुतःसितशीतकरौच ॥ १९ ॥

तत्रतावत्स्थानदिग्बलंदोधकेनाह॥स्वोच्चसुहृदिति । स्वग्रहणंप्रत्येकमभिसंबध्यते । तत्रस्वोच्चेस्थितोग्रहोबलवान्भवति । तात्कालिकस्यसुहृदोमित्रस्यक्षेत्रेस्थितोबलवानेव । स्वत्रिकोणे आत्मीयेमूलत्रिकोणेस्थितः स्वनवांशेस्थितः स्वगृहेस्वराशावुपगतःप्राप्तोबलवानेव । एतेषामन्यतमेव्यवस्थितोग्रहः स्थान-

बलयुक्तो भवति अत्रार्कस्यसिंहस्त्रिकोणं तदेवस्वगृहं चंद्रस्यवृषउच्चःसएव त्रिकोणम् । भौमस्यमेषस्त्रिकोणंतदेवस्वक्षेत्रम् । बुधस्यकन्याउच्चः सैवमूलत्रिकोणंस्वक्षेत्रंच । गुरोर्धन्वीत्रिकोणंतदेवस्वक्षेत्रम् । शुक्रस्यतुलात्रिकोणंतदेवस्वक्षेत्रम् एतेषामाचार्येणविशेषोनोक्तःअस्माभिरन्यहोराशास्त्रादानीयशिष्यहितायेहलिख्यते। तथाचसारावल्यांविंशतिरंशाःसिंहेत्रिकोणमपरेस्वभवनमर्कस्य । उच्चंभागतृतीयंवृषइंदोःस्यात्त्रिकोणमपरेंशाः ॥ द्वादशभागामेषेत्रिकोणमपरेस्वभंतुभौमस्य । उच्चफलंकन्यायांबुधस्यतिथ्यंशकैःसदाचिंत्यम् ॥ परतस्त्रिकोणजातंपंचभिरंशैःस्वराशिजंपरतः । दशभिर्भागैर्जीवस्यत्रिकोणफलंस्वभंपरंचापे । शुक्रस्यतुत्रयोंशास्त्रिकोणमपरेघटेस्वराशिश्च ।कुंभेत्रिकोणनिजभेरविजस्यरवेर्यथासिंहे ॥ एतदार्याचतुष्टयंसुबोधम् । दिक्षुबुधांगिरसावित्यादि प्राच्याद्यासुचतसृषुदिक्षुक्रमाद्बुधादयोबलिनो भवंति तत्रपूर्वस्यांबुधांगिरसौज्ञजीवौबलिनौभवतः ।

| | | |
|---|---|---|
| २ | १ गु. बु. | १२ |
| ३ शु. ४ चं. | | ११ |
| | १० सू. मं. | |
| ५ | श. ७ | ९ |
| ६ | | ८ |

लग्नस्थावित्यर्थः । दक्षिणस्यांरविभौमौसूर्यांगारकौदशमस्थावित्यर्थः। पश्चिमायांसूर्यसुतःशनिः सप्तमस्थइत्यर्थः । उत्तरस्यांसितशीतकरौशुक्रचंद्रौ चतुर्थस्थावित्यर्थः।योग्रहोयत्रबलीसतस्मात्सप्तमस्थानस्थोविबलोभवति मध्येनुपाततऊह्यमितिसर्वत्रेयंपरिभाषा। ग्रहाणामुच्चनीचविभागेराशीनांदिग्बलप्रविभागेपि।तथा चयवनेश्वरः गुर्विंदुजौपूर्वविलग्नसंस्थौनभस्थलस्थौचदिवाकरारौ । सौरोस्तगः शुक्रनिशाकरौतुजलेस्थितावप्र्यबलौभवेतामिति । अप्र्यबलग्रहणादंतरेनुपात एवयुक्तः एतद्ग्रहाणांदिग्बलम् ॥ १९ ॥

उदगयनेरविशीतमयूखौवक्रसमागमगाःपरिशेषाः ॥
विपुलकरायुधिचोत्तरसंस्थाश्चेष्टितवीर्ययुताःपरिकल्प्याः ॥२०॥

अधुनाचेष्टाबलंदोधकेनाह॥उदगयनेइति। मकरादिराशिषट्कमुत्तरमयनं कर्कटादिराशिषट्कंदक्षिणमयनमिति उदगयनेउत्तरायणेरविशीतमयूखौसूर्याचंद्रमसौ बलिनौभवतः। परिशेषाः भौमबुधगुरुसितसौराः वक्रगाविपरीतगतयोबलिनो भवंति।तथा समागमगाश्चंद्रेणसहिताबलिनएव चंद्रेणसहसंयोगोग्रहाणांसमागमशब्दवाच्यःरविणासहाऽस्तमयोभौमादीनांपरस्परंयुद्धं।उक्तंचाचार्यविष्णुचंद्रेण।दिवसकरेणास्तमयःसमागमःशीतरश्मिसहितानां ।कुसुतादीनांयुद्धंनिगद्यतेन्योन्ययुक्तानामिति।विपुलकराइति।विपुलाःकरायेषांतेविपुलकराः विस्तीर्णरश्मयोबलिनोभवंति।शीघ्रकेंद्राद्द्वितीयपदस्थग्रहस्य।विपुलकरत्वंप्रायः संभवति।वक्रासन्नत्वात्।युधिसंग्रामेचोत्तरसंस्थाबलिनएव कुसुतादीनांयुद्धमित्युक्तं तत्रयःउत्तरदि

ग्भागस्थितःसजयीबलक्षवान् उत्तरसंस्थत्वमत्रोपलणार्थंयस्तेजयीसएवबलवान् तत्रैतज्जायिलक्षणं दक्षिणदिक्स्थःपुरुषोविपथुरप्राप्यसन्निवृत्तोणुः । अधिरूढोविकृतोनिष्प्रभोविवर्णश्चयःसजितः॥उक्तविपरीतलक्षणसंपन्नोजयगतोविनिर्दिष्टः । विपुलःस्निग्धोद्युतिमान्दक्षिणादिक्स्थोपिजययुक्तइति एतच्छुक्रस्यप्रायःसंभवति यस्मात्पुलिशाचार्यः सर्वेजयिनउदक्स्थादक्षिणदिक्स्थोजयीशुक्रइति एतच्चेष्टाबलम्।एषामन्यतमेनसंयुक्तश्चेष्टाबलयुक्तोभवति ॥ २० ॥

निशिशशिकुजसौराःसर्वदाज्ञोह्निचान्येबहुलसितगताःस्युः क्रूरसौम्याःक्रमेण॥द्व्ययनदिवसहोरामासपैःकालवीर्यंशरुबुगुशुचसाद्याबृद्धितोवीर्यवंतः ॥ २१ ॥

अधुनाग्रहाणांकालबलंनैसर्गिकबलंचमालिन्याह॥निशीति।शशिकुजसौराश्चंद्रभौमशनयः निशिरात्रौवीर्यवंतोबलिनः । ज्ञोबुधः सर्वदा सर्वस्मिन्कालेनिशि दिनेचबली । अन्येऽपरेरविगुरुसिता अन्हिदिनेबलिनः । क्रूराःपापाःप्रागुक्ताबहुलपक्षेकृष्णपक्षेबलिनः । सौम्याःशुभग्रहाः सितगताःशुक्लपक्षेबलिनः।कृष्णपक्षे चंद्रमाअपिक्रूरोबलवान्भवति । यस्माद्यवनेश्वरः॥मासेतुशुक्लेप्रतिपत्प्रवृत्तेःपूर्वेशशीमध्यबलोदशाहे । श्रेष्ठोद्वितीयेऽल्पबलस्तृतीयेसौम्यैस्तुदृष्टोबलवान्सदैवेति । द्व्ययनेति । द्व्ययनंप्रमाणंयस्यतत्द्व्ययनंवर्षं स्ववर्षे आत्मीयवर्षेयोग्रहोयत्रवर्षेधिपतिः सतत्रबलवान् । स्वदिवसेआत्मीयवासरेस्वहोरायांकालहोरायां तथा स्वमासेयस्मिन्मासेयोऽधिपतिः सतत्रबली द्व्ययनदिवसहोरामासानांयेधिपतयस्तैर्ग्रहैः कालबलमुपलक्षणीयं तेकालबलोपेताइत्यर्थः । केचिद्व्ययनदिवसहोरामासपैरितिपठंति।अन्येस्वदिवससमहोरामासगैरितिपठंति ।एषसापराधःपाठः।एतेषुकालेषु सर्वेएवबलिनोभवंति एतत्ग्रहाणांकालवीर्यमेषामन्यतमेनसंयुक्तः कालबलसंपन्नोभवति । शरुबुगुशुचसाद्याइति। शादयोवर्णाःयेषांशकारआद्यस्ते शाद्याः । शकाराद्यः शनैश्वरः सर्वेभ्योबलहीनः । रुकाराद्योरुधिरोभौमःशनैश्वरातबलवान् । बुकाराद्यो बुधःसभौमाद्बलवान् गुकाराद्यो गुरुः सबुधाद्बली शुकाराद्यःशुक्रःसजीवाद्बली । चकाराद्यश्चंद्रः सशुक्राद्बलीसकाराद्यःसविता सचंद्राद्बलीति । एतद्ग्रहाणांनैसर्गिकंबलम् । यस्मादनेनैवस्वल्पजातकेउक्तं मंदारसौम्यवाक्पतिसितचंद्रार्कायथोत्तरंबलिनः । नैसर्गिकबलमेतद्बलसाम्येस्मादधिकंचिंतेति । यत्रग्रहाणांग्रहयोर्वाबलसाम्यम् । तत्रास्माद्बलाधिक्यमधिवीर्यताज्ञेयेति। अत्राचार्येणचतुःप्रकारस्यग्रहाणांबलस्यफलंनोक्तंतच्चास्माभिःशिष्यहितहेतवेऽ-यशास्त्राल्लिख्यते।तथाचसारावल्याम्॥उच्चबलेनसमेतः

परांविभूतिंग्रहःप्रसाधयति।स्वत्रिकोणबलःपुंसांसाचिव्यंबलपतित्वंच ॥ स्वर्क्षबलेनचसहितःप्रमुदितधनधान्यसंपदाक्रांतम् । मित्रभबलसंयुक्तोजनयतिकीर्त्यान्वितंपुरुषम् । तेजस्विनमतिसुखिनंसुस्थिरविभवंनृपाच्चलब्धधनम् । स्वनवांशकबलयुक्तःकरोतिपुरुषंप्रसिद्धंच सूक्ष्मजातकेउक्तम्।बलवान्मित्रस्वगृहोच्चनवांशेष्वीक्षितःशुभैश्चापि । चंद्रासितौस्त्रीक्षेत्रेपुरुषक्षेत्रोपगाःशेषाइति । तत्रशुभदृष्टस्यफलंतावत् शुभदर्शनबलसहितःपुरुषंकुर्याद्धनान्वितंख्यातम् । सुभगंप्रधानमखिलंसुरूपदेहंचसौम्यंच ॥ पुंस्त्रीभवनबलेनचकरोतिजनपूजितंकलाकुशलम्॥ पुरुषंप्रसन्नचित्तंकल्पंपरलोकभीरुंच ॥ आशाबलसमवेतोनयतिस्वादिशंग्रहेश्वरःपुरुषम्।नीत्वावस्त्रविभूषणवाहनसौख्यान्वितंकुरुते।कंचिद्राज्यंकंचित्पूजांकंचिद्द्रव्यंकंचिद्यशः ॥ ददातिविहगश्चित्रंचेष्टावीर्यसमन्वितः।वक्रिणस्तुमहावीर्याः शुभाराज्यप्रदाग्रहाः॥ पापाव्यसनदाः पुंसांकुर्वंतिचवृथाटनम्।स्वस्थःशरीरसमागमसुखमाहवजयबलेनविदधाति।शुभमतुलंविहगेंद्रोराज्यंचविनिर्जितारातिम्॥ रात्रिदिवाबलपूर्णैर्भूगजलाभेनशौर्यपरिवृद्ध्या ॥ मलिनयतेत्रपक्षंभुनक्तियोनरः प्रकटः । द्विगुणंद्विगुणंदद्युर्वर्षाधिपमासदिवसहोरेशाः ॥ कुर्युर्वृद्ध्यासौख्यंस्वदशासुधनंचकीर्तिंच । पक्षबलाद्विपुनाशंरत्नांबरहस्तिसंपदंदद्युः ॥ स्त्रीकनकभूमिलाभंकीर्तिंचशशांककरधवलाम् । सकलबलभारभरितानिर्मलकरजालभासुराः सततम्।राज्यंग्रहाविदद्युः सौख्यंचमनोरथातीतम् ।आचारसौख्यशुभशौचयुताः सुरूपास्तेजस्विनः कृतविदोद्विजदेवभक्ताः । सद्वस्त्रमाल्यजनभूषणसंप्रियाश्च सौम्यैर्ग्रहैर्बलयुतैःपुरुषाभवंति ॥ लुब्धाः कुकर्मनिरतानिजकार्यनिष्ठाः पापान्विताःसकलहाश्चतमोभिभूताः । क्रूराः शठावधरतामलिनाः कृतघ्नाः पापग्रहैर्बलयुतैः पुरुषाभवंति।।पुंराशिपुंग्रहदृढैर्धीराः संग्रामकांक्षिणोबलिनः। निःस्नेहाः सुकठोराःक्रूरामूर्खाश्चजायंते ॥ युवतिभवनास्थितेषुचमृदवःसंग्रामभीरवःपुरुषाः। जलकुसुमवस्त्रनिरताः सौम्याःकलहाससंयुक्ताइति॥एतत्सर्वंसुगमम् ॥ २१ ॥

इतिभटोत्पलविरचितायांबृहज्जातकविवृतौग्रहयोनिभेदाध्यायोद्वितीयः ॥ २ ॥

**क्रूरग्रहैःसुबलिभिर्विबलैश्चसौम्यैःक्लीबेचतुष्टयगतेतदवेक्षणाद्वा ॥**
**चंद्रोपगद्विरसभागसमानरूपंसत्वंवदेद्यदिभवेत्सवियोनिसंज्ञः ॥१॥**

अथातोवियोनिजन्माध्यायोव्याख्यायते । कःपुनरर्थोवियोनिजन्मेत्युच्यते । विविधवियोनिजन्मनांतिर्यक्पक्षिस्थावरादीनामुत्पत्तिर्वियोनिजन्मेत्युच्यते । तत्रप्रष्टुःसकाशाज्जातककालंप्रश्नकालंवाविज्ञाय वियोनिजन्मनिश्चयज्ञानंभवति तत्तुवसंततिलकेनाह ॥ क्रूरग्रहैः सुबलिभिरिति । चंद्रोपगद्विरसभागसमानरूपमिति । चंद्रमाउपगतोव्यवस्थितोयस्मिन्द्विरसभागेद्वादशभागेतत्समानरूपं

तत्सदृशरूपंसत्वंप्राणिनंवियोनिजन्मानंवदेत् सचद्विरसभागोयदिवियोनिसंज्ञो भवेत् सचंद्राक्रांतोद्वादशभागोयदिवियोनिसंज्ञस्तदैवंवदेन्नान्यथेति। तत्रमेषद्वादशभागेव्यवस्थितेचंद्रमसिमेषाख्यस्य । एवंवृषद्वादशभागेव्यवस्थितेवृषाख्यस्यमहिषादेश्च । कर्कटद्वादशभागेव्यवस्थितेकुलीरादेः । सिंहद्वादशभागेव्यवस्थितेसिंहद्वीपिमृगालमार्जारादिसत्वानांजन्म । वृश्चिकद्वादशभागे व्यवस्थितेसर्पकीटादेः । धनुर्धरद्वादशभागेद्वितीयार्धेव्यवस्थितेऽश्वगर्दभादिजन्म । मकरद्वादशभागेपूर्वार्धेव्यवस्थितेमृगजन्म । अपरेमंडूकादेर्जलचरप्राणिनइच्छंति मीनेमीनस्यैव । किमेतावतैववियोनिजन्मनिश्चयेनेत्याह ॥ क्रूरग्रहैरित्यादि । क्रूरग्रहैरादित्यांगारकशनैश्चरैर्बुधेनचतदेकतमेनयुक्तेनक्षीणेनचंद्रमसाएतैःसुबलिभिः बलयुक्तैः सौम्यैः शुभग्रहैः क्रूरपरिशिष्टैर्विबलैर्वीर्यरहितैः क्वचिशनैश्चरेबुधेवाचतुष्टयगतेकेंद्रस्थे एकोवियोनिजन्मयोगः । तदवेक्षणाद्वा चंद्रमसिप्रदर्शितवियोनिजन्मद्वादशभागेव्यवस्थिते क्रूरैर्बलयुक्तैःसौम्यैर्हीनबलैर्यत्रतत्रावस्थितेनबुधेनशनैश्चरेणवालग्नेदृष्टेवियोनिजन्मज्ञानेद्वितीयोयोगः । अर्थादेवद्विपदद्वादशभागव्यवस्थितेचंद्रमसिपूर्वोक्तयोगाभावेद्विपदजन्म । तथाचसारावल्याम् ॥ क्रूरैःसुबलसमेतैर्विबलैःसौम्यैर्वियोनिभागगते। चंद्रेज्ञशनीकेंद्रेतदीक्षितेचोदयेवियोनिःस्यात् ॥ मेषेशशीतदंशेछागादिप्रसवमाहुराचार्याः।गोमहिषाणांगोंशेनररूपाणांतृतीयेंशे ॥ तत्रचतुर्थे भागेकूर्मादीनांभवेदुदकजानाम्।व्याघ्रादीनांपरतःपरतोज्ञेयंनराणांच ॥वणिगंशे नररूपावृश्चिकभागेतथाभुजंगाद्याः । खरतुरगाद्यानवमेमृगशिखिनांस्यात्तथा दशमे ॥ ज्ञेयाश्चतत्रविविधावृक्षास्तृणजातयश्चित्राः । एकादशेचपुरुषाजल जानानाविधाश्चांत्ये ॥ श्वमार्जारमूषकादीनांसंख्याज्ञानं श्वप्रभृतीनांप्रसवेयावंतोद्वादशांशकालग्ने तावंतिवदेत्प्राज्ञःपुंस्त्रीसंज्ञान्यपत्यानि ॥ १ ॥

पापाबलिनःस्वभागगाःपारक्येविबलाश्चशोभनाः ॥
लग्नंचवियोनिसंज्ञकंदृष्ट्वात्रापिवियोनिमादिशेत् ॥ २ ॥

अथवियोनिजन्मज्ञानेयोगांतरंवैतालीयेनाह॥पापाइति । चंद्रोपगद्विरसभागसमानरूपमित्यनुवर्तते पापाःक्रूराग्रहाःप्रागुक्ताबलिनः सबलाःनकेवलंयावत्स्वभागगाः स्वनवांशस्थाः भागग्रहणेनेहनवांशकएवज्ञातव्यः । शोभनाः सौम्यग्रहाःप्रागुक्ताःपारक्येपरनवांशकेविबलावीर्यरहिताव्यवस्थिताः लग्नंतात्कालिकंचयदिवियोनिसंज्ञकंभवति तदात्राप्यस्मिन्नपियोगेचंद्रोपगद्विरसभागसमानरूपंसत्वंजातमितिवदेत् ॥ २ ॥

क्रियःशिरोवक्रगलोवृषोन्येपादांसकंपृष्ठमुरोथपार्श्वे ॥
कुक्षिस्त्वपानांघ्र्यथमेढ्रमुष्कौस्फिक्पुच्छमित्याहचतुष्पदांगे॥३

अथवियोनावपिचतुष्पदानांप्राधान्येनोपयोगित्वात्तदंगविभागंराश्यात्मकमुपजातिकयाह॥क्रियइति । क्रियोमेषश्चतुष्पदानांशिरस्तदुपलक्षितमित्यर्थः।वृषोवक्रगलोवक्त्रंमुखंगलःकंबलंवृषः अन्येमिथुनाद्योयथाक्रमंपादादि । मिथुनः पादांसकंपादौपूर्वपादावंसौस्कंधौ । पृष्ठंकर्कटःउरोवक्षःसिंहः अथशब्द आनंतर्ये । पार्श्वेपार्श्वद्वयंकन्या कुक्षिद्वयंतुला अपानंगुदोवृश्चिकः अंघ्रीपश्चिमपादौधन्वी अथशब्दःपादपूरणे मेढ्रंलिंगं मुष्कौवृषणौमकरः स्फिचौकुंभः पुच्छंलांगूलंमीनः । इतिशब्दःप्रकारे । केचिच्चतुष्पदांगेराशिविभागमाहुः आहेतिब्रुवंत्याचार्याइतिवाक्याध्याहारः । चतुष्पदग्रहणमुपलक्षणार्थं पक्षिणामप्येवं तेषांपूर्वपादस्थानेपक्षपालीशेषंसामान्यं प्रयोजनम् । राश्युपलक्षितेंगेव्रणोपघातादेर्विज्ञानमिति ॥ ३ ॥

लग्नांशकाद्ग्रहयोगेक्षणाद्वावर्णान्वदेद्बलयुक्ताद्वियोनौ ॥
दृष्ट्यासमानान्प्रवदेत्स्वसंख्ययारेखांवदेत्स्मरसंस्थैश्चपृष्ठे ॥४॥

अथवियोनिवर्णज्ञानंवैश्वदेव्याह ॥लग्नांशकादिति । लग्नेयेनग्रहेणयोगोयस्तत्रव्यवस्थितस्तस्ययोवर्णःप्रागुक्तःवर्णास्ताम्रसितातिरक्तहरिताइत्याद्याः तद्वर्णवियोनौसत्वजातेवदेत् ह्रतनष्टादौवाईक्षणाद्वेति । अथलग्नेनकश्चिद्ग्रहोभवति तदा येनग्रहेणलग्नमीक्ष्यतेदृश्यतेतस्ययोवर्णस्तंवावदेत् । अथलग्नंनकेनाचिद्युतंदृष्टंभवति तदालग्नांशकात् लग्नेयद्राशिनवांशकोदयोभवतितद्राशिवर्णरक्तःश्वेतइत्यादिवावदेत्। दृष्ट्यासमानानिति । अथबहुभिर्ग्रहैर्लग्नंयुतंदृष्टंचभवतितदाबहूनेववर्णान्वदेत् तत्रापियोवीर्यवान्सबलस्तद्वर्णबाहुल्यम् । यदुक्तंबलयुक्तादिति। अथस्वस्वामिनायुतदृष्टस्यराशेःसंबंधिनवांशकोलग्नगतोभवति तदातद्वर्णमेव वदेत् तत्रचयोग्रहोवियोनौयास्मिन्नंगेव्यवस्थितस्तत्रात्मीयवर्णंकरोति एतत्कुतोलब्धं सप्तमस्थानगतैर्ग्रहैर्बलवद्ग्रहवर्णंपृष्ठेवियोनौरेखांवदेत् । तथाचसारावल्याम् मेषादिभिरुदयस्थैरंशैर्वाग्रहयुतैश्चदृष्टैर्वा। स्वगृहांशकसंयोगाद्विद्याद्वर्णान् परांशकेरूक्षान्॥सप्तमसंस्थाःकुर्युःपृष्ठेरेखांस्ववर्णसमाम्। वीक्षंतेयावंतोवियोनिवर्णाश्चतावंतः ॥ बलदीप्तोगगनचरःकरोतिवर्णंवियोनीनाम् । पीतंकरोतिजीवः शशीसितंभार्गवोविचित्रंच॥रक्तौदिनकररुधिरौरविजःकृष्णंनुधः शबलं।स्वेराशौ परभागेपरराशौस्वेनवांशकेतिष्ठन्॥पश्यन्ग्रहोविलग्नंस्ववर्णवर्णंतदाकुरुते ॥ ४ ॥

खगेदृकाणेबलसंयुतेनवाग्रहेणयुक्तेचरभांशकोदये ॥
बुधांशकेवाविहगाःस्थलांबुजाःशनैश्चरेंद्वीक्षणयोगसंभवाः ॥ ५ ॥

अधुनापक्षिजन्मज्ञानंवंशस्थेनाह॥खगेति। खगेदृकाणःपक्षिद्रेष्काणस्तत्रपक्षिद्रेष्काणोमिथुनद्वितीयः सिंहप्रथमः तुलाद्वितीयः कुंभप्रथमः एषामन्यतमद्रेष्काणेउदयतिशनैश्चरेंद्वीक्षणयोगसंभवाःयथाक्रमंविहगाःपक्षिणःस्थलांबुजाभवंति।पक्षिद्रेष्काणेशनैश्चरेणयुतेदृष्टेवास्थलजपक्षिणांजन्मवक्तव्यम्।एवमिंदुनायुतेदृष्टेवाजलजानांपक्षिणांजन्मेति एकोयोगः । अत्रलग्नेप्रथमभागेनवांशकेयोग्रहःस्थितःसप्रथमद्रेष्काणस्थः ततःपरमन्यस्मिन्नंशकेद्वितीयद्रेष्काणस्थः ततःपरमन्यस्मिन्नंशकेतृतीयद्रेष्काणस्थइति एवंत्रयोभागाविंशतिःकलाश्चैकनवांशकप्रमाणंपरिकल्प्यग्रहस्थितिरन्वेष्या । सर्वराशिष्वियंपरिभाषा बलसंयुतेनवाग्रहेणयुक्तेचरभांशकोदये यस्यतस्यलग्नस्यचरनवांशकोदयेबलसंयुतेनयेनग्रहेणयुक्ते तथाभूतशनैश्चरयुतदृष्टेस्थलजानांचंद्रयुतदृष्टेजलजानामिति द्वितीयो योगः।बुधांशकेवेति बुधनवांशकेमिथुनकन्ययोरन्यतमेतात्कालिकस्यलग्नस्योदितेतस्मिंश्चबलवद्ग्रहसंयुक्तेशनैश्चरयुतदृष्टेस्थलजानां चंद्रयुतदृष्टेजलजानामिति तृतीयोयोगः।एतेशनैश्चरस्येंदोर्वायोगेनवीक्षणेनवासंभवंतीति।तथाचसारावल्याम्॥विहगोदितदृक्काणेग्रहेणबलिनायुतेथचरभांशे । बौधेंशेवाविहगाःस्थलांबुजाः शनिशशीक्षणाद्योगात् ॥ ५ ॥

होरेंदुसूरिरविभिर्विबलैस्तरूणांतोयस्थलेतरुभवोंशकृतः प्रभेदः ॥ लग्नाद्ग्रहःस्थलजलर्क्षपतिस्तुयावांस्तावंतएवतरवःस्थलतोयजाताः ॥ ६ ॥

अधुनावृक्षजन्मज्ञानंवसंततिलकेनाह ॥ होरेति । होरालग्नम् इंदुश्चंद्रः सूरिर्जीवः रविरादित्यः एतैर्विबलैर्वीर्यरहितैः प्रष्टातरूणांवृक्षाणांजन्मपृच्छतीतिवक्तव्यम् । तत्रायंविशेषः तोयस्थलइति । तत्रतरुभवोवृक्षजन्मकिंतोयेजलेस्थलेनिर्जलेदेशेवेतितत्प्रभेदस्तद्विकल्पोंशकृतोनवांशकविहितः तत्रतोयराश्यंशकोदयेतोयसमीपजान्वृक्षाननूपजान् । तोयराशयः कर्कटमकरपश्चार्द्धमीनाः एतैरनूपजवृक्षजन्मज्ञानम् इतरराश्यंशकोदयेस्थलवृक्षजन्मज्ञानं तत्रापिसंख्येयम् । लग्नाद्ग्रहइति उदितांशैः स्थलचारीजलचारीवाभवति तदधिपतिर्यावत्संख्यराशौलग्नाद्व्यवस्थितस्तावंतएवतत्संख्यास्तरवोवृक्षाःस्थलजा जलजावावक्तव्याः । अत्राप्यंशकपतिवशाद्वक्ष्यमाणायुर्दायविधिनाद्वित्रिगुणत्वंवाच्यम्।स्वतुंगवक्रोपगतैस्त्रिसंगुणंद्विरुत्तमस्वांशकभत्रिभागगैरिति अत्रद्वित्रि-

गुणत्वेप्राप्तेयावंत्योगणनाभवंतितावंतः कार्याइत्यागमविदः । तथाचसारावल्याम् ॥ लग्नार्कजीवचंद्रैरबलैः शेषैश्चमूकयोनिःस्यात्स्थलजलभवनविभागावृक्षादीनांप्रभेदकराः । स्थलजलग्रहयोर्लग्नाद्यावतिराशौतुतेपितावंतः । द्वित्रिगुणत्वंतेषामायुर्दायप्रकारोक्तम् ॥ ६ ॥

अंतःसाराञ्जनयतिरविर्दुर्भगान्सूर्यसूनुःक्षीरोपेतांस्तुहिनकिरणःकंटकाढ्यांश्चभौमः ॥ वागीशज्ञौसफलविफलान्पुष्पवृक्षांश्चशुक्रःस्निग्धानिंदुःकटुकविटपान्भूमिपुत्रश्चभूयः ॥ ७ ॥

अधुनास्थलजलजांशस्वामिवशाद्वृक्षाणांविशेषज्ञानंमंदाक्रांतयाह॥अंतःसारानिति।रविः सूर्योंशकपतिरंतःसारान्मध्यदृढान्शिंशपादीन्वृक्षान्जनयतिउत्पादयति सूर्यसूनुरार्किर्दुर्भगान्हृद्भ्मनसोरप्रियान्कुर्कुसप्रभृतीन्जनयति तुहिनकिरणश्चंद्रःक्षीरोपेतान्सक्षीरानिक्षुप्रभृतीन्जनयति भौमःकुजःकंटकाढ्यान्कंटकबहुलान्खदिरप्रभृतीन्जनयति।वागीशज्ञाविति । वागीशोबृहस्पतिःज्ञोबुधः एतौद्वौयथासंख्येनसफलविफलान्वृक्षान्जनयतः तत्रबृहस्पतिःसफलानाम्रप्रभृतीन् बुधोविफलान् येषांलोकेपुष्पमेवोपयुज्यतेनफलानितान्जनयति । शुक्रःपुष्पवृक्षान् चंपकप्रभृतीन्जनयति इंदुश्चंद्रःभूयःपुनःस्निग्धान् साचिक्कणान् धवदेवदारुप्रभृतीञ्जनयति भूमिपुत्रोंगारकः कटुकविटपान्भल्लातकप्रभृतीन्जनयति । अत्रोभयजनितृत्वनिर्देशाच्चंद्रभौमयोर्विकल्पेनादेशः ॥ ७ ॥

शुभोशुभर्क्षेरुचिरंकुभूमिजंकरोतिवृक्षंविपरीतमन्यथा ॥ परांशकेयावतिविच्युतःस्वकाद्भवंतितुल्यास्तरवस्तथाविधाः॥८॥

अथभूतरुशुभाशुभज्ञानंसंख्यांचवंशस्थेनाह।शुभोशुभर्क्षइति ॥सएवस्थलजलांशपतिर्ग्रहःशुभस्तत्कालमशुभर्क्षेपापग्रहराशौव्यवस्थितोभवति तदारुचिरंशोभनंवृक्षंकुभूमिजमशोभनभूमिजातंवदेत् अन्यथाविपर्ययेविपरीतंवृक्षंकरोतिअंशपतिरशुभस्तत्कालंशुभग्रहराशिस्थोभवति तदाअशोभनंवृक्षंशोभनभूमिजातंवदेत् अर्थादेवशुभग्रहेशुभक्षेत्रस्थेशुभंवृक्षंशोभनभूमिजातंवदेत् अशुभग्रहे अशुभक्षेत्रस्थेअशोभनंवृक्षमशोभनभूमिजातंवदेत् परांशकेयावतीति । स्वस्थलजलांशपतिर्ग्रहः स्वकादात्मीयादंशकाद्विच्युतश्चलितोयावत्संख्येपरनवांशकेव्यवस्थितः स्वमंशमतिक्रम्ययावत्संख्येपरनवांशकेवर्तते तत्तुल्यास्तत्संख्यास्तथाविधास्तज्जातियाश्चतरवोवृक्षाभवंति । तत्रपुनःसंख्याकरणाद्विकल्पेनादेशइति । तथाच सारावल्याम्॥स्वांशात्परांशगामिषुयावत्संख्याभवंतितावंतःस्थलजावाजलजावातरवःप्राक्संख्ययाप्रवदेदिति ॥ ८ ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौवियोनिजन्माध्यायस्तृतीयः ॥ ३ ॥

कुजेंदुहेतुप्रतिमासमार्तवंगतेतुपीडर्क्षमनुष्णदीधितौ ॥
अतोन्यथास्थेशुभपुंग्रहेक्षितेनरेणसंयोगमुपैतिकामिनी ॥ १ ॥

अथातोनिषेकाध्यायोव्याख्यायते। तत्रादावृतौसतिगर्भाधानमित्यत ऋतुनिरूपणमृतावपिस्त्रीपुरुषसंयोगज्ञानंवंशस्थेनाह॥कुजेंदुहेत्विति।कुजोभौमः इंदुश्चंद्रः तौहेतुःकारणंनिमित्तंयस्यरजसः तत्कुजेंदुहेतु । प्रतिमासं मासंमासंप्रतीतिप्रतिमासम्।स्त्रीणांप्रतिमासमार्तवंकुजेंदुहेतु। प्रतिमासग्रहणेनप्रथमोद्भूतरजोनिवृत्तिंदर्शयन् गर्भग्रहणक्षममार्तवंप्रदर्शयति।ऋतौभवमार्तवम्।कथमित्याह।गतेतुपीडर्क्षमनुष्णदीधिताविति।अनुष्णदीधितौशीतमयूखेचंद्रेपीडर्क्षंगते।प्रकृतत्वात्स्त्रीणामनुपचयग्रहाश्रितेआर्तवंकारणंभवति अर्थादेवयदिचंद्रः कुजसंदृष्टोभवति एतदुक्तंभवति स्त्रियोजन्मर्क्षादनुपचयस्थश्चंद्रमास्तत्रचयद्यंगारकेणदृश्यतेतदा गर्भग्रहणक्षमआर्तवहेतुर्भवति अन्यत्रबालवृद्धातुरवंध्याभ्यः।अत्रचबादरायणः॥ स्त्रीणांगतोनुपचयर्क्षमनुष्णरश्मिःसंदृश्यतेयदिधरातनयेनतासाम्। गर्भग्रहार्तवमुशंति तदानवंध्यावृद्धातुरालपवयसामपिचैतादिष्टम्॥१ ॥ तथाचसारावल्याम्॥ अनुपचयराशिसंस्थेकुमुदाकरबंधवेरुधिरदृष्टे । प्रतिमासंयुवतीनांभवतीहरजो ब्रुवंत्येके ॥ इंदुर्जलंकुजोग्निर्जलमस्रंत्वग्निरेवपित्तंस्यात् । एवंरक्तेक्षुभिते पित्तेनरजःप्रवर्त्ततेस्त्रीषु ॥ एवंयद्भवतिरजोगर्भस्यनिमित्तमेवकथितंतत् । उपचयसंस्थेविफलंप्रतिमासंदर्शनंतस्य ॥ एवंगर्भग्रहणयोग्यमार्तवंप्रदर्श्यस्त्रीपुरुषसंयोगसंभवासंभवौप्रदर्शयति।अतोन्यथास्थइति। अतोन्यथोक्तप्रकारादन्यथास्थेविपर्ययस्थेचंद्रमसि तत्रोक्तविपर्ययस्थः पुरुषजन्मराशेरुपचयस्थश्चंद्रमायदिभवतितस्मिञ्छुभेनसौम्येनपुंग्रहेणगुरुणेक्षितेदृष्टेकामिनीस्त्रीनरेणपुरुषेणसहसंयोगं मैथुनमुपैतिगच्छतीतिवक्तव्यम्।नन्वत्रातोन्यथास्थइतिस्त्रियाउपचयस्थःकस्मान्नव्याख्यायते।अयुक्तमेतत् प्राधान्यात्पुरुषस्यैव। यस्माद्बादरायणः॥ पुरुषोपचयगृहस्थोगुरुणायदिदृश्यतेहिममयूखः। स्त्रीपुरुषसंप्रयोगंतदावदेदन्यथानैवेति॥ सारावलीकारेणसामान्येनोक्तम्।तद्यथा उपचयभवनेशशभृद्दृष्टोगुरुणासुहृद्भिरथ वासौ। पुंसांकरोतियोगंविशेषतःशुक्रसंदृष्टः॥ कस्मिन्कालेऽयंविचारः। उच्यते। चतुर्थदिनेस्नातायाम्। तथामणित्थः॥ऋतुविरमेस्नातायांयद्युपचयसंस्थितःशशी भवति। बलिनागुरुणादृष्टोभर्त्रासहसंगमश्चतदा॥राजपुरुषेणरविणाविटेनभौमेनवीक्षितेचंद्रे । सौम्येनचपलमतिनाभृगुणाकांतेनरूपवता ॥ भृत्येनसूर्यपुत्रेणायाति स्त्रीसंगमंहितदा । एकैकेनफलंस्याद्दृष्टेनान्यैःकुजादिभिःपापैः॥ सर्वैः स्वगृहंत्यक्त्वागच्छतिवेश्यापदंयुवतिः ॥ १ ॥

यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः ॥
असद्ग्रहालोकितसंयुतेऽस्ते सरोषइष्टैः सविलासहासः ॥ २ ॥

अथमैथुनज्ञानप्रकारमिंद्रवज्रयाह ॥ यथास्तराशिरिति । आधानलग्नात्प्रश्नलग्नाद्वायोस्तराशिः सप्तमोस्तलग्नस्तत्संज्ञकोयोजंतुस्तन्मिथुनंस्त्रीपुमांसौयथा येनप्रकारेणसमेतिसंयोगंसुरतंयाति तथातेनैवप्रकारेणतस्यनरस्यमिथुनप्रयोगः संयोगोवाच्योवक्तव्यः।तस्मिन्नेवास्तेसप्तमेस्थानेअसद्ग्रहालोकितसंयुतेपापग्रहैर्दृष्टेयुक्तेवासरोषःसकलहोमिथुनप्रयोगोवाच्यः । इष्टैः सौम्यैर्युतदृष्टेसविलासहासः।विलासोपहाससीत्कारादिसंयुक्तोमिथुनप्रयोगोवाच्यः अर्थादेवनकेनचिद्युतदृष्टेनसरोषोनापिसविलासहासइति।मिश्रयुतदृष्टेसरोषःसविलासहासश्चेति। तथाचसारावल्याम् ।द्विपदादयोविलग्नात्सुरतंकुर्वंतिसप्तमेयद्वत्।तद्वत्पुरुषाणामपि गर्भाधानंसमादेश्यम् ॥ अस्तेशुभयुतदृष्टेसरोषकलहंभवेद्ग्राम्यम् । सौम्यैःसौम्यं सुरतंवात्स्यायनसंप्रयोगिकाख्यातम् ॥ २ ॥

रवींदुशुक्रावनिजैः स्वभागगैर्गुरौ त्रिकोणोदयसंस्थितेपि वा ॥
भवत्यपत्यं हि विबीजिनामिमे करा हिमांशोर्विदृशामिवाफलाः ॥ ३ ॥

अथगर्भसंभवासंभवज्ञानंवंशस्थेनाह॥रवीति। रविः सूर्यः इंदुश्चंद्रः शुक्रःसितः अवनिजोंगारकः एतैःस्वभागगैर्यत्रकुत्रराशौस्वनवांशकस्थितैरपत्यंभवति गर्भसंभवोभवतीत्यर्थः । यदिचसर्वेस्वभागगानस्युस्तदापुरुषोपचयर्क्षगाभ्यांसूर्यसिताभ्यांस्वनवांशकगाभ्यामेवगर्भसंभवोवाच्यः । एवंभौमचंद्राभ्यांनार्युपचयर्क्षगाभ्यांस्वनवांशकस्थाभ्यामाधानकालेऽवश्यमेवापत्यंभवति गर्भसंभवोभवतीत्यर्थः । यस्मादनेनैवस्वल्पजातकेउक्तम्॥बलयुक्तौस्वगृहांशेष्वर्कसितावुपचयर्क्षगौपुंसाम् । स्त्रीणांवाकुजचंद्रौयदातदागर्भसंभवोभवति ।गुरौत्रिकोणोदयसंस्थितेपिवेति । गुरौबृहस्पतौत्रिकोणयोर्नवमपंचमयोरुदयेलग्नेपिवासंस्थितेएषामन्यतमस्थानस्थेपिभवत्यपत्यसंभवः ॥ विबीजिनामिमेइति । हि यस्मादर्थे इमेहियोगाः विबीजिनांषंढानां विगतंबीजंवीर्यंयेषांस्त्रीपुरुषाणांतेषामफला विद्यमानाअपिनसंभवंति । अत्रोदाहरणं कराहिमांशोर्विदृशामिवाफलाइति । यथाहिमांशोःशीतरश्मेः चंद्रस्यकरारश्मयोविद्यमाना अपिविदृशामंधानामफलानिष्फला भवंति।विगतादृशोयेषांतेविदृशस्तेषामिवेति ॥३॥

दिवाकरेंद्वोःस्मरगौकुजार्कजौगदप्रदौपुंगलयोषितोस्तदा ॥
व्ययस्वगौमृत्युकरौयुतौतथातदेकदृष्ट्यामरणायकल्पितौ ॥४॥

अधुनास्त्रीपुंसयोराधानकालवशादाप्रसवावधियावच्छुभाशुभज्ञानंवंशस्थेनाह॥ दिवाकरेति । दिवाकरात्सूर्यात्स्मरगौसप्तमस्थानस्थौकुजार्कजौ । कुजोंगारकः अर्कजःसौरिः एतौ यदिभवतस्तदापुंगलस्यमनुष्यस्यगदप्रदौरोगप्रदौभवतः।एतदुक्तंभवति। आधानकालेयत्रार्कःस्थितस्तस्मात्सप्तमेस्थानेयदांगारकोभवतिसौरोवातदापुंसोरोगप्रदोभवतिस्वमासे। एवमिंदोश्चंद्रात्सप्तमोभौमः सौरोवाभवतितदायोषितःस्त्रियोरोगप्रदोभवतिस्वमासेएव। व्ययस्वगौमृत्युकराविति।तावेवकुजसौरौव्ययस्वगौद्वादशद्वितीयगौतयोर्दिवाकरेंद्वोः सकाशादुभयत्रपार्श्वस्थितौतदापुंगलयोषितोः स्त्रीपुरुषयोर्मृत्युकरौभवतः।एतदुक्तंभवति। सूर्यादेकोद्वादशेद्वितीयोद्वितीये तदातयोर्मध्येयोबलवान्सस्वमासेमृत्युकरोनरस्यभवति चंद्राद्प्येवंव्यवस्थितौ यथाचंद्रादेकोद्वादशेद्वितीयोद्वितीयेतदातयोर्मध्येयोबलवान्सस्वमासेमृत्युकरःस्त्रियोभवति।युतौतथेति।तदिति कुजसौरयोःपरामर्शः।तयोःकुजसौरयोरुभयोर्मध्याद्यदैकेनादित्योयुतो भवत्यन्येनदृश्यतेतदानरस्यमरणायकल्पितोनिश्चितः एवंचंद्रमायद्येकेनयुक्तोभवत्यपरेणदृष्टस्तदास्त्रियोमरणायकल्पितः द्वयोर्मध्येयोबलवांस्तस्यमासइति ॥ ४ ॥

दिवार्कशुक्रौपितृमातृसंज्ञितौशनैश्चरेंदूनिशितद्विपर्ययात् ॥
पितृव्यमातृष्वसृसंज्ञितौचतावथौजयुग्मर्क्षगतौतयोःशुभौ ॥ ५ ॥

अथनिषिक्तस्यपितृमातृपितृव्यमातृस्वसृणांशुभाशुभज्ञानंवंशस्थेनाह ॥ दिवार्कशुक्राविति।दिवादिनेनिषिक्तस्यजातस्यवाजंतोर्यथाक्रमं पितृमातृसंज्ञितावर्कशुक्रौभवतः पितृसंज्ञकोर्कोमातृसंज्ञकः शुक्रः एवमेवनिशिरात्रौनिषिक्तस्यजातस्यवाशनैश्चरेंदूसौरचंद्रौयथाक्रमंपितृमातृसंज्ञितौभवतः । तत्रशनैश्चरःपितृसंज्ञकः चंद्रोमातृसंज्ञकः।तद्विपर्ययादिति ।तद्विपर्ययाद्दिवारात्रिव्यत्ययात्तावेवपूर्वोक्तौग्रहौपितृव्यमातृष्वसृसंज्ञितौभवतः। तत्रदिवानिषिक्तस्यजातस्यवाशनैश्चरः पितृव्यसंज्ञः चंद्रोमातृष्वसृसंज्ञः रात्रौनिषिक्तस्यजातस्यवार्कःपितृव्यसंज्ञः शुक्रो मातृष्वसृसंज्ञः।तत्संज्ञयोः प्रयोजनं तावथौजयुग्मर्क्षगतौतयोः शुभाविति।तावेवयथोक्तौग्रहौतयोरोजयुग्मर्क्षगतौशुभौज्ञेयौ ओजाविषमराशयोयुग्माःसमराशयः तत्रदिवार्कोविषमर्क्षगोमेषामिथुनसिंहतुलाधन्विकुंभानामन्यतमस्थः पितुः शुभकृत् रात्रौपितृव्यस्य । तथादिवाशुक्रःसमर्क्षगोवृषकर्कटकन्यावृश्चिकमकरमीनानामन्यतमस्थोमातुःशुभकृत् रात्रौमातृष्वसुः।शनैश्चरोरात्रौविषमर्क्षगतः पितुःशुभकृत्दिवासमर्क्षगःपितृव्यस्य । तथाचंद्रोरात्रौसमर्क्षगोमातुःशुभकृत्। दिवामातृष्वसुः। सामर्थ्यादेवोक्तम्।विपर्ययस्थःसएवोक्तयोरशुभः यथादिवास-

मक्षेत्रगतोर्कःपितुरशुभोरात्रौपितृव्यस्य दिवाविषमर्क्षगतःशुक्रोमातुरशुभोरात्रौ मातृष्वसुः।रात्रौसमक्षेत्रगतः शनैश्वरःपितुरशुभोदिवापितृव्यस्य । रात्रौविषमर्क्षगतश्चंद्रमामातुरशुभोदिवामातृष्वसुरिति ॥ ५ ॥

अभिलषद्भिरुदयर्क्षमसद्भिर्मरणमेतिशुभदृष्टिमयाते ॥
उदयराशिसहितेचयमेस्त्रीविगलितोडुपतिभूसुतदृष्टे ॥ ६ ॥

अथाधानप्रश्नमध्येआधानकालवशान्मातुर्मरणयोगद्वयंद्रुतपदेनाह॥अभिलषद्भिरिति ।उदयर्क्षमुदयलग्नमसद्भिःपापग्रहैरभिलषद्भिः तत्रोदयलग्नाभिलापुकैःकैश्चिल्लग्नाद्द्वितीयस्थग्रहस्यव्याख्यातम् । तेषामभिमतंयथा उदयलग्नादनंतरंतदुदयस्यप्रत्यासन्नतयाभिलषंत्युदयर्क्षमिति । अन्येपुनर्लग्नाद्द्वादशस्थानस्थस्यग्रहस्योदयर्क्षाभिलाषंकथयंति । यस्मात्ताद्दिहायोदयराशिगमनंग्रहः करोति एवंलग्नाद्द्वादशस्थैः पापैर्लग्नेयदिशुभदृष्टिसौम्यग्रहदर्शनमयाते अप्राप्ते सौम्यग्रहैरदृश्यमानेस्त्रीयोषिद्गर्भिणीमरणमेतिमृत्युंप्राप्नोति । अत्रचभगवान्गार्गिः॥अशुभैर्द्वादशर्क्षस्थैः शुभदृष्टिविवर्जितैः।आधानलग्नेमरणंयोषितःप्रवदेद्बुधइति ॥ योगांतरमाह । उदयराशिसहितेचयमेइत्यादि । यमेशनैश्चरेउदयराशिसहितेलग्नस्थेतस्मिंश्चविगलितेनोडुपतिनानक्षत्रस्वामिनाक्षीणचंद्रेणभूसुतेनांगारकेणचदृष्टेऽवलोकितेस्त्रीगर्भिणीमरणमेति ॥ ६ ॥

पापद्वयमध्यसंस्थितौलग्नेंदूनचसौम्यवीक्षितौ ॥
युगपत्पृथगेववावदेन्नारीगर्भयुताविपद्यते ॥ ७ ॥

अथयोगांतरंवैतालीयेनाह॥लग्नमुदयराशिःइंदुश्चंद्रएतौलग्नेंदू पापद्वयमध्यसंस्थितौलग्नस्थेचंद्रमसियद्येकः पापग्रहोद्वादशस्थोभवति द्वितीयस्थोपरस्तदालग्नेंदूयुगपत्तुल्यकालंपापद्वयमध्यगावुच्येते॥ अथलग्नेंदूविप्रकृष्टांशकान्वितौभवतस्तत्रचैकः पापस्तावप्राप्यस्थितोऽपरस्तावतिक्रम्यस्थितस्तदापि लग्नेंदूपापद्वयमध्यगावुच्येते ।अथवाद्वादशस्थानेएकः पापोऽपरोद्वितीयेतृतीयेचंद्रश्चतुर्थेचपापोभवति तदापि लग्नेंदूपापद्वयमध्यगावुच्येते।एवंलग्नेंदूयदियुगपत्पापद्वयमध्यगतौनचसौम्यवीक्षितौशुभग्रहावलोकितौ नभवतस्तदानारीस्त्रीगर्भयुताविपद्यतेम्रियते । पृथगेवेति । अथवापृथक्स्थौलग्नेंदूभवतस्तयोर्मध्यादेकतमोपि पापद्वयमध्यगतोभवति सौम्यग्रहादृष्टश्चतदानारीगर्भयुताविपद्यते। अथवा लग्नात्तृतीयेचंद्रोद्वितीयचतुर्थद्वादशस्थाः पापास्तथापिलग्नेंदूपापमध्यगौभवतः । अथवालग्नादेकादशेचंद्रोद्वितीयतृतीयद्वादशगाः पापास्तथापिलग्नेंदूपापद्वयम-

ध्यगौभवतः ॥ युगपद्ग्रहणंपादपूरणार्थंविस्पष्टार्थंवा । तदर्थस्यपृथगेवसामर्थ्याल्लब्धत्वात् । अत्रयोगकर्तॄणांग्रहाणांमध्याद्योबलीतन्मासिगर्भिणीमरणंभवतीतिसर्वत्रपरिभाषा ॥ ७ ॥

क्रूरेशशिनश्चतुर्थगेलग्नाद्वानिधनाश्रितेकुजे ॥
बंध्वंत्यगयोःकुजार्कयोःक्षीणेंदौनिधनायपूर्ववत् ॥ ८ ॥

अथान्ययोगांतराणिवैतालीयेनाह॥क्रूरइति। शशिनश्चंद्रात्क्रूरेपापग्रहे चतुर्थस्थानस्थेनिधनाश्रितेऽष्टमस्थानस्थेकुजेभौमेएकोयोगः । अथवालग्नाच्चतुर्थे पापे अष्टमेभौमेद्वितीयोयोगः । बंध्वंत्यगयोः कुजार्कयोरिति । लग्नाद्बंधुगेचतुर्थस्थेभौमेंत्यगेद्वादशस्थानस्थेऽर्के सूर्येयत्रतत्रस्थेक्षीणेन्दौपरिक्षीणेचंद्रेतृतीयोयोगः।एषामाधानकालेकतमस्यसंभवेमरणायपूर्ववन्नारीगर्भयुताविपद्यतइति ॥ ८ ॥

उदयास्तगयोःकुजार्कयोर्निधनंशस्त्रकृतंवदेत्तथा ॥
मासाधिपतौनिपीडितेतत्कालंस्रवणंसमादिशेत् ॥ ९ ॥

अधुनामातुः शस्त्रनिमित्तंमरणयोगंगर्भस्रावंचाधानलग्नवशाद्वैतालीयेनाह ॥ उदयास्तेति । निषेककालेकुजार्कयोर्भौमसूर्ययोर्यथासंख्यमुदयास्तगयोर्लग्नसप्तमस्थयोर्लग्नेभौमेसप्तमस्थेऽर्केगर्भयुतायाः स्त्रियःशस्त्रकृतंशस्त्रहेतुकंमरणंनिधनंवदेद्ब्रूयात्। तथातेनैवप्रकारेणेति।नारीगर्भयुताविपद्यतइत्यर्थः। मासाधिपताविति।गर्भमासेषुमासाधिपान्वक्ष्यति कललघनेत्यादिना । तत्रनिषेककालेयोग्रहोयेनग्रहेणयुद्धेविजितोभवति केतुनावधूमितउल्कयावाभिहतः सोपिनिपीडित इत्युच्यते तस्यापिनिपीडितस्यग्रहस्ययोभवति मासोयस्मिन्मासेमासाधिपत्यं तस्यभवति तत्कालंतस्मिन्कालेगर्भस्रवणंच्युतिंसमादिशेद्वदेत् ॥ ९ ॥

शशांकलग्नोपगतैःशुभग्रहैस्त्रिकोणजायाऽर्थसुखास्पदास्थितैः ॥
तृतीयलाभर्क्षगतैश्चपापकैःसुखीतुगर्भोरविणानिरीक्षितः॥ १० ॥

अधुनागर्भपुष्टिज्ञानवंशस्थेनाह ॥ शशांकेति । यत्रराशौशशांकश्चंद्रः स्थितस्तत्रैवशुभग्रहैर्व्यवस्थितैर्बुधगुरुसितैरित्यर्थः । अथवालग्नस्थैः शुभग्रहैः लग्नेव्यवस्थितैः अथवाकैश्चिच्छशांकोपगतैः कैश्चिल्लग्नोपगतैः एवंशशांकोपगतैः शुभग्रहैरुदयोपगतैर्वा अथवातैरेवशुभग्रहैः त्रिकोणजायार्थसुखास्पदास्थितैः । त्रिकोणंनवपंचमे जायास्थानंसप्तमम् अर्थस्थानंद्वितीयं सुखस्थानं चतुर्थम् आस्पदस्थानंदशमम् एतेषुत्रिकोणजायार्थसुखास्पदेषुयथासंभवंचंद्राल्ल-

माद्वाद्वयोर्वासमवस्थितैस्तथापापकैःक्रूरग्रहैश्चंद्राल्लग्नाद्वातृतीयलाभर्क्षगतैः तृतीयैकादशस्थानस्थैर्यथासंभवंद्वयोर्वास्थितैरविणासूर्येणयदिनिरीक्षितोदृष्टः शशीलग्नंवाभवति यस्मादेवंयोगः सचदृश्यतेतदागर्भस्थः सुखीपुष्टिमान्भवति। केचिद्गुरुणानिरीक्षितइतिपठंति। तदयुक्तम्।यस्मात्सारावल्यामुक्तम्॥होरेंदुयुतैः सौम्यैस्त्रिकोणजायासुखांबरार्थस्थैः । पापैस्त्रिलाभयातैःसुखीचगर्भोनिरीक्षितोरविणा ॥ १० ॥

ओजर्क्षेपुरुषांशकेषुबलिभिर्लग्नार्कगुर्विंदुभिःपुंजन्मप्रवदेत्समांशकगतैर्युग्मेषुतैर्योषितः॥ गुर्वर्कौविषमेनरंशशिसितौवक्रश्चयुग्मेस्त्रियंद्व्यंगस्थाबुधवीक्षणाच्चयमलौकुर्वंतिपक्षेस्वके।११

अथनिषिक्तस्यनिषेककालाज्जातस्यजन्मकालादुभयोरपिप्रश्नकालाद्वापुंस्त्रीविभागज्ञानंशार्दूलविक्रीडितेनाह।ओजर्क्षेपुरुषांशकेष्विति।लग्नमुदयलग्नम् अर्कआदित्यः । गुरुर्जीवः । इंदुश्चंद्रः । एतैर्लग्नार्कगुर्विंदुभिरोजर्क्षस्थैर्विषमराशिव्यवस्थितैर्नकेवलंयावद्विषमराशिव्यवस्थितैर्विषमनवांशगतैर्बलिभिश्चपुंसोजन्म वदेत्। नन्वत्रविषमनवांशग्रहणंनास्ति कथंव्याख्यातंविषमनवांशकगैरिति।उच्यते।पुरुषांशकेष्वितिवचनात्पुरुषराशीनामंशकेष्वित्यर्थः । यतोयएवविषमराशयस्तएवपुरुषराशयः । समांशकगतैर्युग्मेष्विति । तैरेवलग्नार्कगुर्विंदुभिर्युग्मेषु समराशिषुव्यवस्थितैर्नकेवलंयावत्समांशकगतैर्युग्मराशिनवांशकस्थैर्बलिभिश्च योषितः स्त्रियोजन्मवदेत्।अथैषांयथाभिहितानांलग्नग्रहाणामुभयाविकल्पगानां बाहुल्यात्पुंस्त्रीनिर्देशः । साम्येबलाधिकत्वात्। गुर्वर्काविति।गुरुर्जीवः अर्कआदित्यः एतावुभावपिविषमेविषमराशौगतौयत्रतत्रनवांशकस्थौनरंमनुष्यंकुरुतः। बलग्रहणमप्यत्रानुवर्तते। शशीचंद्रः सितःशुक्रः वक्रोंगारकः एतेयदिसबलाः युग्मेसमराशौगतायत्रतत्रनवांशकस्थाःस्त्रियंजनयंति।द्व्यंगस्थाइति।एतएवग्रहा द्व्यंगस्थायत्रतत्रराशौद्विशरीरनवांशकस्थाः बुधवीक्षणाच्चबुधदृष्टचायमलौद्वौ स्वपक्षेकुर्वंति स्वपक्षेआत्मीयपक्षे पुरुषनवांशकेस्त्रीनवांशकेचेत्यर्थः । एतदुक्तं भवति । चत्वारोद्विस्वभावामिथुनकन्याधन्विमीनाः तत्रमिथुनधन्विनौपुरुषांशकौ । कन्यामीनौस्त्र्यंशकौ तेनयथासंभवंमिथुनधन्वंशगतावादित्यजीवौयदि बुधेनयत्रतत्रावस्थितेनदृश्येते तदायमलौद्वौपुरुषौवाच्यौ।एवंयथासंभवंकन्यामीनांशकगताः शशिशुक्रभौमाः यत्रतत्रावस्थितेनबुधेनदृश्यंतेतदायमलेद्वेकन्येवाच्ये। अथद्वाविववर्गौयथादर्शितस्थौबुधः पश्यति तदैकःपुरुषोद्वितीयाच कन्या।नन्वत्रांशकग्रहणंनास्तितत्कथंव्याख्यातं द्विशरीरनवांशकेस्थिताइति।अ-

नेनैवस्वल्पजातकेउक्तम्।बलिनौविषमेऽर्कगुरूनरंस्त्रियंसमग्रहेकुजेंदुसिताः। यमलौद्विशरीरांशेष्विदुजदृष्ट्यास्वपक्षसमाविति । अन्यथापुनरुक्ततास्यात् ओजर्क्षे पुरुषांशकेष्वित्यनेनैवगतार्थत्वात् । बलग्रहणमत्रानुवर्तनीयमिति ॥११॥

विहायलग्नंविषमर्क्षसंस्थःसौरोपिपुंजन्मकरोविलग्नात् ॥
प्रोक्तग्रहाणामवलोक्यवीर्यंवाच्यःप्रसूतौपुरुषोंगनावा ॥ १२ ॥

अथपुंजन्मयोगांतरमुपेंद्रवज्रयाह॥विहायलग्नमिति।उक्तयोगाभावस्यावसरे नान्यथा आधानलग्नंपृच्छाकालिकंवालग्नंविहायत्यक्त्वासौरःशनैश्चरोलग्नाद्विषमर्क्षगतस्तृतीयपंचमसप्तमनवमैकादशस्थानानामन्यतमस्थःपुंजन्मकरःपुरुषजन्मकरोभवति।प्रोक्तग्रहाणामिति।प्रोक्तग्रहाणांकथितयोगकर्तॄणांग्रहाणांवीर्यंबलमवलोक्यविचार्यप्रसूतौप्रसवकालेपुरुषोनरोंगनास्त्रीवावक्तव्या।एतदुक्तंभवति । यत्रपुरुषजन्मयोगसंभवस्तत्रपुरुषोवाच्यः।यदायोगद्वयसंभवोभवति । तदायो योगोबलवद्ग्रहाभिर्निर्मितस्तद्वशात्पुंस्त्रीजन्मवक्तव्यम् ॥ १२ ॥

अन्योन्यंयदिपश्यतःशशिरवीयद्यार्किसौम्यावपिवक्रोवासमगंदिनेशमसमेचंद्रोदयौचेत्स्थितौ ॥ युग्मौजर्क्षगतावपींदुशशिजौभूम्यात्मजेनेक्षितौपुंभागेसितलग्नशीतकिरणाःस्युःक्लीबयोगाश्चषट् ॥ १३ ॥

अथक्लीवजन्मयोगाञ्छार्दूलविक्रीडितेनाह॥अन्योन्यमिति।शशीचंद्रः रविरादित्यः एतौशशिरवीयथाक्रमंयुग्मौजर्क्षगतौसमविषमराशिस्थावन्योन्यंपरस्परंयदिपश्यतः समराशिस्थश्चंद्रोविषमराशिगतमर्कंपश्यत्यर्कश्चशशिनंपश्यतितदाक्लीवजन्मयोगएकः । यद्यार्किसौम्यावपि आर्किःसौरः सौम्योबुधः एतावार्किसौम्यौ।यथाक्रमंयुग्मौजर्क्षगतौ अन्योन्यंयदिपश्यतस्तदाद्वितीयोयोगः। वक्रोवासमगमिति । वक्रोंगारकोविषमर्क्षगः समगंसमराशिस्थंदिनेशंसूर्यंपश्यतिसूर्यश्चांगारकंपश्यतितदातृतीयोयोगः । असमेचंद्रोदयौचेदिति । चंद्रः शशी । उदयोलग्नमेतावसमेविषमराशाववस्थितौभूम्यात्मजेनांगारकेणसमराशिगेनेक्षितौदृष्टौतदाचतुर्थोयोगः । युग्मौजर्क्षगतावपीति । इंदुश्चंद्रःशशिजो बुधः एतौयथासंख्यंयुग्मौजर्क्षगतौसमविषमराशिगौभूम्यात्मजेनभौमेनयत्रातत्रावस्थितेनवीक्षितौदृष्टौतदापंचमोयोगः । पुंभागइति । सितःशुक्रः लग्नमुदयलग्नं । शीतकिरणश्चंद्रः एतेसितलग्नशीतकिरणाः यत्रतत्रराशौपुंभागेविषमन-

वांशकेव्यवस्थिताभवंति तदाक्लीवजन्मयोगः षष्ठः । तथाचबादरायणः ॥ अन्योन्यंरविशशिनौविषमाविषमर्क्षगौनिरीक्ष्येते । इंदुजरविपुत्रौवातथैवनपुंसकं कुरुतः॥ वक्रोविषमेसूर्यः समगश्चैवंपरस्पराल्लोकात् । विषमर्क्षेलग्नेंदूसमराशिगतःकुजोवलोकयति ॥ बुधचंद्रौकुजदृष्टौविषमर्क्षसमर्क्षगौतथैवोक्तौ । ओजनवांशकसंस्थालग्नेंदुसितास्तथैवोक्ताइति ॥ एतेयोगाः पूर्वयोगानामभावेवक्तव्याः । तेषांयोगानामेतेषांचसंभवेतेषामेवबलवत्त्वम् ॥ १३ ॥

**युग्मेचंद्रसितौतथौजभवनेस्युर्ज्ञारजीवोदयाल्लग्नेंदूनृनिरीक्षितौचसमगौयुग्मेषुवाप्राणिनः ॥ कुर्युस्तेमिथुनंग्रहोदयगतान्द्व्यंगांशकान्पश्यतिस्वांशेज्ञेत्रितयंज्ञगांशकवशाद्युग्मंत्वमिश्रैःसमम् ॥ १४ ॥**

अधुनाद्वित्रिगर्भसंभवयोगाञ्छार्दूलविक्रीडितेनाह॥युग्मेचंद्रसिताविति । चंद्रसितौशशिशुक्रौयुग्मेसमराशौव्यवस्थितौतथातेनैवप्रकारेणज्ञारजीवोदयाः ज्ञो बुधः आरोंगारकः जीवोबृहस्पतिः उदयोलग्नम् एतेसर्वेएवौजभवनेविषमराशौस्युर्भवेयुः एवमेतेमिथुनंकुर्युः दारिकांदारकञ्च । लग्नेंदूउदयचंद्रौसमगौ युग्मराशिव्यवस्थितौनृनिरीक्षितौनरग्रहेणयेनकेनचित् दृष्टौभवतस्तथापिमिथुनंगर्भस्थंवाच्यम् । युग्मेषुवाप्राणिनः । तएवपूर्वोक्ताज्ञारजीवोदयाः सर्वएवयुग्मेषुसमराशिषुस्थिताःप्राणिनोबलिनोभवंति तदापिमिथुनंकुर्युः । ग्रहोदयगतानित्यादि । ग्रहाः सर्वएवद्व्यंगांशकेषुद्विस्वभावनवांशकेषुगताः प्राप्ताः उदयोलग्नंचद्व्यंगांशकेषुगतः तान्ग्रहोदयगतान्द्व्यंगांशकान् स्वांशेस्वनवांशकस्थेज्ञेबुधेपश्यतिसतितदात्रितयंवक्तव्यम् । तत्रायंविशेषः । ज्ञगांशकवशाद्युग्मं त्विति । ज्ञोबुधोगतोव्यवस्थितोयस्मिन्नवांशकेतद्वशाद्युग्मम्।बुधोयस्मिन्नवांशकेव्यवस्थितःसयल्लिंगांशकस्तल्लिंगंतत्रगर्भेयुग्मंवक्तव्यम्।एकस्तद्विपरीतः।एतदुक्तंभवति । मिथुनांशकस्थोबुधोयदाग्रहोदयगतान्द्व्यंगांशकान्पश्यतितदागर्भे दारकद्वयंदारिकाचैकावक्तव्या । अथोकन्यानवांशकस्थोबुधोद्व्यंगांशकव्यवस्थितान्ग्रहोदयान्पश्यति तदागर्भेदारिकाद्वयमेकोदारकश्चवक्तव्यम्।अमिश्रैः सममिति।तैर्ग्रहोदयबुधैरमिश्रस्थितैर्द्विस्वभावसमानलिंगस्थितैस्त्रितयंसममेकलिंगंवक्तव्यम्।एतदुक्तंभवति। मिथुननवांशकव्यवस्थितोबुधोमिथुनधन्व्यंशकव्य वस्थितान्ग्रहोदयान्पश्यतितदागर्भेदारकत्रितयंवक्तव्यम् । अथकन्यांशकव्यवस्थितोबुधः कन्यामीनांशकव्यवस्थितान्ग्रहोदयान्पश्यति तदागर्भेदारिकात्रितयंवाच्यमिति । तथाचसारावल्याम् ॥ समराशौशशिसितयोर्विषमेगुरुवक्र

सौम्यलग्नेषु । योगेगर्भगतंतद्विद्वद्भिर्मिथुनंतुवक्तव्यम्॥लग्नेंदूवासमगौपुंग्रहदृष्टौ चमिथुनजन्मकरौ ॥ उदयज्ञवक्रगुरवोबलिनःसमराशिगास्तथैवोक्ताः । द्वि-शरीरांशकयुक्तान्ग्रहान्विलग्नंचपश्यतींदुसुते ॥ कन्यांकन्येशेद्वेपुरुषश्चैकोनि षिच्यतेगर्भे । मिथुनांशेकन्यैकाद्वौपुरुषौत्रितयमेवंस्यात्॥ मिथुनधनराशिगता-न्ग्रहान्विलग्नंचपश्यतींदुसुतः । मिथुनांशस्थश्चयदापुरुषत्रितयंतदागर्भे ॥ कन्यामीनांशस्थान्विहगानुदयंचयुवतिभागगतः । पश्यतिशीतगुतनयःकन्या त्रितयंतदागर्भे ॥ १४ ॥

**धनुर्धरस्यांत्यगतेविलग्नेग्रहैस्तदंशोपगतैर्बलिष्ठैः ॥**
**ज्ञेनार्किणावीर्ययुतेनदृष्टेसंतिप्रभूताअपिकोशसंस्थाः ॥ १५ ॥**

अधुनात्यधिकगर्भसंभवयोगज्ञानमुपजातिकयाह ॥धनुरिति।धन्विलग्नेधनुर्ध-रांशकेवालग्नमुपगतेयत्रतत्रराशौव्यवस्थितैःसर्वग्रहैर्धन्व्यंशोपगतैःबलिष्ठैर्वीर्य-वद्भिश्चज्ञेनबुधेनआर्किणाचशनैश्चरेणवीर्ययुतेनबलवतादृष्टेवलोकितेप्रभूताबहवः कोशसंस्थाजरायुवेष्टितविग्रहागर्भेसंतिभवंतीति पंचसप्तदशयावत् ॥ १५ ॥

**कललघनांकुरास्थिचर्मांगजचेतनताःसितकुजजीवसूर्यचंद्रा-**
**र्किबुधाःपरतः ॥ उदयपचंद्रसूर्यनाथाःक्रमशोगदिताभवंति**
**शुभाशुभंचमासाधिपतेःसदृशम् ॥ १६ ॥**

पूर्वमुक्तंमासाधिपतौनिपीडितेतत्कालंश्रवणंसमादिशेदिति तदधुनागर्भस्य मासाधिपान्कुटकेनाह।।कललइति। सिताद्याग्रहागर्भस्यप्रथममासात्प्रभृतिकल-लादीनिभवंति वर्तयंति । तद्यथा । गर्भस्यप्रथमेमासिकललंभवति । शुक्रशो-णितेघनेसंमिश्रीभूतेतत्रगर्भस्यतस्मिन्मासेसितःशुक्रोधिपतिः । द्वितीयेघनता काठिन्यंभवति तत्रकुजोंगारकोधिपतिःतृतीयेंकुरोत्पत्तिर्हस्ताद्यवयवजन्मतत्र-जीवोबृहस्पतिरधिपतिः । चतुर्थेस्थिसंभवःतत्रसूर्योरविरधिपतिः । पंचमेचर्म-संभवस्तत्रचंद्रोधिपतिः । षष्ठेंगजसंभवोलोमजन्मतत्रार्किःसौरोऽधिपतिः । सप्तमेचेतनतासंभवतिचेतनतास्वभावःतत्रबुधोधिपतिः । बुधमासात्परतो येन्येशेषामासास्तेगर्भस्याशनोद्वेगप्रसवकरास्तेचोदयपतिचंद्रसूर्यानाथाःस्वा-मिनः क्रमशोगदिताः उक्ताः । तत्राष्टमेमासिगर्भस्थोजंतुरशनंकरोति मा-त्राभुक्तंपीतंरसादि तस्यनाभिलग्ननालेनसंक्रमते । तत्रगर्भाधानलग्नाधिप-तिर्योग्रहःसमासाधिपतिः । नवमेगर्भस्थस्योद्वेगोभवति तत्रचंद्रोधिपतिः

दशमेगर्भस्यप्रसवःप्रसूतिर्भवति तत्रसूर्योरविरधिपतिः । तथाच स्वल्पजातके॥ कललघनावयवास्थित्वग्रोमस्मृतिसमुद्भवाः क्रमशः।मासेषुशुक्रकुजजीवसूर्यचंद्रार्किसौम्यानाम् ॥ अशनोद्वेगप्रसवाः परतोलग्नेशचंद्रसूर्याणामिति।।अत्रप्रथमद्वितीयमासाधिपयोर्यवनेश्वरेणसहमतभेदः।तथातद्वाक्यम् । कुजास्फुजिज्जीवरवींदुसौरशशांकलग्नेंदुदिवाकराणाम् ।मासाधिपत्यप्रभवोनचैषांजयोपघातैर्ग्रहवद्भवंति ॥ आद्येतुमासेकललंद्वितीयेपेशिस्तृतीयेपिभवंतिशाखाः । अस्थीन्यथस्नायुशिराश्चतुर्थेमज्जांत्रचर्माण्यपिपंचमेतु । षष्ठेत्वसृग्रोमनखैर्यकृच्चचेतस्वितासप्तममासिचिंत्या।तृष्णाशनास्वादनमष्टमेस्यात्स्पर्शोपरोधोनवमेरतिश्च। स्रोतोभिरुद्घाटितपूर्णदेहोगर्भोर्कमासेदशमेप्रसूते।आचार्यस्यबहुमतमासानामभिमतमितिभवति।शुभाशुभंचमासाधिपतेःसदृशम् । गर्भस्थस्यमासाधिपतिसदृशंशुभमशुभंफलंभवति । एतदुक्तंभवति।आधानकालेयोग्रहोनिपीडितोभवति तन्मासिगर्भस्यपतनम् । कलुषेमंदरश्मौ विवर्णेपीडनम् । निर्मलेंशुजालसंपन्नेबलवतिपुष्टिरिति । तथाचसूक्ष्मजातके ॥ कलुषैः पीडापतनंनिपीडितैर्निर्मलैःपुष्टिरिति ।। अथचान्यैः शास्त्रकारैर्विशेषउक्तः।तत्किंचित्प्रदृश्यते । तथाच सारावल्याम् ॥ तत्रशुभाशुभमिश्रैः कर्मभिरधिवासिताविषयवृत्तिः । गर्भावासे निपततिसंयोगेशुक्रशोणितयोः । मिथुनस्यमनोभावोयादृङ्मदलालस्यतोभवति । श्लेष्मादिभिश्चदोषैस्तत्तुल्यगुणोनिषिक्तस्य ॥ यादृक्पश्यतिसौम्यस्तत्तुल्यगुणंसुतंसमाधत्ते ॥ पितृजननीसादृश्यंरवेःशशांकस्यबलयोगात् ॥ सुबोधमेतत् ॥ १६ ॥

त्रिकोणगेज्ञेविबलैस्ततोपरैर्मुखांघ्रिहस्तद्विगुणस्तदाभवेत् ॥
अवाग्गवींदावशुभैर्भसंधिगैःशुभेक्षितैश्चेत्कुरुतेगिरंचिरात्॥१७॥

अधुनाधिकांगमूकचिरलब्धगिरांसंभवयोगान्वंशस्थेनाह॥त्रिकोणगेति । ज्ञेबुधेत्रिकोणगेलग्नान्नवमस्थेपंचमस्थेवाततः तस्माद्बुधादपरैरन्यैः सर्वैर्ग्रहैर्यत्रतत्रावस्थितैर्विबलैर्वीर्यरहितैर्मुखांघ्रिहस्तद्विगुणोगर्भस्थोवाच्यःद्विशिराश्चतुष्पाच्चतुर्भुजइत्यर्थः । त्रिकोणगेज्ञेइत्यत्रकेचिन्मूलत्रिकोणगेबुधेकन्यागतइत्याहुः । तच्चायुक्तम्।यस्माद्भगवान्गार्गिः॥ बलहीनैर्ग्रहैः सर्वैर्नवपंचमगेबुधे । द्विगुणांघ्रिशिरोहस्तोभवत्येकोदरस्तथा ॥ अवागिति । गविवृषेस्थितेइंदौचंद्रेअशुभैः पापैर्भसंधिगैः कर्कटवृश्चिकमीनानामंत्यनवांशकस्थैर्यथासंभवं सर्वैरेवांत्यनवांशकस्थैः अवाङ्मूकोगर्भस्थोवाच्यः । शुभेक्षितइति । चेच्छब्दोयद्यर्थे एवंविधे योगेयदिशुभेक्षितः सौम्यग्रहदृष्टश्चंद्रो भवतितदाजातस्यचिराद्बहुनाकालेन

गिरंवाचंकुरुते अर्थादेव पापवीक्षितेवाग्धीनइति । एवंयोगेमिश्रग्रहवीक्षितोयदा सौम्याबलिनस्तदाचिरेणकालेनलब्धवाग्भवतियदापापाबलिनस्तदा नैवैति । अत्रचभगवान्गार्गिः । कुलीरालिझषांतस्थैः पापैश्चंद्रे वृषोपगे । मूकः पापेक्षितैः सौम्यैश्चिरेणलभतेगिरम् ॥ मिश्रदृष्टैर्ग्रहैर्हीनैर्मूकोवालब्धवाक्चिरादिति ॥ १७ ॥

सौम्यर्क्षांशेरविजरुधिरौचेत्सदंतोत्रजातःकुब्जःस्वर्क्षेशशिनि तनुगेमंदमाहेयदृष्टे ॥ पंगुर्मीनेयमशशिकुजैर्वीक्षितेलग्नसंस्थे संधौपापेशशिनिचजडःस्यान्नचेत्सौम्यदृष्टः ॥ १८ ॥

अधुनासदन्तकुब्जजडजन्मयोगान्मंदाक्रांतयाह ॥ सौम्येति । रविजः शनैश्चरः रुधिरोंगारकः यत्रतत्रराशौशनैश्चरांगारकौसौम्यर्क्षांशेबुधनवांशकेमिथुनांशकेकन्यांशकेवाभवतः अथवाबुधर्क्षेमिथुनकन्ययोरन्यतमेराशौस्थितौभवतः चेच्छब्दोयद्यर्थे यद्येवंतदात्रास्मिन्योगेसदंतोदंतसहितो गर्भस्थोवाच्यः । केचित्सौम्यर्क्षांशे मिथुनेमिथुनांशकेकन्यायांकन्यांशकेचेतीच्छंति ऋक्षांशयोर्युगपद्ग्रहणात् । अंशशब्देनकेवलेनैवसिद्धिः स्यात्तदृक्षग्रहणमतिरिच्यतइति । एवंविधेयोगेगर्भस्थः सदंतोभवतिजातोवा कुब्जःस्वर्क्षइति । शशिनिचंद्रेस्वर्क्षेआत्मीयराशौकर्कटस्थिते तथाभूतेचतनुगते लग्नगते तथाभूतेमंदमाहेयदृष्टे मंदेनशनैश्चरेणमाहेयेनांगारकेणचदृष्टेऽवलोकितेचन्द्रेएवंभूतेयोगेगर्भस्थः कुब्जोवाच्यः।पंगुर्मीनइति।मीनेलग्नसंस्थेयमशशिकुजैः यमः शनैश्चरः शशीचंद्रः कुजोभौमः एतैर्वीक्षितेदृष्टेपंगुः पादविकलोगर्भस्थोवाच्यः । संधौपापइति । पापेआदित्यकुजसौराणामन्यतमेशशिनिचचंद्रेसंधौकर्कटवृश्चिकमीनांत्यनवांशगतेयथासंभवंगर्भस्थोजंतुर्जडः श्रोत्रेंद्रियहीनोवाच्यः।नचेत्सौम्यदृष्टइति।एते योगकर्तारोग्रहायथादर्शितानचेत् यदिसौम्यैः शुभग्रहैर्दृष्टानभवंतितदैतद्योगचतुष्टयंपूर्णवक्तव्यम् सौम्यैर्बलिभिर्निरीक्षितायोगाएव नभवंति मध्यबलैर्हीनबलैर्वादृष्टास्तदाअसमग्रफलाभवंति ॥ १८ ॥

सौरशशांकदिवाकरदृष्टेवामनकोमकरांत्यविलग्ने ॥ धीनवमोदयगैश्चदृकाणैःपापयुतैरभुजांघ्रिशिराःस्यात् ॥ १९ ॥

अधुनावामनहीनांगयोगौदोधकेनाह ॥ सौरशशांकेति।मकरांत्यविलग्ने मकरराश्यंत्यनवांशकेविलग्नस्थे नवमनवांशकउदयमानः सचमकरस्येत्यर्थः तस्मिश्चसौरशशांकदिवाकरदृष्टे सौरःशनैश्चरःशशांकश्चंद्रःदिवाकरःसूर्यःएतैरवलोकि-

तेवामनकोगर्भस्थोवाच्यःधीनवमोदयगैरिति।अत्रैकेव्याचक्षते।यदालग्नेद्वितीयद्रे
ष्काणोदयोभवतितदातस्यपंचमराशिसंबंधित्वाद्द्विद्रेष्काणइत्याख्या तस्मिन्द्वि
तीयेद्रेष्काणे पापग्रहयुतेउदयमनुप्राप्तेनवमेतस्मिन्सौरशशांकदिवाकरदृष्टे गर्भ-
स्थोऽभुजोभुजहीनोवाच्यः। एवंयदालग्नेतृतीयस्यद्रेष्काणस्यउदयोभवतितदात-
स्यनवमराशिसंबंधित्वान्नवमदृकाणइत्याख्या तस्मिन्नुदयगतेपापयुतेसौरशशां-
कदिवाकरदृष्टेऽनंघ्रिःपादहीनोगर्भस्थोवाच्यः। एवंप्रथमद्रेष्काणस्यलग्नसंबंधित्वा-
दुदयद्रेष्काणइत्याख्यातस्मिन्नुदयगतेसौरशशांकदिवाकरदृष्टेऽशिराः शिरोहीनो-
गर्भस्थोवाच्यःएतेषुयोगेषुसौरशशांकादिवाकराणांदर्शनयोगात्पापयुक्तइति।केव-
लेनांगारकेणयुक्तेयोगोभवति अत्राप्यन्येधीनवमोदयगैर्द्रेष्काणैःपापयुतैःकेवल-
मेवाभुजांघ्रिशिरसांसंभवंव्याचक्षते सौरशशांकादिवाकरदृष्टइत्यस्यानुवृत्तिंनेच्छं-
ति। अन्येविभुजादिसंभवेयथासंख्यंत्यक्त्वादृकाणत्रयेपिप्रतिदृकाणंतदुद्भवाविक-
ल्पमाहुः।विभुजोवानांघ्रिर्वाविशिरावेति अन्येएवंव्याचक्षते यथा। लग्नेयदाप्रथ-
मद्रेष्काणोदयोभवति तदापंचमेपिराशौप्रथमद्रेष्काणोनवमोपिप्रथमएव। एत-
द्रेष्काणत्रयंयदिपापयुतंभवतितदाभुजहीनोगर्भस्थोवाच्यः। अथलग्नेद्वितीयद्रे-
ष्काणोदयोभवतितदापंचमनवमयोरपितृतीयएव। एतद्द्रेष्काणत्रयंयदापापयुतं
भवति तदापादहीनोगर्भस्थोवाच्यः।अथलग्नेतृतीयद्रेष्काणोदयोभवतितदापंच-
मनवमयोरपितृतीयएव। एतद्रेष्काणत्रयंयदिपापयुतंभवति तदाशिरोविहीनो
गर्भस्थोवाच्यःअत्राप्यन्येयथासंख्यंत्यक्त्वात्रिप्रकारेपियोगेभुजांघ्रिशिरोहीनानां
विकल्पेनगर्भस्थस्यसंभवमाहुः।वयंपुनर्ब्रूमः।निषेककाले पंचमराशौयोद्रेष्काणः
सयद्यंगारकेणयुक्तः सौरशशांकादिवाकरदृष्टश्चभवति तदाविभुजोभवति एवंनव-
मेस्थानेद्रेष्काणोनवमद्रेष्काणः तथानिषेककालेनवमराशौयोद्रेष्काणः सयद्यंगा-
रकेणयुक्तः सौरशशांकादिवाकरदृष्टश्चभवति तदाअनांघ्रिर्भवति तथानिषेककाले
लग्नस्थोद्रेष्काणः सयद्यंगारकेणयुक्तःसौरशशांकादिवाकरदृष्टश्चभवतितदाअशि-
रागर्भस्थोवाच्यः।एषैवव्याख्यासाध्वी।यस्माद्भगवान्गार्गिः। लग्नद्रेष्काणगोभौमः
सौरसूर्येंदुवीक्षितः। कुर्याद्विशिरसंतद्वत्पंचमेबाहुवर्जितम्॥ विपदंनवमस्थानेयदि
सौम्यैर्नवीक्षितइति।तथाचसारावल्याम् भौमयुताद्रेष्काणास्त्रिकोणलग्नेषुसंदृष्टाः।
विभुजांघ्रिमस्तकः स्याच्छनिरविचंद्रैर्वदेद्गर्भः॥ १९ ॥

रविशशियुतेसिंहेलग्नेकुजार्किनिरीक्षितेनयनरहितःसौम्यासौ-
म्यैःसबुद्बुदलोचनः॥ व्ययगृहगतश्चंद्रोवामंहिनस्त्यपरंरवि-
र्नशुभगदितायोगायाप्याभवंतिशुभेक्षिताः॥ २० ॥

अथविकलजन्मज्ञानार्थंहरिण्याह ॥ रविशशियुतेइति । सिंहेलग्ने- विशशियुतेअर्कचंद्राभ्यांसंयुतेतथाभूतेकुजार्किनिरीक्षितेभौमसौराभ्यांदृष्टेनयन- रहितो नेत्ररहितोंधोगर्भस्थोवाच्यः । अर्थादेवकेवलेसिंहलग्नेर्केणयुक्तेसौ- रांगारकदृष्टेदक्षिणाक्षिकाणः एवंसिंहलग्नेकेवलेनचंद्रेणयुक्तेसौरांगारकदृष्टे वामाक्षिकाणः । सौम्यासौम्यैः सबुद्बुदलोचनइति । तस्मिन्नेवसिंहलग्नेर्कचंद्रा- भ्यांयुक्तेसौम्यासौम्यैः शुभपापग्रहैर्दृष्टेगर्भस्थः सबुद्बुदलोचनः पुष्पिताक्षोवाच्यः। अत्राप्येकतमयुक्तेप्राग्वत्पुष्पिताक्षत्वंवाच्यम् ॥ व्ययगृहगतइति । निषेककाल- लग्नाज्जन्मलग्नाद्वायस्यचंद्रमाव्ययगृहगतोद्वादशस्थोभवति तस्यवामंचक्षुर्हिन- स्तिवामाक्षिकाणः सभवतीत्यर्थः । एवंरविरादित्यो लग्नाद्द्वादशोऽपरंदक्षिणंचक्षु- र्हिनस्ति । नशुभगदितायोगाइति।यएतेयोगाः प्रागभिहितास्त्रिकोणगेज्ञइत्यादि- नाग्रंथेनशुभाशुभफलदास्तेषांसर्वेषामेवयोगानांयदायोगकर्तारोग्रहाः शुभग्रहैः सौम्यग्रहैर्दृष्टाभवंति तदातेयोगायाप्याभवंति पूर्णंयथोक्तंफलंनप्रयच्छंति किंतु किंचित्प्रयच्छंतीत्यर्थः ॥ २० ॥

तत्कालमिंदुसहितोद्विरसांशकोयस्तत्तुल्यराशिसहितेपुरतः शशांके ॥ यावानुदेतिदिनरात्रिसमानभागस्तावद्गतेदिननिशोः प्रवदंतिजन्म ॥ २१ ॥

अथप्रश्नाधानकालेयोगवशात्प्रसवकालज्ञानंवसंततिलकेनाह॥तत्कालमिन्दुस- हित इति । तत्कालेप्रश्नकालेवायस्मिन्राशौचंद्रमावर्ततेतत्रचयस्मिन्द्वादशभागे व्यवस्थितः सतत्कालमिंदुसहितोद्विरसांशकः । केचित्तुतत्कालिकेंदुसहितोद्विर- सांशकइतिपठंति तत्कालिकेंदुनायावत्संख्योद्वादशभागः सहितः।तत्तुल्यस्ताव- त्संख्योमेषादौगणनयायोराशिस्तत्रस्थेचंद्रमसिपुरतोग्रतोदशमेमासिगर्भस्यप्र- सवोवाच्यइतिकेचित्। तथाचसारावल्याम् ॥ यस्मिन्द्वादशभागेगर्भाधानेव्यव- स्थितश्चंद्रः।तत्तुल्यर्क्षेप्रसवंगर्भस्यसमादिशेत्प्राज्ञः ॥अन्येपुनरेवंव्याचक्षते।आधान- कालेयत्रराशौचंद्रमाव्यवस्थितस्तत्रयावत्संख्योद्वादशभागोवर्तते तस्माद्द्वादश- भागराशेस्तावत्संख्येयएवपुरतोराशिस्तत्रस्थेचंद्रमसिदशमेमासिप्रसवोवक्तव्यः एषैवसाध्वीव्याख्या । यस्माद्भगवान्गार्गिः॥यावत्संख्येद्वादशांशेशीतरश्मिर्व्यव- स्थितः।तत्संख्येयस्ततोराशिर्जन्मेंदौतद्गतेवदेत्॥अत्रापिनक्षत्रानयनेयमनुपातो- पायः । यदि चंद्राक्रांतद्वादशभागप्रमाणेनसकलचंद्रराशिरष्टादशशतलिताप्र- माणोलभ्यते तदानेनभक्तद्वादशराशिप्रमाणेनकिमितिलब्धंचंद्रराशिभुक्तंलभ्यते ततोष्टशतलितापरिकल्पनयानक्षत्रमूह्यम्।अत्रापिदिनरात्रिकालज्ञानमाह।यावानु

देतीति । दिनरात्रिसंज्ञाः पूर्वंव्याख्याताःगोजाश्विकर्किमिथुनाइत्यादि ॥ आधानकालेप्रश्नकालेवायल्लग्नंतस्ययःप्रविभागः. दिनसंज्ञोरात्रिसंज्ञोवायावानुदेतिस्वमानाद्यावत्कालभागोगतस्तावत्येवदिननिशोः स्वमानाद्गतेकालेजन्मभविष्यतीतिवाच्यम् । एवंदिनस्यरात्रेर्वागतकालंबुद्ध्वाप्रसवकालेलग्नहोराद्रेष्काणनवांशकद्वादशभागत्रिंशांशकावाच्याः।अत्रयेप्रवदंतिकथयंति तेषांतद्वाक्यंसारावल्याम्।तत्कालंदिवसनिशासंज्ञःसमुदेतिराशिभागोयः । यावानुदयस्तावान्वाच्योदिवसस्यरात्रेर्वा ॥ इत्याधानेप्रथमंप्रसूतिकालंसुनिश्चितंकृत्वा।जातकविहितं चविधिंविचिन्तयेत्तत्रगणितज्ञः ॥ २१ ॥

उदयतिमृदुभांशेसप्तमस्थेचमंदेयदिभवतिनिषेकःसूतिरब्दत्रयेण ॥ शशिनितुविधिरेषद्वादशेब्देप्रकुर्यान्निगदितमिहचिंत्यंसूतिकालेपियुक्त्या ॥ २२ ॥

इतिनिषेकाध्यायःसमाप्तः ॥ ४ ॥

अधुनाधृतस्यगर्भस्यवर्षत्रयवर्षद्वादशज्ञानंमालिन्याह॥उदयतीति। मृदोःसौरस्यभांशे । मृदुभांशेनिषेककालेयस्यतस्यलग्नस्योदयेमृदुभांशेशनैश्चरराशिनवांशकेमृगांशकेकुंभांशकेवोदयति तथाभूतेतस्मादेवलग्नान्मंदेशनैश्चरेतत्कालेसप्तमस्थेद्यूनगतेएवंविधयोगेयदिनिषेकआधानंभवतितदाधृतस्यगर्भस्याब्दत्रयेणवर्षत्रयेणसूतिःप्रसवोवक्तव्यः।शशिनीति ॥एषएवविधिर्यदाशशिनिचंद्रेभवतितदाद्वादशेब्देद्वादशेवर्षेसूतिःप्रसवंकुर्यादित्यर्थ।एतदुक्तंभवति।यस्यतस्यलग्नस्योदयेयदाकर्कटांशकोदयोभवति तस्माल्लग्नात्सप्तमश्चंद्रोभवतितदाधृतस्यगर्भस्यद्वादशेब्देप्रसवोवाच्यः॥निगदितमिहेति।इहास्मिन्नाधानाध्यायेआधानकालयोगवशाद्यथाहीनाधिकांगादीनांगर्भसंभवोभवति तथाप्रसूतिकालेपिताद्दग्योगवशात्तथाविधानामेवजन्मवक्तव्यम् । पितृमातृपितृव्यमातृष्वसॄणामपिशुभाशुभंजन्मकाललग्नवशात्तदनंतरमपिवक्तव्यम्।युक्त्येति । यन्नसंभवति तन्नवक्तव्यं यथागर्भस्रावादिगर्भप्रसवकालनिर्देशादिच । एवमाधानकालात्प्रसवकालाच्च यथैवोद्देशःकृतस्तथाप्रश्नकालादपिवक्तव्यः।उक्तंचजन्मन्याधानेप्रश्नकालेवेति २२

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौनिषेकाध्यायश्चतुर्थः ॥ ४ ॥

पितुर्जातःपरोक्षस्यलग्नमिंदावपश्यति ॥
विदेशस्थस्यचरभेमध्याद्भ्रष्टेदिवाकरे ॥ १ ॥

अथातोजन्मविधिर्नामाध्यायोव्याख्यायते ॥ तत्रादावेवपितुः सन्निधावसन्निधौवाजातइत्यनुष्टुभाह ॥ पितुर्जातइति । इन्दौचंद्रेप्रसवलग्नमपश्यतिसतिपितुः परोक्षस्यजनकस्यासन्निधौजातः । तत्रपितुरसन्निधानेस्वदेशपरदेशस्थितिज्ञानमाह॥विदेशस्थस्येति । दिवाकरेसूर्येचरभेचरराशिस्थितेमध्याद्दशमस्थानाद्भ्रष्टे पतितेएकादशद्वादशस्थेनवमाष्टमस्थानस्थेपितुर्विदेशस्थस्यअन्यदेशगतस्यजातः । चंद्रमसिप्रसवलग्नमपश्यत्येषयोगोनान्यथेति । चंद्रेप्रसवलग्नमपश्यति अर्केस्थिरराशिस्थेमध्याद्भ्रष्टेस्वदेशस्थस्यैवपितुःपरोक्षेजातः । अस्मिन्नेवयोगेद्विस्वभावस्थेर्केमध्याद्भ्रष्टेस्वदेशपरदेशयोर्मध्योपस्थितस्यपरोक्षेजातः अर्थादेवचंद्रेप्रसवलग्नमपश्यत्यर्केचरराशिस्थेस्थिरराशिस्थेवाद्विस्वभावराशिस्थेवामध्याद्भ्रष्टेपिवापितुःस्वदेशस्थस्यैवपरोक्षेजातइति वक्तव्यम् । तथाचसारावल्याम् ॥ होराम्नीक्ष्यमाणेपितरिनगेहस्थितेशशिनिजातः । मेषूरणाच्च्युतेवाचरगेभानौविदेशगते ॥ १ ॥

उदयस्थेपिवामंदेकुजेवास्तंसमागते ॥
स्थितेवांतःक्षपानाथेशशांकसुतशुक्रयोः ॥ २ ॥

अथान्यानपियोगानतुष्टुभाह ॥ उदयस्थइति ।मंदेसौरेउदयस्थेलग्नगतेपितुः परोक्षस्यजातः अथवाकुजेभौमेजन्मलग्नादस्तंसप्तमंस्थानंसमागतेप्राप्तेपितुः परोक्षस्यजातइति।स्थितेवांतरिति । क्षपानाथेचंद्रेशशांकसुतशुक्रयोर्मध्यस्थेशशांकसुतोबुधः शुक्रोभार्गवः अनयोर्मध्यस्थितेचंद्रादेकोद्वादशेन्योद्वितीये अथवैकस्मिन्राशौमध्यभागेपुचंद्रःस्थितःआद्यंतभागयोर्बुधशुक्रौतथापिमध्यस्थः एवंविधेयोगेपितुःपरोक्षस्यजातः।तथाचस्वल्पजातके॥चंद्रेलग्नमपश्यतिमध्येवासौम्यशुक्रयोश्चंद्रे । जन्मपरोक्षस्यपितुर्यमोदयेवाकुजेचास्तेइति ॥ २ ॥

शशांकेपापलग्नेवावृश्चिकेशत्रिभागगे ॥
शुभैःस्वायस्थितैर्जातःसर्पस्तद्वेष्टितोपिवा ॥ ३ ॥

अधुनासर्पज्ञानंसर्पवेष्टितज्ञानंचानुष्टुभाह ॥ शशांकइति । वृश्चिकेशोवृश्चिकस्वामीभौमः शशांकेचंद्रेवृश्चिकेशत्रिभागगेभौमद्रेष्काणस्थेतत्रभौमद्रेष्काणः मेषेप्रथमः कर्कटेद्वितीयः सिंहेतृतीयः वृश्चिकेप्रथमः धनुषिद्वितीयः मीने-

तृतीयः एषामन्यतमस्थस्यचंद्रमसः शुभैः शुभग्रहैः- स्वायस्थितैर्द्वितीयैकादशस्थानस्थितैः सर्पेउरगोजातइतिवक्तव्यम् । पापलग्नेवेति।एवंपापग्रहसंबंधिलग्नोदयेयदाभौमद्रेष्काणोभवति तत्रपापलग्नेभौमद्रेष्काणः मेषप्रथमः कर्केटद्वितीयः सिंहेतृतीयः वृश्चिकेप्रथमः धनुषिद्वितीयः मीनेतृतीयः एषामन्यंतमस्योदयेलग्नाद्यदिशुभग्रहैर्व्येकादशस्थैस्तद्वेष्टितः सर्पवेष्टितोजंतुर्जात इतिवक्तव्यम्।अन्येपुनरेवंव्याचक्षते। चंद्रेपापलग्नेवाभौमद्रेष्काणस्थेतस्मादेवशुभग्रहैः स्वायस्थितैः विकल्पेनसर्पोवासर्पवेष्टितोवाजातइतिवक्तव्यम् । अत्रपूर्वव्याख्यासाध्वी । यस्माद्भगवान्गार्गिः॥भौमद्रेष्काणगेचंद्रेसौम्यैरायधनस्थितैः। सर्पस्तद्वेष्टितस्तद्वत्पापलग्नेविनिर्दिशेत् ॥ तथाचसारावल्याम् । भौमद्रेकाणगतेंदौलग्नेवासंस्थितेवदेज्जातम् । द्व्येकादशगैः सौम्यैरहिर्वेष्टितकोभुजंगोवा ॥ ३ ॥

चतुष्पादगतेभानौशेषैर्वीर्यसमन्वितैः ॥
द्वितनुस्थैश्चयमलौभवतःकोशवेष्टितौ ॥ ४ ॥

अधुनैकजरायुवेष्टितयोर्जन्मज्ञानमनुष्टुभाह॥चतुष्पादेति।भानौसूर्येचतुष्पादराशिगतेमेषवृषसिंहधन्विपरार्धमकरपूर्वार्धानामन्यतमस्थेशेषैरन्यैः सर्वग्रहैर्द्वितनुस्थैर्द्विस्वभावराशिस्थितैः स्ववीर्यसमन्वितैर्बलिभिश्चकोशवेष्टितौएकजरायुवेष्टितौ यमलौजायेते ॥ ४ ॥

छागेसिंहेवृषेलग्नेतत्स्थेसौरेथवाकुजे ॥
राश्यंशसदृशेगात्रेजायतेनालवेष्टितः ॥ ५ ॥

अधुनानालवेष्टितजन्मज्ञानमनुष्टुभाह॥छागइति ।छागोमेषः सिंहःप्रसिद्धः वृषोवृषभः एतैः छागसिंहवृषैर्लग्नस्थितैः एषामन्यतमोयदिलग्नगतोभवति तत्स्थेसौरेऽथवाकुजेतस्मिञ्छागसिंहवृषाणामन्यतमेलग्नगतेतत्स्थेतत्रस्थेसौरेशनैश्चरेऽथवाकुजेभौमेतत्रस्थेनालवेष्टितोजंतुर्जायते । नालशब्देननाड्योविधीयंते कस्मिन्नंगेवेष्टितइत्याह । राश्यंशसदृशेगात्रइति ।राशेरंशोराश्यंशः राशेः लग्नस्ययोनवांशकस्तत्कालमुदितः सचयद्राशिसंबंधीसचराशिर्यस्मिन्नंशेकालपुरुषस्य व्यवस्थितः कालांगानीत्यादिनाग्रंथेननिरूपितस्तत्सदृशेगात्रेतस्मिन्नेवांगेनालवेष्टितइतिवक्तव्यम् । तथाचसारावल्याम् ॥ सिंहाजगोभिरुदयेसूतेनालेनवेष्टितोजंतुः । लग्नेकुजेथसौरेराश्यंशसमानगात्रेपु ॥ ५ ॥

नलग्नमिंदुंचगुरुर्निरीक्षतेनवाशशांकंरविणासमागतम् ॥
सपापकोर्केणयुतोथवाशशीपरेणजातंप्रवदंतिनिश्चयात् ॥ ६ ॥

अधुनाजारजातंवंशस्थेनाह ॥नलग्नमिति।गुरुर्जीवोलग्नमुदयमिंदुंचंद्रंचयदिन निरीक्षतेनपश्यति लग्नचंद्रावेकराशिस्थौपृथक्स्थौवायदोभावपिगुरुणानदृश्ये-तेतदापरेणजारेणजातइतिनिश्चयात्प्रवदंतिकथयंतिमुनयः । अत्रयदिलग्नचंद्रौ जीवभागस्थौजीवनवांशकस्थौभवतः तदानपरजातइतिवक्तव्यम् । यस्माद्यव-नेश्वरः ॥ अजीवभागेप्यनवीक्षितेवाजीवेनचंद्रेथविलग्नभेवा।जातंपरोद्भूतमिति ब्रुवंतिवाच्योजनेनाथबलावलोकादिति ॥ १ ॥ नवांशशशांकमिति । शशां-कंचंद्रंरविणासूर्येणसमागतंसंयुक्तंगुरुर्नानिरीक्षतेचंद्रार्कावेकराशिस्थौयदिचबृह-स्पतिनानदृश्येतेतदापरेणजातः अथवा शशीचंद्रः सपापकः पापग्रहेणभौमेन सौरेणवायुक्तः तथाविधोर्केणसूर्येणयदियुक्तोभवतितथापिपरेणजातइति अ-त्राप्यन्येजीवदृष्टचनुवर्तिव्याख्यानंकुर्वंति।तदयुक्तम्।यस्माच्चंद्रार्कावेकराशिगतौ पापयुक्तावयुक्तौवाजीवेनदृश्यमानावदृश्यमानौवाजारजातजन्मकरौ तत्रचं-द्रार्कयोगःपापेनसमेत्यकिंकृतंभवति तस्माच्चंद्रार्कावेकराशिगतौ अपापौ जीवेनादृश्यमानौसपापौजीवेनदृश्यमानौ अदृश्यमानौवाजारजातजन्मकरौ निश्चयादवश्यंभवतः । अत्रचंद्रमायदिगुरुगृहेतद्रेष्काणतन्नवांशकद्वादशभाग-त्रिंशद्भागस्थोभवति अन्यत्रवाराशौगुरुणायुक्तस्तदानजारजातइति । यस्मा-द्भगवान्गार्गिः ॥ गुरुक्षेत्रगतेचंद्रेतद्युक्तेवान्यराशिगे । तद्रेष्काणेतदंशेवानपरै-र्जातइष्यते ॥ ६ ॥

क्रूरर्क्षगतावशोभनौसूर्याद्द्यूननवात्मजस्थितौ ॥
बद्धस्तुपितााविदेशगःस्वेवाराशिवशादथोपथि ॥ ७ ॥

अथजातस्यपितृबंधनयोगज्ञानंवैतालीयेनाह ॥ क्रूरर्क्षगताविति।क्रूरर्क्षाणिक्रू-रग्रहराशयः मेषसिंहवृश्चिकमकरकुंभाःकृष्णपक्षेक्षीणचंद्रेकर्कटः पापयुक्तेबुधे-पिकन्यामिथुने अशोभनौपापौ शनिभौमौक्रूरर्क्षगतौपापक्षेत्रस्थितौसूर्याद्द्वे-द्यूननवात्मजस्थितौ द्यूनंसप्तमंनवमंप्रसिद्धं आत्मजस्थानंपंचममेषामन्यतमस्थौ भवतस्तदाजातस्यपिताजनकोबद्धोवाच्यः । तस्यादित्याक्रांतराशिवशाद्बंधन-देशज्ञानमाह॥स्वेवाराशिवशादथोपथीति । चरराशिस्थेऽर्केपरदेशेबद्धः स्थिररा-शिस्थेर्केस्वदेशेद्विस्वभावेपथिमार्गे एवंराशिवशात्स्थानपरिज्ञानम् । अथोइत्ययं निपातोविकल्पे । केचित्स्वेवाराशिवशात्तथापथीतिपठंति ॥ ७ ॥

पूर्णेशशिनिस्वराशिगेसौम्येलग्नगतेशुभेसुखे ॥
लग्नेजलजेस्तगेपिवाचंद्रेपोतगताप्रसूयते ॥ ८ ॥

अधुनापोतगताप्रसवज्ञानंवैतालीयेनाह ॥ पूर्णइति । शशिनिचंद्रेपूर्णेपरिपूर्णमंडलेतस्मिंश्चस्वराशिगेकर्कटस्थितेतथासौम्येबुधेलग्नगतेउदयस्थे शुभेजीवे उदयात् सुखेचतुर्थेपोतगतानौस्थाप्रसूयते इतिवक्तव्यम् । तत्रान्येशुभैः सुखइतिपठंतिपठित्वाचैवंव्याचक्षते । शुभैःसुखे चतुर्थभवनेशुभैरितिबहुवचनंनघटते । लग्नेबुधउक्तःशुक्रबृहस्पतीशेषौशुभाभ्यामित्येवंप्राप्नोति । यत्क्रियतेशुभैरितितस्मादेवमवसीयते । पूर्णश्चंद्रमाःशुक्रबृहस्पतिभ्यांयुक्तोभवति तदाशुभैरितिभवति एतच्चमेषलग्नेतत्रस्थेबुधेपूर्णचंद्रेशुक्रबृहस्पतिभ्यांसमायुक्ते कर्कटव्यवस्थितेसर्वंयुज्यतइति । अयंपाठोमद्व्याख्यानेनयुक्तः यस्मान्मकरावस्थितेऽर्केकर्कटस्थश्चंद्रमाः पूर्णोभवति मकरव्यवस्थितेचार्केमकराच्चतुर्थभवनेमेषेबुधस्यसंभवोनास्ति । किंपुनर्मकरात्सप्तमराशौकर्कटकेशुक्रस्याप्यवस्थानमिति। तस्माच्छुभेसुखेइतिसप्तम्येकवचनांतएवपाठोन्याय्यः॥ शुभेसुखइति। तत्कथंजीवोव्याख्यातः । उच्यते । बुधोलग्नगतस्तस्माच्चतुर्थेशुक्रस्यावस्थानंनसंभवति अतोजीवइतिव्याख्यातम् । केचित्पूर्वशास्त्रानुसारेणेतिशुक्रइच्छन्ति।अथपोतगताप्रसवयोगोद्वितीयः । लग्नेजलजइति । लग्नेजलजेजलराशौकर्कटमकरपश्चिमार्द्धमीनानामन्यतमेतस्मादस्तगेसप्तमस्थानस्थेचंद्रेपूर्णेवा पूर्णेचपोतगतैवप्रसूयतइति । वाशब्दःप्रकारार्थः ॥ ८ ॥

आप्योदयमाप्यगःशशीसंपूर्णःसमवेक्षतेथवा ॥
मेषूरणबंधुलग्नगःस्यात्सूतिःसलिलेनसंशयः ॥ ९ ॥

अथोदकमध्यप्रसवज्ञानंवैतालीयेनाह ॥ आप्योदयमिति । आप्यराशयो मकरपश्चार्द्धकर्कमीनास्तेषामन्यतमस्योदयआप्योदयः ॥ जलराशिर्लग्नेभवतिशशीचंद्रश्चाप्यगोजलराशिस्थस्तदासूतिःप्रसवःसलिलेजलसमीपे नसंशयः निश्चयाद्वाच्यः । अथवासंपूर्णःशशीलग्नगमाप्योदयंसमवेक्षतेपश्यति तथापिसलिलेजलसमीपेप्रसूतिः ॥ मेषूरणबंधुलग्नगइति ।अथवाप्यराशावुदयगतेमेषूरणबंधुलग्नगोमेषूरणेदशमेबंधुस्थानेचतुर्थेलग्नेप्राग्लग्नेस्थितःस्याद्भवेत्तथापि सलिलेप्रसूतिरितिवदेत् । तथाचसारावल्याम् । सलिलभलग्नेचंद्रोजलराशौवीक्षतेथवापूर्णः ॥ प्रसवंसलिलेविद्याद्बंधूदयदशमगश्चयदा ॥ ९ ॥

उदयोडुपयोर्व्ययस्थितेगुप्त्यांपापनिरीक्षितेयमे ॥
अलिकर्किंयुतेविलग्नगेसौरेशीतकरेक्षितेवटे॥ १० ॥

अधुनाबंधनागारावटयोः प्रसवज्ञानंवैतालीयेनाह।उदयेति।उदयोलग्नमुडुपश्चंद्रः तयोरुदयोडुपयोरेकराशिस्थयोर्यमेसौरेव्ययस्थितेद्वादशस्थेतस्मिंश्चपापनिरीक्षि

तेगुप्त्यांबंधनागारेप्रसूयतइतिवक्तव्यम् ।सौरेशनैश्चरेअलिकर्कियुतेवृश्चिककुलीर-योरन्यतमस्थेविलग्नगेतस्मिंश्चशीतकरेक्षितेचंद्रदृष्टेऽवटेश्वभ्रेप्रसूतिर्वक्तव्या ।१०॥

मंदेऽब्जगतेविलग्नगेबुधसूर्येंदुनिरीक्षितेक्रमात् ॥
क्रीडाभवनेसुरालयेसोखरभूमिषुचप्रसूयते ॥ ११ ॥

अथक्रीडागृहदेवालयसोखरभूमिप्रदेशेषुप्रसवज्ञानंवैतालीयेनाह॥मंदेइति।मंदे शनैश्चरेऽब्जगतेजलराशिस्थेतथाभूतेविलग्नगेप्राग्लग्नस्थेक्रमात्परिपाट्याबुधसू-र्येंदुनिरीक्षितेक्रीडाभवनेसुरालयेसोखरभूमिषुचप्रसूयतइतिवदेत् ।एतदुक्तंभवति शनैश्चरेजलराशिस्थेलग्नगतेबुधनिरीक्षितेबुधदृष्टेक्रीडाभवनेरतिगृहेप्रसूयते। एवं सूर्येणार्केणनिरीक्षिते सुरालयेदेवगृहे इन्दुनाचंद्रेणनिरीक्षिते सोखरभूमिषुसवालु-कास्ववनिषुप्रसूयतइति ॥ ११ ॥

नृलग्नगंप्रेक्ष्यकुजःश्मशानेरम्येसितेंदूगुरुरग्निहोत्रे ॥
रविर्नरेंद्रामरगोकुलेषुशिल्पालयेज्ञःप्रसवंकरोति ॥ १२ ॥

अथश्मशानरम्यप्रदेशाग्निशालानृपदेवगृहगोकुलाशिल्पालयप्रसवज्ञानमुपजा-त्याह॥नृलग्नगमिति।पूर्वश्लोकान्मंदइत्यनुवर्ततेप्रत्यासन्नत्वात्।नृलग्नगंनरराशिल-ग्नस्थितंनरराशयोमिथुनकन्यातुलाधन्विपूर्वार्धकुंभाः तत्रगतंशनैश्चरंकुजोंगारकः प्रेक्ष्यदृष्ट्वाभौमोयदिपश्यति तदाश्मशानेप्रसवंजन्मकरोति । केचिन्नृलग्नदर्शी क्षितिजइतिपठंति।नृलग्नगंपश्यातितच्छीलोनृलग्नदर्शीक्षितिजः।रम्येसितेंदूइति। नरराशिलग्नगतंशनैश्चरयुक्तंसितः शुक्रःइंदुश्चंद्रोवापश्यतितदारम्येरमणीयेप्रदे-शेजन्मएवंविधंसौरं गुरुर्जीवः पश्यतितदाअग्निहोत्रेऽग्निशालायाम्। एवंविधंसौ-रिंरविः पश्यति तदानरेंद्रामरगोकुलेषुनरेंद्रगृहेराजवेश्मनिअमरगृहेदेवागारेवा गोकुलेगोशालायांवाप्रसूतिः।एवमेवबुधेनदृष्टेसौरेशिल्पालयेशिल्पिगृहेचित्रपुस्त ककरवर्धकिप्रभृतीनांशिल्पिनामालयेगृहेप्रसूतिरिति। तथाचसारावल्याम्।रवि-जेजलजविलग्नेक्रीडोद्यानेबुधेक्षितेप्रसवः॥रविणादेवागारेतथोखरेचैवचंद्रेण १॥ आरण्यभवनलग्नेगिरिवनदुर्गेतथानराविलग्ने । रुधिरेक्षितेश्मशानेशिल्पिकनिल-येचसौम्येन ॥ तथाचबादरायणः।सूर्येक्षितेगोनृपदेववासेशुक्रेंदुजाभ्यांरमणीय-देशे ॥ सुरेज्यदृष्टे द्विजवन्हिहोत्रेनरोदयेसंप्रवदंतिसूतिम् ॥ १२ ॥

राश्यंशसमानगोचरेमार्गेजन्मचरेस्थिरेगृहे ॥
स्वर्क्षांशगतेस्वमंदिरेबलयोगात्फलमंशकर्क्षयोः ॥ १३ ॥

अथप्रसवदेशज्ञानंवैतालीयेनाह॥राश्यंशेति।राशिश्चअंशश्चतद्राश्यंशंराशिर्ल-ग्नराशिरंशोनवांशकः लग्नराशेस्तन्नवांशकस्यवायः समानः सदृशःस्वात्मीयगोच रोविषयःखचराश्चसर्वइत्यनेनप्रदर्शितःतत्रयस्मिन्यास्मिन्प्रदेशेयोयोराशिरूपःप्रा-णीसंचरातितत्रयोमार्गः पंथास्तस्मिञ्जन्म । यदिचरेलग्नराशिस्तन्नवांशकोवा चरोभवति अथलग्नराशिस्तन्नवांशकोवास्थिरस्तदाराशिस्वरूपतुल्यस्यप्राणिनः यस्मिन्गृहेयत्रप्रसवेसतितत्स्थाने । राशिस्वरूपतुल्यस्यप्राणिनोयद्गृहंसमीपस्त-त्रप्रसवइत्यर्थः।स्वर्क्षांशगतइति । चरस्यस्थिरस्यद्विस्वभावस्यवाराशेर्लग्नगतस्य स्वर्क्षांशआत्मीयनवांशकोदयोयदाभवति तदास्वमंदिरे आत्मीयगृहेएवजन्मव-क्तव्यम्।तत्रराश्यंशसमानगोचरेमार्गेजन्मइत्यादिसामान्येनोक्तं तत्रज्ञायतेकिंल-ग्नराशिसमानगोचरे किमंशसमानगोचरेप्रसवादेशःक्रियतांतदर्थमयंनिश्चयः ॥ बलयोगादिति । अंशकोनवांशकः ऋक्षंराशिः अनयोर्बलयोगात्फलंप्रसव-स्थानज्ञानम् । एतदुक्तंभवति लग्नराशेर्नवांशकराशेश्चयोबलवांस्तत्समानगोचरे-षुमार्गगृहसमीपेषुप्रसवोवक्तव्यः।अत्रपूर्वोक्तयोगाभावेराश्यंशसमानगोचरमार्गा-दिषुप्रसवोवक्तव्यः । तेषांसंभवेयोगोक्तप्रदेशेष्वेवप्रसवोवक्तव्यः ॥ १३ ॥

आरार्कजयोस्त्रिकोणगेचंद्रेऽस्तेचविसृज्यतेंबया ॥
दृष्टेमरराजमंत्रिणादीर्घायुःसुखभाक्चसस्मृतः ॥ १४ ॥

अथयस्मिन्योगेजातोमात्रात्यज्यतेयस्मिंश्चयोगेजातस्त्यक्तोपिमात्रादीर्घायु-सुखीचभवति तद्योगद्वयंवैतालीयेनाह॥आरार्केति।चंद्रेशशिन्यारार्कजयोर्भौमः सौरयोरेकराशिगतयोस्त्रिकोणगेनवमस्थेपंचमस्थेवाऽस्तेचसप्तमेस्थानेस्थितेजा-तोंबयामात्राविसृज्यतेत्यज्यते । एवंविधेयोगेचंद्रमसिअमरराजमंत्रिणागुरुणा दृष्टेमात्रात्यक्तोपिपरहस्तगतोपिदीर्घायुः चिरजीवीसुखभाक्चभवति ॥ १४ ॥

पापेक्षितेतुहिनगावुदयेकुजेऽस्तेत्यक्तोविनश्यतिकुजार्कजयो-स्तथाये॥ सौम्येपिपश्यतितथाविधहस्तमेतिसौम्येतरेषुपर-हस्तगतोप्यनायुः ॥ १५ ॥

अथयस्मिन्योगेजातोमात्रात्यक्तोविनश्यतितद्वसंततिलकेनाह ॥ पापेक्षितइ-ति । तुहिनगौचंद्रेपापेक्षितेपापग्रहदृष्टेसौरेणार्केणवेत्यर्थः।तथाभूतेउदयेलग्नेस्थि-तेकुजेभौमेचाऽस्तेसप्तमस्थाने जातोमात्रात्यक्तोविनश्यति म्रियतइत्यर्थः । कु-जार्कजयोरिति । तथातेनैवप्रकारेणलग्नगते चंद्रमसिपापेक्षितेसूर्यदृष्टेकुजार्क-जयोर्भौमशनैश्चरयोरायेलग्नादेकादशेस्थितयोर्जातो मात्रात्यक्तोपि विनश्यति

म्रियतइत्यर्थः।सौम्येपिपश्यतीति । पूर्वोक्तयोगस्थेचंद्रमसिपापदृष्टेसौम्येशुभग्रहेपिपश्यतिसति जातोमात्रात्यज्यते त्यक्तोपियादृग्वर्णप्रभुणासौम्यग्रहेणचंद्रमसादृष्टस्तथाविधस्यहस्तमेतितादृग्वर्णस्यब्राह्मणादेर्हस्तंगच्छतितेनधार्यतेजीवतिच । अथास्मिन्नेवयोगेस्थितश्चंद्रमाः पापेनकुजेनसूर्येणसौरेणवादृश्यतेऽन्येनसौम्यग्रहेणचदृश्यते तदाजातस्तयोर्द्रष्टृग्रहयोर्योबलवांस्तादृग्वर्णस्यब्राह्मणादेर्हस्तंगतोपिविनश्यति।यदुक्तम् । सौम्येतरेषुपरहस्तगतोप्यनायुरिति।ननुयथायोगस्थेचंद्रमसिसौम्यैः पापैश्चदृश्यमानेमात्रात्यक्तोविनश्यतीत्यभिहितंतत्रक्षत्रियवैश्यशूद्रवर्णसंकरादिषुहस्तगतः सर्वएवविनाशमाप्नोति । बहवश्च मात्रात्यक्ताः क्षत्रियादिवर्णसंकरगताश्चजीवमानादृश्यंते तस्मात्पूर्वश्लोकादृष्टेऽमरराजमंत्रिणादीर्घायुः सुखभाक्चसस्मृतइत्येतदिहशेषभूतमवगंतव्यम् । तस्माद्बुधेनशुक्रेणवायथादर्शितयोगस्थश्चंद्रमादृश्यते जीवेननदृश्यते तदापरहस्तगतोपिम्रियते । यदापापेनसौम्येनवादृश्यमानोपिजीवेनदृश्यतेतदाद्रष्टृग्रहयोर्बलवशात्तद्वर्णस्यब्राह्मणादेर्हस्तगतोजीवति । तथाचसारावल्याम् । म्रियते पापैर्दृष्टे शशिनिविलग्नेकुजेस्तगेत्यक्तः ॥ लग्नाच्चलाभगतयोर्वसुधासुतमंदयोरेवम्।पश्यतिसौम्योबलवान्यादृग्गृह्णातितादृशोजातम् । शुभपापग्रहदृष्टेपरैर्गृहीतोप्यसौम्रियते ॥ सर्वेष्वेतेषुयदायोगेषुशशिसुरेज्यसंदृष्टः। भवतितदादीर्घायुर्हस्तगतः सर्ववर्णेषु ॥ १५ ॥

पितृमातृगृहेषुतद्बलात्तरुशालादिषुनीचगैःशुभैः ॥
यदिनैकगतैस्तुवीक्षितोलग्नेंदूविजनेप्रसूयते ॥ १६ ॥

अधुनाप्रसवगृहज्ञानंवैतालीयेनाह॥पितृमातृगृहेष्विति।पितृमातृग्रहादिवार्कशुक्राविस्यादिनोक्तास्तद्बलात्पितृमातृग्रहवीर्यात्पितृमातृगृहेषुप्रसूयतइतिवदेत् । तत्रार्कशनैश्चरयोरन्यतमेबलवतिपितृगृहेपितृष्वसृपितृव्यादिसंबंधिगृहेप्रसूतिः। एवंमातृग्रहयोश्चंद्रशुक्रयोरन्यतमेबलवति मातृगृहेमातृष्वसृमातुलादिगृहे प्रसूतिः।तरुशालादिषुनीचगैः शुभैरिति । बहुवचनात्सर्वएवशुभग्रहाः यदानीचस्था भवंतितदातरुषुवृक्षेषुशालासुप्रसवोवाच्यः । आदिग्रहणान्नदीकूपारामपर्वतादिप्रदेशेष्वनावृतेषुइति।यदिनैकगतैरिति । नीचगैःशुभैरित्यनुवर्तते।सर्वेशुभग्रहाः नीचगतास्तैर्लग्नेंदूउदयचंद्रावुभावप्येकराशिगतैर्ग्रहैर्बहुवचनात्त्रिप्रभृतिभिर्यदा नदृश्येतेतदाविजनेजनरहितस्थानेऽटव्यांप्रसूतिरिति।यदापुनरेकस्थैर्बहुभिर्ग्रहैर्लग्नेंदूदृश्येतेतदाजनाकीर्णेप्रसूतिरिति । तथाचसारावल्याम् । पितृमातृग्रहवर्गैतत्स्वजनगृहेषुबलयोगात् । प्राकारतरुनदीषुचसूतिर्नीचाश्रितैःसौम्यैः॥नेक्षितेलग्नेंदूयद्येकस्थाग्रहास्तदाटव्याम् ॥ १६ ॥

मंदर्क्षांशेशशिनिहिबुकेमंददृष्टेऽब्जगेवातद्युक्तेवातमसिशयनं नीचसंस्थैश्चभूमौ ॥ यद्वद्राशिर्व्रजतिहरिजंगर्भमोक्षस्तुतद्व-त्पापैश्चंद्रस्मरसुखगतैःक्लेशमाहुर्जनन्याः ॥ १७ ॥

अधुनादीपसंभवासंभवभूप्रदेशप्रसवज्ञानंगर्भमोक्षंमातुः सूतिकालेतन्निमित्त-क्लेशज्ञानंचमंदाक्रांतयाह॥मंदर्क्षांशइति।शशिनिचंद्रेयत्रतत्रराशौमंदर्क्षांशेशनैश्चर स्यनवभागेमकरकुंभयोरन्यतमांशकस्थेतमस्यंधकारेसूतिकाशयनंवक्तव्यम्।हि-बुकेलग्नाच्चतुर्थस्थेचंद्रेंऽधकारएवशयनम् । यत्रतत्रावस्थितेचंद्रेमंदेनसौरेणदृष्टेंऽ-धकारएव। अब्जगेवेति। अब्जराशीअत्रकर्कटमीनौद्वौविज्ञेयौ मकरकुंभयोरुक्त-त्वात्। मंदर्क्षांशइत्यादिनेति । तेनयत्रतत्रराशौकर्कटनवांशकस्थेचंद्रेतमस्यं-धकारएव । मीननवांशकस्थेवातमस्यंधकारएव। तद्युक्तेवेति।तदितिसौरःपरा-मृश्यते।यत्रतत्रावस्थितेचंद्रेसौरयुक्तेंधकारएव। एवंनिषेककालेनारीशयनमपि। सर्वेष्वेतेषुयोगेषुयदार्कदृष्टश्चंद्रमाभवतितदांधकाराभावः । यस्माद्यवनेश्वरः। सौरांशकस्थेशशिनिप्रलग्नेजलेजलाख्यांशकमाश्रितेवा । स्वांशस्थितेकेंद्रगतेर्के-जेवाजातस्तमिस्रेयदिनार्कदृष्टः ॥ १ ॥ अन्येषांमतंयथा । सूर्येबलवतिभौमेन दृष्टेसत्स्वपियोगेष्वंधकाराभावः। तथाचसारावल्याम्।बलवतिसूर्येदृष्टेबहुप्रदी-पाधराकुपुत्रेण । अन्यैर्व्यपगतवीर्यैःसूतौज्योतिस्तृणैर्भवति ॥ सौरांशेजलजांशे चंद्रेऽर्कयुतेथवाहिबुके । तद्दृष्टेवाकुर्यात्तमसिप्रसवंनसंदेहः । नीचसंस्थैश्चभूमा-विति । शयनमित्यनुवर्तते । बहुवचनाद्यथासंभवंत्रिप्रभृतिभिर्ग्रहैर्नीचस्थैर्भूमौ शयनंवाच्यम्। भूशब्देनात्रतृणास्तृताभूर्ज्ञेया। केचिल्लग्नस्थेचतुर्थस्थेवानीचगते चंद्रेभूशयनमिच्छंति।तथाचसारावल्याम् । नीचस्थेभूशयनंचंद्रेप्यथवासुखेवि-लग्नेवा ॥ यद्वदिति।प्रसवलग्नराशिर्यद्वद्येनप्रकारेणहरिजंव्रजत्युदयलेखांपरित्य-जतितद्वत्तेनैवप्रकारेणनार्यागर्भमोक्षोवाच्यः। यत्राकाशंभूम्यासहसंसक्तंसमंता-द्दृश्यतेतद्धरिजम्। उक्तंच।हरिजमितिगगनमवनौसंपृक्तमिवलक्ष्यतेयथोक्तेषु।त-द्यथा शीर्षोदयेषुलग्नेषूत्तानास्योदरंदर्शयतोगर्भस्यमोक्षोवाच्यः पृष्ठोदयेष्वधो-मुखस्यपृष्ठंदर्शयतः मीनोदयेपार्श्वंदर्शयतः । तथाचसारावल्याम्। शीर्षोदयेवि-लग्नेमूर्ध्नाप्रसवोन्यथोदयेचरणैः। उभयोदयेचहस्तैः शुभदृष्टेशोभनोन्यथाकष्टः॥ केचिदेवंव्याचक्षते। यथालग्नाधिपोनवांशकाधिपोवा लग्नस्थोवाग्रहोवक्रीभवति तदावैपरीत्येनगर्भमोक्षोभवति । तथाचमणित्थः। लग्नाधिपेंशकपतौलग्नस्थेव-क्रितेग्रहेप्यथवा।विपरीतगतोमोक्षोवाच्योगर्भस्यसंक्लेशः । पापैरिति। पापग्रहै-श्चंद्रगतैःशशिनासहव्यवस्थितैःस्मरगतैर्लग्नात्सप्तमस्थैर्वा सुखगतैर्लग्नाच्चतुर्थ-स्थैर्वाप्रसवकालेजनन्यामातुःक्लेशमाहुःकष्टंकथयंतिसूरयः । तथाचसाराव-ल्याम्। क्लेशोमातुः क्रूरैर्बंध्वस्तगतैः शशांकयुक्तैर्वा ॥ १७ ॥

स्नेहःशशांकादुदयाच्चवर्तिर्दीपोर्कयुक्तर्क्षवशाच्चराद्यः ॥
द्वारंचतद्वास्तुनिकेंद्रसंस्थैर्ज्ञेयंग्रहैर्वीर्यसमन्वितैर्वा ॥ १८ ॥

अथदीपगृहद्वारज्ञानमिंद्रवज्रयाह ॥ स्नेहःशशांकादिति।शशांकाचंद्रात्स्नेहो वाच्यः जन्मकालेपूर्णेचंद्रमसिस्नेहेनपूर्णंदीपभाजनंवक्तव्यम् । क्षीणेक्षीणस्नेहाक्त-मिति।तथाचसारावल्याम्।दीपःपूर्णः पूर्णेशशिनिक्षीणेक्षयस्तुतैलस्य।।यद्येवंतदा-मावास्यायांसर्वेषामंधकारेप्रसवोभवति तस्मादयुक्तमेतत् । तेनयत्रराशौचंद्रमा व्यवस्थितस्तत्रयदिराशिप्रारंभेस्थितोभवतितदादीपभाजनंस्नेहेनपूर्णंवक्तव्यम्। यत्रराश्यवसानेस्थितस्तत्रस्नेहाक्तम्।मध्यप्राप्तेऽर्धम्।अन्यत्रानुपातादिति।उदया-च्चवर्त्तिः उदयाल्लग्नाद्दीपवर्तिरादेश्या लग्नारंभेतत्क्षणदत्तावर्त्तिरादेश्या मध्येअ-र्धदग्धावर्त्तिः लग्नावसानेवर्तिदाहोवाच्यः । अंतरेनुपातः । तथाचसा-रावल्याम् । यावल्लग्नादुदितंवर्तिर्दग्धातुतावतीभवति ॥ दीपोर्कयुक्तर्क्षवशा-दिति । अर्कोरविस्तद्युक्तराशिवशाच्चराद्योदीपोवाच्यः । तत्रचरराशिव्यव-स्थितेर्केसंचार्यमाणोदीपआदेश्यः स्थिरराशिस्थेर्केएकदेशस्थः । द्विस्वभावस्थे-र्केचलितप्रतिष्ठितइति । केचिद्वदंति यथायस्मिन्राशावर्कःस्थितः सरा-शिर्यस्यांदिशिस्थितः प्रागादीशः क्रियवृषनृयुक्कर्कटेत्यादिनाप्रदर्शितस्तस्यां दिशिदीपआदेश्यः । अन्येएवंवदंति यथायस्यां दिशिअर्कोभ्रमवेशे-नाष्टप्रहरकल्पनयाष्टासुदिक्षुपरिभ्रमतितेनैवक्रमेणयस्यांदिशिव्यवस्थितः तस्यां दिशिगृहस्यदीपस्थानमिति।तथाचसारावल्याम् । द्वादशभागविभक्तेवासगृहेव-स्थितेसहस्रांशौ।दीपश्चरस्थिरादिषुतथैववाच्यःप्रसवकाले । अत्रप्राच्यादिक्रमेण गृहंद्वादशधाविभज्यमेषादिगणनयार्कराशिर्यत्रभवतितत्रदीपस्थानमिति।केचि-ल्लग्नस्ययाद्दशोवर्णस्ताद्दग्वर्णोदीपवर्तिमिच्छंति।तथाचमणित्थः।।लग्नस्ययोत्रव-र्णोनिर्दिष्टस्तेनवर्तिरादेश्या।द्वारंचद्वास्तुनीति । तद्वास्तुनिसूतिकागृहेलग्नात्कें-द्रस्थैर्ग्रहैर्द्वारादेशः कार्यः तस्यग्रहस्ययादिक्प्राच्याद्यारविशुक्रलोहिततमइत्या-दिनोक्ताः तद्दिगभिमुखंसूतिकागृहंवक्तव्यं बहुषुकेंद्रेषुबलवद्ग्रहवशात् । शून्येषुके-न्द्रेषुतल्लग्नराशिवशात् लग्नस्ययादिक्तदभिमुखम् । यस्मादनेनैवस्वल्पजातकेउ-क्तम्।द्वारंवास्तुनिकेंद्रोपगताद्ग्रहादसतिवाविलग्नर्क्षात्।अन्येवदंति।यथा।लग्नद्वाद-शभागराशिदिगभिमुखंसूतिकागृहद्वारं।तथाचमणित्थः।लग्नेयोद्विरसांशस्तदभि मुखंमूतिकागृहेद्वारम् । एतच्चसंवादेनापिदृष्टमिति।वीर्यसमन्वितादित्युत्तरत्रसंब-ध्यते।केचिद्वदंति । यथावीर्यसमन्विताद्ग्रहाद्ग्रहद्वारंवदेत् । तथाचसारावल्याम् । वासगृहोद्यानगतंद्वारंदिक्पालकाद्बलोपेतादिति ॥ १८ ॥

जीर्णंसंस्कृतमर्कजेक्षितिसुतेदग्धंनवंशीतगौकाष्ठाढ्यंनदृढंर-
वौशशिसुतेतन्नैकशिल्प्युद्भवम् ॥ रम्यंचित्रयुतंनवंचभृगुजे
जीवेदृढंमंदिरंचक्रस्थैश्चयथोपदेशरचनांसामंतपूर्वांवदेत् ॥ १९॥

अधुनासूतिकागृहस्वरूपज्ञानंशार्दूलविक्रीडितेनाह॥जीर्णंसंस्कृतमिति। वीर्यसमन्वितादित्यनुवर्तते सर्वग्रहेभ्योर्कजेसौरेवीर्यवतिसबले जीर्णमितिचिरंतनं भूयःसंस्कृतंसूतिकागृहंवक्तव्यम्। क्षितिसुते भौमेबलवत्याग्निनादग्धं शीतगौचंद्रे नवं शुक्लपक्षेऽपलितंवदेत्।यस्माद्यवनेश्वरः ॥ संवर्धताचंद्रमसोपलितमिति।काष्ठाढ्यंनदृढंरवाविति।रवावादित्येकाष्ठाढ्यंदारुबहुलं नदृढमसारं शशिसुतेबुधे तद्गृहमनेकशिल्प्युद्भवंबहुविधशिल्पिरचितम्। रम्यंचित्रयुतमिति।भृगुजेशुक्रेरम्यं रमणीयंमनोरमंचपरं नवंनूतनंचित्रयुतंचित्रकर्मयुक्तम् । जीवेगुरौदृढंचिरकालस्थायि।चक्रस्थैर्भचक्राधिरूढैर्गृहदातृग्रहसमीपस्थैरन्यैर्ग्रहैः सामंतपूर्वांसमंतात्सर्वेदिक्षुयथोपदिष्टांवदेद्ब्रूयात् सामंतपूर्वांप्रतिवेश्मिकवेश्मनांसमंतात्क्रमेणेत्यर्थः। यथागृहदातृग्रहस्यपुरतः पश्चाद्वापार्श्वयोर्वाऽन्येग्रहाव्यवस्थितास्तेनैवक्रमेणसूतिकागृहस्यान्यानिप्रतिवेश्मगृहाणिवाच्यानि।अन्येसामंतपूर्वामितिपठंति समंताद्गृहपर्यंतपूर्विकांरचनामिति । तथाचसारावल्याम् । भवनग्रहसंयोगैः प्रतिवेश्माश्रितनीयाश्च॥देवालयांबुपावककोशविहाराद्यवस्करस्थानम्।निद्रागृहंचभास्करशशिकुजगुरुभार्गवार्किबुधयोगात्। अत्राचार्येणभूमिकाप्रमाणंनोक्तंत्रिशालद्विशालज्ञानंचतदुच्यते । बृहस्पतौकर्कटस्थेपरमोच्चाद्भ्रष्टेलग्नाद्दशमगेद्विभूमिकमुच्चभागेष्वर्वाक्स्थितेत्रिभूमिकम्।उच्चभागस्थेचतुर्भूमिकंधनुषिसबलेदशमस्थानस्थेगुरौत्रिशालंतद्गृहम्।मिथुनकन्यामीनस्थेद्विशालम्। उक्तंचस्वल्पजातके॥गुरुरुच्चेदशमस्थेद्वित्रिचतुर्भूमिकंकरोतिगृहम्। धनुषिसबलेत्रिशालंद्विशालमन्येषुविमलेष्विति ॥ १९ ॥

मेषकुलीरतुलालिघटैःप्रागुत्तरतोगुरुसौम्यगृहेषु ॥
पश्चिमतश्चवृषेणनिवासोदक्षिणभागकरौमृगसिंहौ ॥ २० ॥

अथसमस्तवास्तुनिकसूतिकागृहमितितद्विज्ञानंदोधकेनाह ॥ मेषेति । मेषः प्रसिद्धः कुलीरः कर्कटः तुलातुलएव अलिर्वृश्चिकः घटः कुंभः एषामन्यतमेलग्नेवास्तुनिप्राग्भागेनिवासःसूतिकास्थानंवक्तव्यम् । अंशेवा उत्तरतोगुरुसौम्यगृहेषु । गुरुगृहेधन्विमीनौ सौम्यगृहेमिथुनकन्ये । एतेषुलग्नेषुतदंशकेषु

चोत्तरतोवास्तुनिसूतिकागृहंवाच्यम् । वृषेणतदंशकेनचगृहपश्चिमभागेसूतिकागृहम् । मृगसिंहौ मकरकेसरिणौदक्षिणभागकराविति । दक्षिणभागेसूतिकागृहंकुरुतः ॥ २० ॥

प्राच्यादिगृहेक्रियादयोद्वौद्वौकोणगताद्विमूर्तयः ॥
शय्यास्वपिवास्तुवद्वदेत्पादैःषट्त्रिनवांत्यसंस्थितैः॥ २१ ॥

अथसूतिकागृहेक्शयनमितितज्ज्ञानंवैतालीयेनाह ॥ प्राच्यादिगृहइति । गृहे सूतिकावेश्मनिप्राच्यादिपूर्वाद्याःक्रियादयोमेषादयोराशयः द्वौद्वौचतसृषुदिक्षुकोणगताविदिक्स्थाद्विमूर्त्तयोद्विस्वभावाःतद्यथा।मेषवृषयोर्लग्नयोर्गृहस्यप्राग्विभागे सूतिकाशयनम् मिथुनेआग्नेय्याम् कर्कसिंहयोर्दक्षिणे कन्यायांनैर्ऋत्ये तुलावृश्चिकयोःपश्चिमे धनुषिवायव्ये मकरकुंभयोः उत्तरे मीनेऐशानेइति । एष एवविधिः शय्यास्वपिवक्तव्यः। अतउक्तम् शय्यास्वपिवास्तुवद्वदेदिति। किंत्वयंविशेषः । पादैःषट्त्रिनवांत्यसंस्थितैरिति । इहखट्वापादाः षट्त्रिनवांत्यराशयः लग्नात्षष्ठतृतीयनवमद्वादशराशयःपादाः परिकल्प्याः तत्रैतज्जातं येनलग्नेनप्रसवस्तदुक्तदिशिशय्यायाः शिरस्तस्मादेवषट्त्रिनवांत्याः पादाः तत्रद्वादशतृतीयौपूर्वपादौ तत्रापितृतीयोदक्षिणःपादोद्वादशोवामः षष्ठनवमौ पश्चिमपादौ तत्रापिषष्ठोदक्षिणोनवमोवामः लग्नद्वितीयौशीर्षभागः चतुर्थपंचमौदक्षिणमंगंसप्तमाष्टमौपादांतभागः दशमैकादशौवामांगम्।प्रयोजनम् विनतत्वंयमलर्क्षैः क्रूरैस्तत्तुल्यउपघातइति । यत्रद्विस्वभावराशयः स्थितास्तत्राविनतत्वं यत्रपापास्तत्रतत्सदृशोवोपघातः एवंसदैवानुपपन्नखट्वांगप्रसंगः । यस्मादवश्यंकचिदपियमलर्क्षेणपापग्रहैर्भवितव्यं तस्माद्यत्रयमलर्क्षंसौम्यग्रहस्वामियुतदृष्टंतत्राविनतत्वम् । पापग्रहोपिस्वोच्चराशित्रिकोणमित्रक्षेत्रस्थोशुभफलकरोनभवतीति ॥ २१ ॥

चंद्रलग्नांतरगतैर्ग्रहैःस्युरुपसूतिकाः ॥
बहिरंतश्चचक्रार्धेदृश्यादृश्येन्यथापरे ॥ २२ ॥

अधुनोपसूतिकासंख्यामनुष्टुभाह ॥ चंद्रलग्नेति।लग्नादारभ्ययत्रराशौचंद्रमा व्यवस्थितस्तदंतरेतयोर्मध्येयावंतोग्रहाव्यवस्थितास्तेचंद्रलग्नांतरगताग्रहास्तैरुपसूतिकाः स्युः । तावत्संख्याउपसूतिकाः समीपवर्तिन्यः स्त्रियः स्युर्भवेयुः । ताश्चग्रहजातिवयोवर्णरूपाः । तथाचसारावल्याम् ॥ शशिलग्नविवरयुक्ताग्रहतुल्याः सूतिकाश्चविज्ञेयाः।अनुदितचक्रार्धयुतैरंतर्बहिरन्यथावदंत्येके॥लक्षणरूप-

विभूषणयोगास्तासांशुभैर्योगात्।क्रूरैर्विरूपदेहालक्षणहीनाश्चरौद्रमलिनाश्च॥मि-श्रैर्मध्यमरूपाबलसहितैः सर्वमेतदवधार्यम्॥बहिरंतश्चेति । तत्रयावंतोग्रहादृश्ये चक्रार्धेव्यवस्थितास्तावत्संख्याउपसूतिकागृहबाह्येवक्तव्याः । यावंतश्चादृश्ये चक्रार्धेव्यवस्थितास्तावत्संख्याआभ्यंतरेवक्तव्याः । तत्रलग्नस्ययावंतउदिताभा-गास्तथाद्वादशैकादशदशमनवमाष्टमाराशयस्तथासप्तमराशेर्लग्नोदितभागतुल्यां शादृश्यमर्धंशेषमदृश्यमिति । अन्यथापरे । अपरेअन्येआचार्याअन्यथाऽन्येन प्रकारेणदृश्यचक्रार्धेअभ्यंतरगतावर्णयंति । अदृश्येबाह्यस्थाज्ञेयाः । तथाचजीव-शर्मा । उदयशशिमध्यस्थैर्ग्रहैःस्युरुपसूतिकास्तत्र । उदगर्धस्थैर्बाह्येदक्षिणगैरं-तरेज्ञेयाः॥एतदाचार्यस्यनाभिप्रेतम्।यतोनेनैवस्वल्पजातकेउक्तम् । शशिलग्नांत-रसंस्थाग्रहतुल्याः सूतिकाश्चवक्तव्याः।उदगर्धेभ्यंतरगाबाह्याश्चक्रस्यदृश्येर्धे॥अ-त्रचायुर्दायविधिनास्वतुंगवक्रोपगतैस्त्रिसंगुणमित्यादिनाद्वित्रिगुणत्वंकृत्वाग्रह-स्थानवशादुपसूतिकानिश्चयः कार्यः।यदिबहुजनप्रसूतियोगानभवंति तथापिग्र-हसंख्याधिसूतिकासंभवोयत्रभवतितत्रबहुजनप्रसूतियोगेनभवितव्यमिति ॥२२

लग्ननवांशपतुल्यतनुःस्याद्वीर्ययुतग्रहतुल्यतनुर्वा ॥
चंद्रसमेतनवांशपवर्णःकादिविलग्नविभक्तभगात्रः ॥ २३ ॥

अथजातस्यस्वरूपादिज्ञानंदोधकेनाह॥लग्नेति।जन्मकालेलग्नेयोनवांशकउदि-तस्तस्ययः स्वामीसलग्ननवांशपः तत्तुल्यतनुस्तदाकारोजातोवक्तव्यः । यथा मधुपिंगलदृगित्यादि । अथवाजातकालेसर्वग्रहेभ्योयोग्रहोवीर्ययुतोबलवां-स्तत्तुल्यतनुर्वावक्तव्यः । यदिलग्ननवांशकस्थोराशिर्बलवान्भवतितदातदी-शतुल्यतनुर्भवति । अन्यथासर्वग्रहेभ्योयोवीर्यवान्ग्रहस्तत्तुल्यतनुरिति । चंद्रस-मेतइति ॥ योनवांशःशशिनाचंद्रेणसमेतश्चंद्रोयस्मिन्नवांशकेस्थितइत्यर्थः । तस्यनवांशराशेर्योधिपतिः सचंद्रसमेतनवांशपतिस्तस्ययोवर्णस्तद्वर्णोजातोभ-वति । अत्रचवर्णोरक्तःश्यामोभास्वरोगौरइति । अन्येचंद्राक्रांतराशिवर्णमेवा-हुः यथारक्तःश्वेतःशुकतनुनिभइत्यादि । अत्रशुकवर्णस्यासंभवादयुक्तमेतत् । एतच्चवर्णादिजातिकुलदेशान्बुद्ध्वावक्तव्यम् । उक्तंच बलिनःसदृशीमूर्तिर्बुद्ध्वावा जातिकुलदेशानिति।कादिविलग्नविभक्तभगात्रइति । आधानविधिनाशीर्षादी-नामवयवानांह्रस्वदीर्घत्वंनिरूपयति । कादिभिर्विलग्नभैर्लग्नराशिभिःविभ-क्तानिगात्राणि यस्यसः । कादिविलग्नविभक्तभगात्रः तत्रलग्नादयोराश-यःकादिपुशिरःप्रभृतिगात्रेपुपरिकल्प्याः । यथाकालांगानि । तत्रलग्नंशिरः द्वि-तीयोराशिर्वक्त्रम् तृतीयउरः चतुर्थोहृत् पंचमःक्रोडः षष्ठःकटिः सप्तमोबस्तिः अष्टमःशिश्नगुदे नवमोवृषणौ दशमऊरू एकादशोजानुनी द्वादशोजंघा-

पादौ।अत्रचराशीनांप्रमाणमुक्तम् पूर्वार्द्धविषयादयइति । तत्रयत्रांगस्थेदीर्घराशौदीर्घराश्यधिपोग्रहोव्यवस्थितोभवति तदंगंतस्यदीर्घंवक्तव्यम् । तथाचसत्यः॥दीर्घाधिपतिर्दीर्घंग्रहःस्थितोवयवदीर्घकृद्भवति ।अर्थादेवाल्पप्रमाणराशावल्पराश्यधिपोग्रहोव्यवस्थितस्तदंगाल्पकृद्भवति । दीर्घराश्यधिपोऽल्पराशिव्यवस्थितःसमध्यमकृत् । अल्पराश्यधिपोदीर्घराशौव्यवस्थितोंगमध्यमकृत् । यत्रांगराशौबहवोव्यवस्थितास्तत्रबलवद्ग्रहवशाद्वाच्यम् यत्रनकश्चिद्व्यवस्थितःतत्रराशिप्रमाणतएवांगंवाच्यम् ॥ २३ ॥

इति सूतिकाप्रकरणम् ॥

कंदृक्छ्रोत्रनसाकपोलहनवोवक्रंचहोरादयस्तेकंठांसकबाहुपार्श्वहृदयक्रोडानिनाभिस्ततः ॥ बस्तिःशिश्नगुदेततश्चवृषणावूरूततोजानुनीजंघांघ्रीत्युभयत्रवाममुदितैर्द्रेष्काणभागैस्त्रिधा ॥२४॥

अत्रैवसूतिकाध्यायेजातस्यव्रणमशकादिनिरूपणार्थमंगप्रकरणमारभ्यते । तत्रलग्नप्रथमद्वितीयतृतीयद्रेष्काणवशेनप्रथमद्वितीयतृतीयशरीरभागपरिच्छेदः तत्रशिरःप्रभृतियावद्वक्रंप्रथमोंगविभागःशिरोधस्ताद्यावन्नाभिस्तावद्वितीयः तदधस्तात्तृतीयः ॥ तेषामंगविभागानांराशिविभागंशार्दूलविक्रीडितेनाह । कंदृगिति । त्रिभिःप्रकारैस्त्रिधा त्रिभिर्द्रेष्काणभागैस्त्रिधाशरीरप्रविभागः । तत्रलग्नस्यप्रथमद्रेष्काणेउदयतिप्रथमोमूर्धाद्यंगविभागः । द्वितीयेद्रेष्काणेउदयतिकंठपूर्वकोद्वितीयोंगविभागः । तृतीयेद्रेष्काणेउदयाति बस्तिपूर्वकस्तृतीयः ॥ तत्राप्यंगविभागेवामदक्षिणवर्त्यवयवज्ञानंकथमित्याह । वाममुदितैरिति । राशिभिरुदितैः दृश्यभागावस्थितैर्वामोंगविभागः । लग्नस्योदितभागाः । तथाद्वादशैकादशदशमनवमाष्टमाः । तथासप्तमस्यराशेर्लग्नोदिततुल्यभागाः । एषभागउदितः शेषोनुदितः अर्थादनुदितैरदृश्यैर्दक्षिणइति । तत्रलग्नानुदितभागास्तथाद्वितीयतृतीयचतुर्थपंचमषष्ठाः । सप्तमराशेर्लग्नोदिततुल्यभागाः । एवंस्थितेलग्नप्रथमद्रेष्काणोदयोलग्नराशिः । कंशिरः कल्पनीयम् । लग्नाद्वितीयद्वादशेदृक्चक्षुषी । तत्रद्वितीयोदक्षिणमक्षि । द्वादशोवामम्।तृतीयैकादशौश्रोत्रे।तत्रतृतीयोदक्षिणम्।एकादशोवामम्।चतुर्थदशमौनासापुटे। चतुर्थोदक्षिणम् । दशमोवामम् । पंचमनवमौकपोलौ पञ्चमो दक्षिणः । नवमोवामः । षष्ठाष्टमौहनू । षष्ठोदक्षिणम् । अष्टमोवामम् सप्तमोवक्रंमुखम् एवंराश्याद्युपलक्षितः प्रथमोंगविभागः तेकंठांशकइति । अथद्वितीयद्रेष्काणोदयः कंठाद्योद्वितयिंगविभागेपरिकल्प्यः । तद्यथा लग्नंकंठो

गलकः द्वितीयद्वादशौस्कंधौ तत्रद्वितीयोदक्षिणस्कंधोद्वादशोवामः तृतीयैकादशौबाहू तत्रतृतीयोदक्षिणएकादशोवामः चतुर्थदशमौपार्श्वे तत्रचतुर्थोदक्षिणं दशमोवामं पंचमनवमौहृद्भागौ तत्रपंचमोदक्षिणः नवमोवामः षष्ठाष्टमौक्रोडउदरभागौ षष्ठोदक्षिणः अष्टमोवामः सप्तमोनाभिरिति।नाभिग्रहणमुदरोपलक्षणार्थम्।एवंद्वितीयोंगविभागः।बस्तिः शिश्नगुदेइति।लग्नद्रेष्काणेतृतीयेउदयतितएव होरादयस्तृतीयेंगविभागेपरिकल्प्याः।तद्यथा।लग्नंबस्तिःनाभिलिंगयोर्मध्यभागः द्वितीयद्वादशौशिश्नगुदे तत्रद्वितीयोदक्षिणभागः द्वादशोवामः। ततोनंतरंतृतीयैकादशौवृषणौ। तृतीयोदक्षिणः एकादशोवामः। चतुर्थदशमौऊरू। चतुर्थोदक्षिणः दशमोवामः । पंचमनवमौजानुनी। पंचमोदक्षिणम्। नवमोवामम्। षष्ठाष्टमौजंघे। षष्ठोदक्षिणजंघा अष्टमोवामजंघा।सप्तमः पादद्वयमिति ॥ २४॥

तस्मिन्पापयुतेव्रणंशुभयुतेदृष्टेचलक्ष्मादिशेत्स्वर्क्षांशेस्थिरसंयुतेषुसहजःस्यादन्यथागंतुकः ॥ मंदेश्मानिलजोग्निशस्त्रविषजोभौमेबुधेभूभवःसूर्येकाष्ठचतुष्पदेनहिमगौशृंग्यब्जजोन्यैःशुभम् ॥ २५ ॥

अथांगज्ञानप्रयोजनंशार्दूलविक्रीडितेनाह॥तस्मिन्पापयुतइति । तत्रप्रथमद्रेष्काणेजातस्यशिरोंगविभागोद्वितीयद्रेष्काणेजातस्यकंठाद्यंगविभागः तृतीयद्रेष्काणेजातस्यबस्त्याद्यंगविभागः। यत्रपापग्रहो व्यवस्थितस्तस्मिन्पापयुतेव्रणो वाच्यः। तस्मिन्नेवपापयुतेंगराशौशुभयुतेदृष्टे । सौम्यग्रहसंयुक्तेऽवलोकितेवातद्राश्युपलक्षितेंगेलक्ष्मादिशेत् मशकादिचिह्नंवाच्यम्। स्वर्क्षांशइति।सएवग्रहोव्रणमशकादिकर्तास्वर्क्षेस्वराशौस्वनवांशकेवास्थितोभवति स्थिरराशौस्थिरांशके वास्थितस्तदाव्रणमशकादिसहजोत्पन्नंतस्यजंतोर्भवति । अन्यथोक्तविपर्ययस्थे आगंतुकोजातस्योत्तरकालेकेनचिन्निमित्तेनवक्ष्यमाणेनस्वदशाकालेएववक्तव्यः। आगंतुकस्यव्रणादेर्ग्रहवशेननिमित्तमाह।मंदेश्मानिलजइति।मंदेशनैश्चरेव्रणकर्तृत्वंप्राप्तेसव्रणादिरश्मजःपाषाणहेतुकोऽनिलजोवातव्याधिहेतुकोवावक्तव्यः।भौमेव्रणकर्तृत्वेप्राप्तेऽग्निशस्त्रविषजोऽग्निहेतुकःशस्त्रहेतुकोविषहेतुकोवावक्तव्यः। बुधे भूभवःभूस्थितपातादुच्छ्रितपाताद्भूम्यधिपातहेतुकोलोष्टप्रहारहेतुकोवा।सूर्येरवौ काष्ठप्रहारहेतुकश्चतुष्पदप्राणिहेतुकोवावक्तव्यः । हिमगौचंद्रेशृंग्यब्जजः शृंग्यभिघातहेतुकःशृंगेविद्येतेयस्यप्राणिनः सश्रृंगीतज्जातोब्जजोवाजलप्राणिहेतुको वावक्तव्यः।अन्यैः शुभम् ।अन्येग्रहायत्रांगदेशस्थाभवंति तत्रशुभव्रणादिकराभवंति।तत्रावशेषौगुरुसितौतत्किंबहुवचनम्। उच्यते।बुधः पापयुक्तोव्रणकरःक्षीणश्चंद्रमा नान्यथाततोन्यैःशुभमित्युक्तम् ॥ २५ ॥

समनुपतितायस्मिन्भागेत्रयःसबुधाग्रहाभवतिनियमात्तस्या-
वाप्तिःशुभेष्वशुभेषुवा ॥ व्रणकृदशुभःषष्ठेदेहेतनोर्भसमाश्रि-
तेतिलकमशककृद्दृष्टःसौम्यैर्युतश्चसलक्ष्मवान् ॥ २६ ॥

## इतिजन्मविधिनामाध्यायः समाप्तः ॥ ५ ॥

अथव्रणज्ञानंहरिण्याह ॥ समनुपतिताइति । यस्मिन्भागेवामेदक्षिणेवात्रयः सबुधाग्रहाः त्रयोन्येग्रहाश्चतुर्थेनबुधेनसहिताः समनुपतिताः समाश्रितास्तत्रांगे पूर्वप्रक्रांतस्यव्रणादेर्नियमान्निश्चयादवश्यंप्राप्तिर्भवतिशुभेष्वशुभेषुवा तेग्रहाःसबुधाःशुभाःसौम्याःअशुभाः पापावाभवंति तथापितत्रांगेतस्यव्रणावाप्तिर्वक्तव्या तेषांमध्येयोबलीसस्वदशायांकरोति । व्रणकृदिति । लग्नात्षष्ठेस्थानेअशुभः पापेग्रहोव्यवस्थितोदेहेशरीरेव्रणकृद्भवति । कस्मिन्स्थाने । तनोर्भसमाश्रिते तनोर्लग्नात्सषष्ठस्थोराशिः कालांगानीत्यनेनदर्शितांगविभागेयस्मिन्भवतितस्मिन्भसमाश्रितेराशियुक्तेदेहेशरीरेभवति । अत्रापिस्वर्क्षांशस्थिरसंयुतेषुसहजः स्यादन्यथागंतुकइत्यनुवर्तनीयम् । सएवषष्ठस्थानस्थःपापःसौम्येनशुभग्रहेणयदादृष्टोभवतितदातत्रांगेतिलकमशकृद्भवति तिलकः कृष्णोबिंदुःमशकोर्बुदः । अथशुभग्रहेणसएवपापोयुतस्तदासलक्ष्मवान्भवति राश्युपलक्षितमंगंसचिह्नंभवति । अत्रस्थानेघनोलोमनिचयोलक्ष्मेति ॥ २६ ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौजन्मविधिनामाध्यायःपंचमःसमाप्तः ॥५॥

संध्यायांहिमदीधितिहोरापापैर्भांतगतैर्निधनाय ॥
प्रत्येकंशशिपापसमेतैःकेंद्रैर्वासविनाशमुपैति ॥ १ ॥

अथारिष्टाध्यायोव्याख्यायते । तत्रतावज्जातस्यारिष्टसंभवेसत्यायुर्दायाष्टकवर्गादेशःकर्तव्यःतस्मात्प्रथममरिष्टाध्यायंवक्ष्यति।तत्रारिष्टद्वयंविद्युन्मालयाह ॥ संध्यायामिति ।संध्यालक्षणंसंहितायामुक्तम्।अर्धास्तसमयात्संध्याव्यक्तीभूतान तारकायावत् । तेजःपरिहानिमुखाद्भानोरर्धोदयोयावत्॥अस्मिन्संध्याकालइति तत्रजन्मनियस्यसंध्याकालेभवति तत्काललग्नगताहिमदीधितेश्चंद्रस्यहोराभवति यथासंभवंपापैर्भांतगतैः यत्रतत्रराशिस्थांत्यनवांशगताःपापाभवंति तदैष योगोजातस्यनिधनायमरणायभवति।प्रत्येकमिति।एकमेकमितिप्रत्येकंशशीचंद्रः पापास्त्रयश्चतुर्षुकेंद्रेषुव्यवस्थिताभवंति ॥ एतदुक्तंभवति ।आदित्यचंद्रांगारकशनैश्चैर्यथासंभवंचत्वार्यपिकेंद्राण्याक्रांतानिभवंति तथापियस्यजन्मभवतिसविनाशमुपैति म्रियतइत्यर्थः ॥ १ ॥

१ इदं वृत्तं विद्युन्मालाख्यं नास्ति ।

चक्रस्यपूर्वापरभागगेषुक्रूरेषुसौम्येषुचकीटलग्ने ॥
क्षिप्रंविनाशंसमुपैतिजातःपापैर्विलग्नास्तमयाभितश्च ॥ २ ॥

अथान्यानरिष्टयोगानिंद्रवज्रयाह । चक्रस्येति । यावंतोभागालग्नस्योदितास्तावंतएवभागालग्नचतुर्थराशेः परित्यज्यशेषभागमारभ्यपंचमषष्ठसप्तमाष्टमनवमराशयोदशमराशिलग्नोदितभागतुल्यांशाश्चक्रपरार्द्धम्।शेषंपूर्वार्द्धम्।तत्रचक्रस्य पूर्वभागेक्रूराः पापाः इतरभागेपश्चिमेसौम्याः शुभग्रहाः । कीटलग्ने वृश्चिकराशावुदयेकर्कटेचोदयस्थितेजातःशिशुःक्षिप्रमाश्वेवविनाशमुपैतिमरणंप्राप्नोतीत्यर्थः । नन्वत्रपूर्वंवृश्चिकः कीटसंज्ञउक्तः पुनरपिद्विपदादयोह्निनिशिचप्राप्तेचसंध्याद्वयेइत्यत्रकर्कटवृश्चिकमकरमीनानांकीटत्वमभ्युपगतम्।तदत्रवृश्चिककर्कटावेवकथंव्याख्याताावित्यत्रोच्यते। मकरमीनयोर्जलत्वादपिसपक्षत्वात्कीटसंज्ञानाभ्युपगम्यते । यस्माद्बादरायणः ॥ पूर्वापरभागगतैः शुभाशुभैरलिनिककर्कटे लग्ने । जातस्यशिशोर्मरणंसद्यःकथयंतियवनेंद्राः ॥ पापैर्विलग्नास्तमयाभितश्चेति । पापैःक्रूरग्रहैः विलग्नाभितः अस्तमयाभितश्चस्थितैश्चसद्योजातः क्षिप्रंशीघ्रमेवविनाशंसमुपैति । अत्रकेचिदेवंयोगद्वयंव्याचक्षते । अभितउभयतः लग्नात्पापैरुभयतइत्येकोयोगः अस्तमयाचाभितइतिद्वितीयः तत्रलग्ना_ द्वादशद्वितीयस्थयोःपापयोर्जातोम्रियते । तथालग्नषष्ठाष्टमयोश्चपापयोर्जा_ तोम्रियते तथालग्नसप्तमाच्चयेद्वादशद्वितीयेतत्स्थयोश्चपापयोर्जातोम्रियते । अन्येपुनरभिशब्दआभिमुख्येवर्ततइत्यनुवर्णयंति । तत्रलग्नाद्योद्वितीयराशौग्रहः स्थितःसउदयमभिलषाति लग्नस्याभिमुखोभवति । यश्चलग्नादष्टमराशौभवति सोस्तमयमभिलषतीत्यतः सप्तमराशेरभिमुखोभवति । तेनैतज्जातम् लग्नाद्वितीयाष्टमगतैःसर्वैःपापैर्जातोम्रियते । वयंपुनरभिशब्दआभिमुख्यव्यावृत्तिंब्रूमः यस्माद्यवनेश्वरः ॥ पापेपुलग्नाभिमुखेषुसर्वेष्वेवात्तवीर्येषुशुभर्क्षगेष्वपि । किंतु योलग्नाद्वादशस्थानेस्थितःसउदयमभिलषति लग्नाभिमुखोभवति यश्चषष्ठेस्थितः सोस्ताभिमुखोभवति यस्माद्ग्रहाणांप्राङ्मुखीगतिः । उक्तंच प्राग्गतयस्तुल्यजवा ग्रहाश्चसर्वेस्वमंडलगाइति। तत्रपूर्वाभिमुखंव्रजतोगच्छतोलग्नाद्वितियस्थस्यतदाभिमुख्यंनसंभवति । नचाष्टमस्थस्यास्ताभिमुख्यम् । तेनैतज्जातंलग्नाद्वादशषष्ठाश्रितैःपापैर्यस्यजन्मसम्रियतेइति । भगवतागार्ग्येणसर्वाण्येवव्याख्यातान्याभिमुख्यानीति । तथाचतद्वाक्यम्॥रिपुव्ययगतैः पापैर्यदिवाधनमृत्युगैः।लग्नेवापाप मध्यस्थेद्यनेवामृत्युमाप्नुयादिति ॥ २ ॥

पापावुदयास्तगतौक्रूरेणयुतश्चशशी ॥
दृष्टश्चशुभैर्नयदामृत्युश्चभवेदचिरात् ॥ ३ ॥

अथयोगांतरमनुष्टुभाह॥पापाविति।एकःपापउदयेलग्नेस्थितोन्योऽस्तेसप्तमेगतःशशीचंद्रमाःयत्रतत्रस्थः क्रूरेणपापेनयुतोभवति सचसौम्यैःशुभग्रहैर्यदिनदृष्टस्तदाजातस्यमृत्युरचिराच्छीघ्रमेवभवेत् ॥ ३ ॥

क्षीणेहिमगौव्ययगेपापैरुदयाष्टमगैः ॥
केंद्रेषुशुभाश्चनचेत्क्षिप्रंनिधनंप्रवदेत् ॥ ४ ॥

अथयोगांतरमनुष्टुभाह॥क्षीणेहिमगाविति । हिमगौचंद्रेक्षीणेलग्नाद्व्ययगेद्वादशस्थेतथापापैःक्रूरग्रहैरुदयाष्टमगैः लग्नस्थैरष्टमगतैश्चकंद्रेषुकेंटकेषुचेद्यदिशुभानभवंतितदाजातस्यक्षिप्रमाश्वेवनिधनंमरणंप्रवदेद्ब्रूयात् । अत्रकेचित्पापैरुदयाष्टमगैरितिनेच्छंति। तदयुक्तम्।यस्माद्भगवान्गार्गिः । क्षीणेचंद्रेव्ययगतेपापैरष्टमलग्नगैः । केंद्रबाह्यगतैः सौम्यैर्जातस्यनिधनंवदेत् ॥ ४ ॥

क्रूरेणसंयुतःशशीस्मरांत्यमृत्युलग्नगः ॥
कंटकाद्बहिःशुभैरवीक्षितश्चमृत्युदः ॥ ५ ॥

अथारिष्टांतरमनुष्टुभाह ॥ क्रूरइति।शशीचंद्रः क्रूरेणपापग्रहेणसंयुतस्तथाभूतः स्मरांत्यमृत्युलग्नगःसप्तमद्वादशाष्टमलग्नानामन्यमस्थस्तथा शुभैःशुभग्रहैः कंटकबाह्यस्थैः केंद्रवर्जमन्यस्थानस्थैःअवीक्षितः नदृष्टोयदिभवतितदाजातस्यमृत्युदोमरणदोभवति । अर्थादेवसौम्यैःकेंद्रस्थैस्तदारिष्टाभावः । तथाचसारावल्याम्॥व्ययाष्टसप्तोदयगेशशांकेपापैःसमेतेशुभदृष्टिहीने।केंद्रेषुसौम्यग्रहवर्जितेषु जातस्यसद्यःकुरुतेप्रणाशम् ॥ ५ ॥

शशिन्यरिविनाशगेनिधनमाशुपापेक्षितेशुभैरथसमाष्टकंद-
लमतश्चमिश्रैःस्थितिः ॥ असद्भिरवलोकितेबलिभिरत्रमासं
शुभेकलत्रसहितेचपापविजितेविलग्नाधिपे ॥ ६ ॥

अथारिष्टांतराणिपृथ्व्याह ॥ शशिनीति । शशिनिचंद्रे अरिविनाशगे लग्नात्षष्ठस्थानस्थेऽष्टमस्थेवातत्रचपापानांक्रूराणामन्यतमेनेक्षितेदृष्टेसौम्यग्रहेणादृष्टे तस्यनिधनंमरणमाशुक्षिप्रमेवभवति । शुभैरिति । अथलग्नात्षष्ठाष्टमगेचंद्रेसौम्यैर्ग्रहैर्दृष्टेपापेनादृश्यमानेजातस्यसमाष्टकंवर्षाष्टकंस्थितिःजीवितंवक्तव्यम् ।

ततोनंतरंमरणमिति । समाशब्दोवर्षपर्यायः । दलमतइति । लग्नात्षष्ठाष्टमगेचंद्रेमिश्रैःपापैःसौम्यैश्चदृष्टे । अतोस्मात्समाष्टकाद्वर्षाष्टकाद्दलमर्द्धंवर्षचतुष्टयंस्थितिर्वदेत्ततोमरणमिति । अर्थादेवषष्ठाष्टमस्थेचंद्रमसिनकेनचिद्दृश्यमानेऽरिष्टयोगाभावः।चंद्रमायदिषष्ठाष्टमस्थःसौम्यक्षेत्रगतः सौम्ययुक्तोभवति । तदानमरणप्रदः । यस्माद्यवनेश्वरः ॥ लग्नाच्छशीनैधनगेऽशुभर्क्षेषष्ठोथवापापनिरीक्षितश्च । सर्वायुराहन्तिशुभैर्विमिश्रैस्तदीक्षितोब्दाष्टकमर्धकंवा ॥ तथा ॥ यस्यकृष्णपक्षेदिवाजन्मशुक्लपक्षेरात्रौजन्मलग्नात्षष्ठाष्टमगःशशीशुभाशुभदृष्टोपिभवतितस्यनमरणप्रदः । यस्मान्मांडव्यः ॥ पक्षेसितेभवतिजन्मयदिक्षपायांकृष्णेथवाहनिशुभाशुभदृश्यमानः । तच्चंद्रमारिपुविनाशगतोपियत्नादापत्सुरक्षतिपितेवशिशुंनहंति । असद्भिरिति । अत्रास्मिन्नेवषष्ठेऽष्टमेवास्थानेशुभेसौम्यग्रहे बुधगुरुसितानामन्यतमेस्थितेतस्मिंश्चासद्भिःपापैःबलिभिर्वीर्ययुक्तैरवलोकितेदृष्टेजातस्यमासंस्थितिःजीवितंवक्तव्यम् । ततोमरणम् अत्रनिर्दिष्टयोगस्थेशुभग्रहेशुभदृष्टेऽरिष्टयोगाभावः॥यस्मादनेनैवस्वल्पजातकेउक्तम् । शशिवत्सौम्याःपापैर्वक्रिभिरवलोकितानशुभदृष्टाः।मासेनमरणदाःस्युःपापयुतोलग्नपश्चास्ते॥कलत्रसहितइति ॥ विलग्नाधिपेजन्मलग्नपतौकलत्रसहितेसप्तमस्थानस्थेवापापविजितेक्रूरग्रहेणयुद्धेसंग्रामेविजिते । विजितलक्षणम् ॥ दक्षिणदिक्स्थः परुषोवेपथुरप्राप्यसन्निवृत्तोणुः । अधिरूढोविकृतोनिष्प्रभोविवर्णश्चयः सजितः ॥ भौमादीनामाकाशेयुद्धंभवति यःदक्षिणाशास्थः सग्रहःजितः कुसुतादीनांयुद्धमित्युक्तत्वाच्चंद्रदीपिकायाम् परुषोरूक्षः वेपथुः कंपमानः अन्यगृहमप्राप्यसन्निवृत्तः विपरीतगतिमापन्नः अणुःसूक्ष्मः अधिरूढः अन्येनाक्रांतः विकृतः विकारसहितः निष्प्रभोदीप्तिरहितः विवर्णः वर्णरहितः सजितइति । चशब्दान्मासंस्थितिस्ततोमरणमिति ॥ ६ ॥

**लग्नेक्षीणेशशिनिनिधनंरन्ध्रकेंद्रेषुपापैःपापांतःस्थेनिधनहिबुकद्यूनयुक्तेचचंद्रे ॥ एवंलग्नेभवतिमदनच्छिद्रसंस्थैश्चपापैर्मात्रासार्धंयदिचनशुभैर्वीक्षितःशक्तिभृद्भिः ॥ ७ ॥**

अथारिष्टांतराणिमंदाक्रांतयाह॥लग्नेक्षीणइति।क्षीणेशशिनिचंद्रेलग्नेजन्मलग्नस्थिते तथारंध्रकेंद्रेषुपापैः क्रूरैः स्थितैर्यथासंभवमेवंविधेयोगेजातस्यनिधनंमरणंवक्तव्यम् । तथा चंद्रेशशिनिपापांतःस्थेपापमध्यगतेनिधनहिबुकद्यूनयुक्तेऽष्टमचतुर्थसप्तमस्थानानामन्यतमस्थेजातस्यमरणंवक्तव्यम् । एवमिति । एवमनेनैवप्रकारेणलग्नगेपापांतःस्थेशशिनितथामदनच्छिद्रसंस्थेसप्तमाष्टमस्थानयो

रन्यतमस्थेपापेक्रूरेयदिशुभैः सौम्यग्रहैः शक्तिभृद्भिः सबलैः चंद्रमा न वीक्षितोनदृष्टोभवति तदाजातस्यमात्रासार्द्धंजनन्यासहमरणंवदेत्।अथनिर्दिष्टयोगस्थश्चेच्चंद्रमाःशुभैर्दृश्यतेबलिभिस्तदाजातस्यैवमरणंनतन्मातुरिति ॥ ७ ॥

राश्यंतगेसद्भिरवीक्ष्यमाणेचंद्रेत्रिकोणोपगतैश्चपापैः ॥
प्राणैःप्रयात्याशुशिशुर्वियोगमस्तेचपापैस्तुहिनांशुलग्ने॥८॥

अथारिष्टांतराणींद्रवज्रयाह ॥ राश्यंतगइति । चंद्रेशशिनिराश्यंतगेयत्रतत्रराशौनवमनवांशगेतथाभूतेसद्भिः शुभग्रहैरवीक्ष्यमाणेनसंदृष्टेपापैः क्रूरैस्त्रिकोणोपगतैः नवपंचमस्थानस्थैः जातःशिशुर्बालकः आशुक्षिप्रमेवप्राणैरसुभिर्वियोगंप्रयातिगच्छतिम्रियतइत्यर्थः । अस्तेचपापैरितितु।हिनांशौचंद्रेलग्नगे अस्तेसप्तमेसप्तमस्थानस्थितैः पापैश्चशब्दाच्छिशुराश्वेवप्राणैर्वियोगंप्रयाति । अत्रतुहिनांशुलग्नइति कर्कटलग्नेकैश्चिद्व्याख्यातम् । तदयुक्तम् । यस्मादनेनैवस्वल्पजातकेउक्तम् ॥ उदयगतोवाचंद्रः सप्तमराशिस्थितः पापैरिति ॥ ८ ॥

अशुभसहितेग्रस्तेचंद्रेकुजेनिधनाश्रितेजननिसुतयोर्मृत्युर्लग्ने
रवौतुसशस्त्रजः ॥ उदयतिरवौशीतांशौवात्रिकोणविनाशगे-
र्निधनमशुभैर्वीर्योपेतैःशुभैर्नयुतेक्षिते ॥ ९ ॥

अथारिष्टांतराणिहरिण्याह ॥ अशुभसहितइति । चंद्रेशशिन्यशुभसहितेयद्यपिसामान्येनोक्तंतथाप्यशुभेनपापेनशनैश्चरेणैवयुक्तेतथाभूतेलग्नगतेनकेवलंयावत् लग्नगतेग्रस्तेसराहौराशिगतेसलग्नाच्चकुजेंगारकेनिधनाश्रितेऽष्टमस्थानस्थेजननिसुतयोः मातृपुत्रयोः मृत्युर्भवति।रवौतुसशस्त्रजइति।एवंविधेयोगेरवावादित्येस्थितेजननिसुतयोर्मृत्युः शस्त्रजःशस्त्रेणायुधेनजातोभवति । एतेनैतदुक्तंभवति। शनैश्चरेणबुधेनवायुक्तेर्केग्रस्ते लग्नगतेकुजेचाष्टमगेजातस्यमात्रासहशस्त्रहेतुकंमरणंवाच्यम्।नन्वशुभइतिसामान्येनोक्तम् । तत्केवलेनशनैश्चरेणयुक्तेचंद्रेशशिनिइतिकिंव्याख्यातम्।शनैश्चरेणबुधेनवायुक्तेऽर्केइतिनोक्तम्।अत्रोच्यते।असंभवादेवपौर्णमास्यांचंद्रग्रहणंभवतितत्रतावदर्कसहितेनचंद्रमसानभवितव्यम्।बुधेनचार्कसमीपवर्तिनासदैवभवितव्यम् । अष्टमस्थानत्वाद्भौमेनापिचंद्रसहितेननभवितव्यम्।शनैश्चरंविनाव्यवस्थितेनबुधेनसौम्येनैवभवितव्यम्।तस्माच्चंद्रग्रहणेशनैश्चरेणेतिव्याख्यातम्।अर्कग्रहणेतुपुनः बुधेनयदियुक्तोऽर्कोभवति तदार्कसहितत्वात्तस्यपापताभवतीत्यतोर्कस्यबुधसहितत्वमितिव्याख्यातम्। क्षीणेंदुयोगादर्कस्यपापयोगएवायंनगण्यते यस्मादवश्यममावास्यांतेऽर्कग्रहणेनभवितव्यम्।तत्रचावश्यमर्केणक्षीणचंद्रसहितेनभवितव्यम्।यद्यर्कःक्षीणेंदुनायुक्तइतिआचार्यस्याभि-

प्रेतं स्यात्तदाग्रस्तेर्केनिधनाश्रितेकुजइति केवलमकरिष्यत्।उदयतिरवावित्यादि। रवावादित्येउदयातिलग्नगतेशीतांशौचंद्रेवालग्नगते तथाअशुभैःपापैस्त्रिकोण-विनाशगैः नवपंचमाष्टमस्थैः सर्वैरेवयथासंभवमेवंविधयोगस्थैरर्वौचंद्रेवाशुभैः सौम्यग्रहैःवीर्योपेतैः बलवद्भिः नयुक्तेक्षिते नसंयुक्ते नापिदृष्टेजातस्यनिधनंमरणं वदेत् अर्थादेवोक्तयोगस्थेरर्वौचंद्रेवाबलिभिः शुभैर्युतेदृष्टेचारिष्टयोगाभावः॥९॥

असितरविशशांकभूमिजैर्व्ययनवमोदयनैधनाश्रितैः॥
भवतिमरणमाशुदेहिनांयदिबलिनागुरुणानवीक्षिताः॥ १० ॥

अथारिष्टांतरमपरवक्रेणाह॥ असितेति। असितःसौरः रविरादित्यः शशांकश्चंद्रः भूमिजोंगारकः एतैर्यथाक्रमंव्ययनवमोदयनैधनाश्रितैः द्वादशनवमलग्नाष्टमस्थानस्थैः तत्रैतज्जातं शनैश्चरेद्वादशे । अर्केनवमे । चंद्रेलग्नगे । भौमेष्टमस्थे एतेसर्वएवयोगकर्तारोग्रहायदिबलिनावीर्यवतागुरुणाजीवेननवीक्षिताः नदृष्टास्तदाजातस्यजंतोराश्वेवमरणंभवतीतिवदेत् । अत्रयदा योगकर्तॄन्ग्रहान्बलवान्गुरुः कांश्चित्पश्यतिकांश्चिन्नपश्यति अथवाबलहीनः सर्वानेवपश्यतितदाजातस्यमरणायप्रवदेत् किंतुआशुशीघ्रंनवदेत् अर्थादेवसर्वानेवगुरुःपंचमगःपश्यतितदारिष्टयोगाभावः ॥ १० ॥

सुतमदननवांत्यलग्नरंध्रेष्वशुभयुतोमरणायशीतरश्मिः॥
भृगुसुतशशिपुत्रदेवपूज्यैर्यदिबलिभिर्नयुतोवलोकितोवा॥११॥

अथारिष्टांतरंपुष्पिताग्रयाह। सुतेति। शीतरश्मिश्चंद्रः सचक्षीणः अशुभयुतः पापग्रहेणसंयुक्तः सुतमदननवांत्यलग्नरंध्रेषुस्थितः पंचमसप्तमनवमद्वादशोदयाष्टमगतः। अथवासुतमदननवांत्यरंध्रेस्थितइतिपाठः।एतेषामन्यतमस्थानस्थः भृगुसुतेनशुक्रेण शशिपुत्रेणबुधेन देवपूज्येनबृहस्पतिना बलिभिर्वीर्यसंयुक्तैर्नयुतोनाप्यवलोकितः एषांत्रयाणांमध्यादेकतमेनापिसंयुतोनचदृष्टस्तदाजातस्यमरणायभवति अर्थादेवभृगुसुतशशिपुत्रदेवपूज्यानामन्यतमेनबलवतादृष्टोयुक्तोवाभवतितदारिष्टयोगाभावः। अत्रक्षीणचंद्रग्रहणंनास्ति तत्कस्माद्व्याख्यातमित्यत्रोच्यते।आगमांतरदृष्टत्वात्।तथाचसारावल्याम्।निधनास्तव्ययलग्नत्रिकोणगाःक्षीणचंद्रसंयुक्ताः।पापाबलिनःशुभैरदृश्यमानागतायुषांप्रायः।

योगेस्थानंगतवतिबलिनश्चंद्रेस्वंवातनुगृहमथवा॥
पापैर्दृष्टेबलवतिमरणंवर्षस्यांतःकिलमुनिगदितम्॥ १२ ॥

इत्यरिष्टाध्यायः षष्ठः॥ ६ ॥

अथानुक्तमरणकालानामरिष्टयोगानांकालपरिज्ञानंभ्रमरविलसितेनाह॥ योगेस्थानमिति । यस्मिन्नरिष्टयोगेजातस्यमरणकालावधिर्नोक्तस्तस्मिन्नरिष्टयोगेजातस्ययोगकर्तारोयेग्रहास्तेषांमध्याद्योबलवान्सयस्मिन्राशौजन्मकालेऽव्यवस्थितः सराशिर्बलिनःस्थानंतत्रचारक्रमाच्चंद्रमसिप्राप्तेजातस्यमरणंवक्तव्यम्।अथवाचंद्रेस्वमात्मीयस्थानंगतेजन्मकाले यत्रराशौचंद्रमाव्यवस्थितस्तमेवराशौ पुनरपिचंद्रेगतेतत्रतस्यमरणंवक्तव्यम् । तनुगृहमथवा तनुगृहंलग्नंवाचारक्रमाद्गतेचंद्रमसिजातस्यमरणंवक्तव्यम् ॥ कदेत्युच्यते। वर्षस्यांतः संवत्सराभ्यंतरे । एतदुक्तंभवति अनुक्तकालारिष्टजातोवर्षंनातिक्रामतीति।नन्वत्रप्रतिमासंचंद्रमसासर्वाण्येवस्थानानिगंतव्यानितत्किमित्युक्तंवर्षस्यांतः।उच्यते । पापैर्दृष्टेबलवतीति । एषुनिर्दिष्टस्थानेषुमध्याद्यत्रगतश्चंद्रमाबलवान्भवति पापैश्चदृश्यते तदा जातस्यमरणंवक्तव्यम्।नकेवलंगतमात्रएवचंद्रे । किलमुनिगदितंकिलेत्यागमसूचनेमुनिगदितमिदमरिष्टलक्षणमित्यागमपारंपर्येणश्रूयतइति ।अत्रान्यैराचार्यैररिष्टभंगाउक्तास्तेचसत्यरूपाः यतोबहवोजाताअपिसत्स्वपियोगेषुजीवंतोदृश्यंतेऽतोस्माभिः किंचिल्लिख्यते ।सर्वानिमानतिबलःस्फुरदंशुजालोलग्नस्थितःप्रशमयेत्सुरराजमंत्री । एकोबहूनिदुरितानिसुदुस्तराणिभक्त्याप्रयुक्तइवशूलधरप्रणामः॥ १ ॥लग्नाधिपोतिबलवानशुभैरदृष्टः केंद्रस्थितैःशुभफलैरवलोक्यमानः । मृत्युंविधूयविदधातिसुदीर्घमायुः सार्धंगुणैर्बहुभिरूर्जितयाचलक्ष्म्या॥ २ ॥लग्नादष्टमवर्त्यपिगुरुबुधशुक्रदृकाणगश्चंद्रः। मृत्युंप्राप्तमपिनरंपरिरक्षत्येवनिर्व्याजम्॥ ३ ॥ चंद्रःसंपूर्णतनुःसौम्यर्क्षगतःशुभेक्षितश्चापि। प्रकरोतिरिष्टभंगंविशेषतःशुक्रसंदृष्टः ॥ ४ ॥ बुधभार्गवजीवानामेकतमःकेंद्रमागतोबलवान् । यद्यक्रूरसहायःसद्योरिष्टस्यभंगाय ॥५॥ रिपुभवनगतोपिशशीगुरुसितचंद्रात्मजदृकाणस्थः । अगद इवभोगिदष्टंपरिरक्षत्येवनिर्व्याजम् ॥ ६ ॥सौम्यद्वयांतरगतः संपूर्णःस्निग्धमंडलः शशभृत्।निःशेषरिष्टहंताभुजंगलोकस्यगरुडइव ॥७॥ शशभृतिपूर्णशरीरेशुक्लेपक्षे निशाभवेकाले।रिपुनिधनस्थेरिष्टंप्रभवतिनैवात्रजातस्य॥ ८ ॥प्रस्फुरितकिरणजालेस्निग्धामलमंडलेबलोपेते।सुरमंत्रिणिकेंद्रगतेसर्वारिष्टंशमंयाति॥ ९ ॥सौम्यभवनोपयाताःसौम्यांशकसौम्यदृकाणस्थाः । गुरुचंद्रकाव्यशशिजाःसर्वेरिष्टस्यहंतारः॥ १० ॥चंद्राध्यासितराशेरधिपःकेंद्रेशुभग्रहोवापि।प्रशमयतिरिष्टयोगंपापानियथाहरिस्मरणम्॥ ११ ॥पापायदिशुभवर्गेसौम्यैर्दृष्टाःशुभांशवर्गस्थैः। निघ्नंतितदारिष्टंपतिंविरक्तायथायुवतिः॥ १२ ॥राहुस्त्रिषष्ठलाभेलग्नात्सौम्यैर्निरीक्षितःसम्यक्॥नाशयतिसर्वदुरितंमारुतइवतूलसंघातम् ॥ १३ ॥ शीर्षोदयेषुराशिषुसर्वेगगनाधिवासिनःसूतौ।प्रकृतिस्थैश्चारिष्टंविलीयतेघृतमिवाग्निस्थम्॥ १४ ॥तत्काले यदिविजयीशुभग्रहःशुभनिरीक्षितोऽवश्यम् । नाशयतिसर्वरिष्टंमारुतइवपादपान्प्रबलः ॥ १५ ॥ सर्वैर्गगनभ्रमणैर्दृष्टश्चंद्रोविनाशयतिरिष्टम् । आपूर्यमाणमूर्तिर्यथानृपःस्वंनयेद्द्वेषीति ॥ १६ ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौरिष्टाध्यायःषष्ठःसमाप्तः ॥ ६ ॥

मययवनमणित्थशक्तिपूर्वैर्दिवसकरादिषुवत्सराःप्रदिष्टाः ॥
नवतिथिविषयाश्विभूतरुद्रदशसहितादशभिःस्वतुंगभेषु ॥ १ ॥

अथायुर्दायाध्यायोव्याख्यायते । तत्रपूर्वोक्तरिष्टाध्यायेऽरिष्टवर्जितस्यायुर्दायःकर्तव्यःतत्रादावेवमययवनमणित्थपराशरमतेन प्रत्येकस्यग्रहस्यपरमायुःप्रमाणंपुष्पिताग्रयाह ॥ मययवनेति । मयो मयनामादानवःसूर्यलब्धवरप्रसादः यवनाम्लेछजातीयाहोराविदः मणित्थआचार्यः शक्तिपूर्वःपराशरःशक्तिःपूर्वा यस्यसशक्तिपूर्वःपूर्वशब्देनपिताऽच्यते तैःमययवनमणित्थशक्तिपूर्वैः दिवसकरादिष्वादित्यादिषुग्रहेषुवत्सराःसंवत्सराःपरमायुःप्रमाणाब्दाःप्रदिष्टाः उक्ताः। नवतिथिविषयाश्वीत्यादि । अत्रनवादिभिर्दशसहिताइतिसर्वत्रैवशेषभूतंतेननवभिः दशसहिताएकोनविंशतिः परमायुःप्रमाणवत्सरादिवसकरस्यादित्यस्यतिथिभिःपंचदशभिःसहितादशपंचविंशतिश्चंद्रस्य । विषयैः पंचभिः सहितादश पंचदशभौमस्य अश्विभ्यांद्वाभ्यांसहितादशद्वादशबुधस्य भूतैः पंचभिः सहितादशपंचदशगुरोः रुद्रैरेकादशभिः सहितादशएकविंशतिः शुक्रस्य दशभिः सहितादशविंशतिःसौरस्य एतानिग्रहाणांपरमायुःप्रमाणवर्षाणि स्वतुंगभेषु स्वपरमोच्चांशास्थितेषुभवंति तत्रेदृशाः परमोच्चस्थिताग्रहाआदित्यादयोभवंति । तद्यथा । एवंविधाह्येतेयथानिर्दिष्टवर्षाणिप्रयच्छंति १९।२५।१५।१२। १५।२१।२०। अंकेनापिएतान्यर्कादीनांपरमायुः प्रमाणवर्षाणि ॥ १ ॥

नीचेतोर्द्धंह्रसतिहिततश्चांतरस्थेनुपातोहोरात्वंशप्रतिममपरेराशितुल्यंवदंति ॥ हित्वावक्रंरिपुगृहगतैर्हीयतेस्वात्रिभागः सूर्योच्छिन्नद्युतिषुचदलंप्रोज्झ्यशुक्रार्कपुत्रौ ॥ २ ॥

अथपरमनीचावस्थितानामायुर्दायज्ञानंमंदाक्रांतयाह॥ नीचेति।एतएवदिवसकरादयोनीचेपरमनीचेप्राप्ताअर्धपरमायुःप्रमाणवर्षेभ्योऽपहरंति।अतएवोक्तम् नीचेऽतोस्मात्पूर्वोक्तात्परमायुषोर्धदलंह्रसतिक्षीयते अथेदृशारव्यादयः परमनीचस्थाभवंति परमनीचस्थास्तएवपूर्वोक्तायुषोर्धदलंप्रयच्छंति । तद्यथा रविः नवसार्धानिवर्षाणिप्रयच्छति चंद्रोद्वादशसार्धानिवर्षाणिप्रयच्छति एवंभौमः सप्तसार्धानि एवंबुधः षट् एवंबृहस्पतिः सप्तसार्धानि एवंशुक्रोदशसार्धानि एवंशनैश्चरोदश अंकेनापि रवेर्वर्षाणि ९ मासाः ६ चंद्रस्यवर्षाणि १२ मासाः ६ भौमस्यवर्षा० ७ मासाः ६ बुधस्यवर्षा० ७ मासाः ६ गुरोःवर्षा० ७ मासाः ६ शुक्रस्यवर्षा० १० मासाः ६ शनेःवर्षा० १० मासाः ६ ततश्चांतरस्थेनुपातइति । ततःतस्मादुच्चान्नीचाच्चांतरस्थेमध्यवर्ति-

निग्रहेनुपातः त्रैराशिकः कर्तव्यः सर्वेषांनीचानिअंकतयैवलिख्यंते । तत्रताव-त्सर्वस्यैवग्रहस्यपरमोच्चपरमनीचांतरालंराशिषट्कंभवतितावदेवलिप्तापिंडीकृत्य दशसहस्राण्यष्टौचशतानिभवंति १०८००तत्रस्वोच्चादधिकंग्रहेणयदाभुक्तंभवति तदातत्रस्वोच्चंविशोध्यशेषस्यलिप्तापिंडीकार्यम्।अथस्वनीचादधिकंग्रहेणभुक्तंभ-वति तदातत्रस्वनीचमपास्यावशेषंलिप्तापिंडीकार्यम्।तासांग्रहलिप्तानांग्रहभुक्त-लिप्तागणइत्याख्या तस्यैवग्रहस्यपरमनीचोक्तानिवर्षाणिमासयुतानिकार्याणि कथमुच्यते । वर्षाणिद्वादशभिः संगुण्यतत्रमासान्योजयेत्तानिचमासीकृतान्या-दित्यादीनांलिख्यते।तद्यथा चतुर्दशाधिकंशतंरवेः प्राग्वद्विभज्यसार्धशतंचंद्रस्य नवतिर्भौमस्य द्विसप्ततिर्बुधस्य नवतिर्जीवस्य षड्विंशत्यधिकंशतंशुक्रस्य विंशत्यधिकंशतंसौरस्य अंकेनापि ११४ सू० १५० चं० ९० भौ० ७२ बु० ९० जीव० १२६ शुक्रस्य १२० शनेः तत्रत्रैराशिकंयदिभगणार्धलिप्ताभिः खखाष्टदिक्संख्याभिरेताभिः १०८०० इष्टग्रहपरमनीचमासालभ्यंते तद्ग्रहभुक्त-लिप्ताभिःकियंतइति।अत्रेदंसूत्रम्।त्रैराशिकेप्रमाणंफलमिच्छाद्यंतयोः। सदृशार-शीइच्छाफलेनगुणिताप्रमाणभक्ताफलंभवति तदर्थंग्रहभुक्तिलिप्ताएवग्रहपरमनी-चमासैःसंगुण्यभगणार्धलिप्ताभिर्विभज्यावाप्तंमासाः मासशेषंत्रिंशद्गुणितं ३० प्राग्वद्विभज्यावाप्तंदिवसाः दिनशेषंषष्ट्यासंगुण्य प्राग्वद्विभज्यावाप्तंघटिकाःघ-टिकाशेषंषष्ट्यासंगुण्यप्राग्वद्विभज्यावाप्तंविकलाःपलानि ॥एवंमासादिश्चषकां-तःकालआगतःमासानांद्वादशभिर्भागमपहृत्यचावाप्तंवर्षाणिलभ्यंते तदेवशेषं मासाःएवमागतंवर्षादिपरमोच्चायुः दर्शितवर्षेभ्यः संशोध्यावशेषंग्रहेणवर्षादि-रायुषः कालोदत्तोभवति।एवमुच्चाद्विच्युतस्यनीचमप्राप्तस्यकर्तव्यंनीचाद्विच्युत-स्योच्चमप्राप्तस्यप्राग्वत्कालमानीयतस्यैवग्रहस्यपरमनीचायुषिसंयोज्यग्रहस्यायु-षः कालोवर्षादिर्भवति।अथवायदिराशिषट्कलिप्ताभिरर्धायुर्वर्षाण्यपचीयंते तदै-ताभिर्ग्रहभुक्तलिप्ताभिः किमित्यत्रमध्यमराशिसवर्णीकृत्यतेनांकेनग्रहभुक्तालिप्ता-गुणयेत् ततःपरिवर्त्यभागहारच्छेदांशैराछेदसंगुणश्छेदांशांशगुणोभाज्यस्यभा-गहारःसवर्णितयोरित्यत्रवर्षाणामेवमस्वच्छेदादिकेनभगणार्धलिप्ताःसंगुण्यख-खषट्चंद्रनयनलिप्ताभवंति२१६००एताभिर्भागमपहृत्यवर्षाणिलभ्यंते शेषंद्वाद-शभिःसविकलंसंगुण्याधःस्थस्यसविकलस्यषष्ट्याभागमपहृत्योपरितनराशौसं-योज्यप्राग्वद्विभज्यमासालभ्यंते।एवंशेषंसविकलंत्रिंशताषष्ट्यासंगुण्यदिनघटि-काविघटिकाश्चानायितव्याः।शेषंप्राग्वत्कर्म । अथलघुनोपायेनपिंडायुषआनयनं प्रदर्श्यते । तद्यथा इष्टग्रहात्प्रागुक्तमुच्चध्रुवकंविशोध्यावशेषंकर्मभूमौस्थापयेत् । अथोच्चध्रुवकंनशुध्यतितदाग्रहराशिद्वादशकंदत्त्वातस्मादुच्चमपास्यावशेषंस्थाप येत् । ततस्तदवशेषंराशिषट्काद्रूनंभवतितदाराशिद्वादशकादपास्यशेषंस्थाप्यम्।-

अथराशिषट्कादधिकंभवतितदातदेवग्राह्यम् । तत्कर्मभूमौराश्यादिकंविलिप्तांतं स्वपरमायुर्वर्षैःसंगुण्यस्वच्छेदैर्विभज्यलब्धमुपर्युपरियोजयेत्।अवशेषंस्थापयेत्। विलिप्तानांलिप्तानांचषष्ट्याभागानांत्रिंशताराशीनांद्वादशभीराशिभ्योलब्धंवर्षाणितदवशेषंमासाः भागशेषंदिवसाःलिप्ताशेषंघटिकाःविलिप्ताशेषंचषकाइति।एतावतैवकर्मणास्फुटंभवति।तथाचसारावल्याम् ॥ स्वोच्चशुद्धोग्रहःशोध्यः षड्राश्यूनोभमंडलात् । स्वपिंडगुणितोभक्तोभादिमानेनवत्सराः ।१।१२। ३० । ६०।६०।इतिहोरात्वंशप्रतिममिति।होरालग्नम् । साचांशप्रमाणानिवर्षाणिददाति यावंतोनवांशकालग्नेनभुक्तास्तावंत्येववर्षाणिददाति।तत्करणंयथा । तात्कालिकस्यलग्नस्यराशिनपास्यशेषंलिप्तापिंडीकार्यम् । तत्रशतद्वयेनभागमपहृत्यावाप्तभुक्तनवांशकास्तावंत्येववर्षाणिलग्नमायुर्दायंप्रयच्छंति । अवशेषेणसहत्रैराशिकंकृत्वावर्षाणामधस्तान्मासाद्यंस्थापयितव्यम् । तद्यथा यदिलिप्ताशतद्वयेनद्वादशमासालभ्यंते तदवशेषलिप्ताभिः कियंतइति तेनावशेषलिप्ताद्वादशभिःसंगुण्यशतद्वयेनविभज्यावाप्तंमासास्तेचवर्षाणामधःस्थाप्याः।मासशेषंत्रिंशतासंगुण्यशतद्वयेनप्राग्वद्विभज्यावाप्तंचदिवसाः तान्मासानामधःस्थापयेत् । दिनशेषंषष्ट्यासंगुण्यप्राग्वद्विभाज्यावाप्तंघटिकादिवसानामधः स्थाप्याः । घटिकाशेषंषष्ट्यासंगुण्यप्राग्वद्विभज्यावाप्तंचषकाघटिकानामधः स्थाप्याः । एवंलग्नायुर्दायः । अपरेराशितुल्यंवदंति । अपरेन्येमणित्थादय आचार्यालग्नस्य राशितुल्यमायुर्दायमिच्छंति । लग्नेनयावत्योराशयोभुक्तास्तावंत्येववर्षाणिलग्नायुः लग्नस्यभुक्तभागादिकंलिप्तापिंडीकृत्यमासाद्यानयने त्रैराशिकंकर्तव्यम् । यद्यष्टादशभिर्लिप्ताशतैर्द्वादशमासालभ्यंते तदैताभिर्लग्नभुक्तलिप्ताभिःकियंतइति । प्राग्वद्वर्षाणामधस्तान्मासाद्यं निहितव्यम् । एवंकेचिल्लग्नायुर्दायमिच्छंति । तथाचमणित्थः॥लग्नराशिसमाश्चाब्दामासाद्यमनुपाततः । लग्नायुर्दायमिच्छंतिहोराशास्त्रविशारदाइति ॥तदेवमतंशोभनमित्यस्माकमभिप्रेतम्।अन्यत्वेवमिच्छंति।यथा लग्नांशपतौबलवतिअंशतुल्यंराश्यधिपेबलवतिचराशितुल्यमिति॥तथाचसारावल्याम्॥ लग्नादायोंशतुल्यःस्यादंतरेचानुपाततः।तत्पतौ बलसंयुक्तेराशितुल्यंचभाधिपे ॥ हित्वावक्रमिति।येनग्रहेणयावत्संख्यआयुर्दायो दत्तस्तत्तस्यस्वंभवति तस्मात्स्वादायुषोभौमादिकस्यग्रहस्यवक्रंविपरीतगतंहित्वावर्जयित्वायोग्रहोरिपुगृहगतः शत्रुक्षेत्रावस्थितोभवतितेनस्वादायुषस्त्रिभागो हीयते सग्रहस्त्रिभागमपहरतीत्यर्थः।वक्रितःपुनःशत्रुक्षेत्रगतोपिनापहरति।तथाचवक्रचारंविनाप्यंशंशत्रुराशौहरेद्ग्रहः।एतद्बहूनांमतम्।आचार्यस्यपुनरेषएवपक्षोऽभिप्रेतः।अन्यथा हित्वाभौमंरिपुगृहगतैर्हीयतेस्वत्रिभागमित्येवावक्ष्यत्।वक्रंहित्वायोग्रहोरिपुराशिगतएवज्ञायते यथावक्रगोग्रहआयुर्दायंसबलत्वात्त्रिगुणंददा-

ति तथात्रापिनापहरतीतिनिश्चयः। अन्येपुनरेवंव्याचक्षते यथा वक्रमंगारकं हित्वायोग्रहोरिपुराशिगस्तेनस्वादायुषस्त्रिभागोहीयते भौमः शत्रुक्षेत्रगतोपि नापहरति। अत्रचबादरायणः॥भूम्याःपुत्रंवर्जयित्वारिभस्थाहन्युः स्वात्स्वादायुषस्तेत्रिभागमिति। सूर्योच्छिन्नद्युतिषुसूर्येणरविणाऽच्छिन्नाकर्तितास्त्युतिर्येषांते सूर्योच्छिन्नद्युतयः आदित्यमंडलेअस्तमितेषुग्रहेषुदलमर्धंहीयते। किंतुशुक्रार्कपुत्रौसितशनैश्चरौप्रोज्झ्यवर्जयित्वा। तावस्तंगतावपिनापहरतः।तथाचबादरायणः॥अस्तंयाताः सर्वएवार्धहानिंकुर्युर्हित्वादैत्यपूज्यार्कपुत्रौ॥ २॥

**सर्वार्द्धत्रिचरणपंचषष्ठभागाःक्षीयंतेव्ययभवनादसत्सुवामम् ॥**
**सत्स्वर्द्धह्रसतितथैकराशिगानामेकोंशंहरतिबलीतथाहसत्यः ३**

अथग्रहाणांस्वादायुषश्चक्रपातेनापहानिंप्रहर्षिण्याह॥ सर्वार्द्धमिति। असत्सु पापग्रहेषुव्ययभवनादारभ्यद्वादशस्थानात्प्रभृतिसप्तमांतं यावद्व्यवस्थितेषु वामंव्युत्क्रमेणयथाक्रमंसर्वार्द्धादयोभागाःक्षीयंते। तत्रलग्नाद्द्वादशस्थः पापग्रहः सर्वमायुरात्मीयमेवापहरति एकादशस्थोऽर्द्धं दशमस्थस्त्रिभागम् नवमस्थश्चतुर्भागम् अष्टमस्थःपंचमभागं सप्तमस्थःषड्भागमिति।सत्स्वर्द्धमिति।एतेष्वेव व्ययादिषुस्थानेषुसत्सुशुभग्रहेषुव्यवस्थितेष्वशुभग्रहोक्तस्यार्द्धंक्षीयते। तत्रलग्नात् द्वादशस्थः शुभग्रहः स्वादायुषोर्द्धमपहरति एकादशस्थश्चतुर्भागम् दशमस्थःषड्भागम् नवमस्थोष्टमभागम् अष्टमस्थोदशमभागम् सप्तमस्थोद्वादशभागमिति।तथैकराशिगानामिति। उक्तस्थानेषुयदाग्रहद्वयंभवतिबहवोवास्युस्तदातेषामेकसंस्थितानांमध्यादेकएवयोबलीवीर्यवान्सएवैकोंशंभागंयथापठितमपहरति नान्ये तत्रस्थाअपहरंतिएतत्सत्यआह सत्याचार्यःकथयति। अंशग्रहणं यथासंभवंभागप्रदर्शनार्थम्। तथाचसत्यः॥ एकादशोत्क्रमात्सप्तमादितिप्राहहरणकर्माणि। एकर्क्षगेषुवीर्याधिकःस्वभागंहरेदेकः॥ अर्धंतृतीयभागंचतुर्थकंपंचमंचषष्ठंच। आयुःपिंडात्पापाहरंतिसौम्यास्तथार्धानि॥ द्वादशसंस्थःपापः स्वादायंशोभनस्ततोर्द्धंतु। अपहरतिसर्वमायुर्यथाचयोगस्तमपिवक्ष्यइति॥ एकर्क्षोपगतानांयोभवतिबलाधिकोविशेषेण। क्षपयतियथोक्तमंशंसएवनान्योपितत्रस्थइति॥ वराहमिहिरस्याप्येवंमतम्। इहसत्यमतोपन्यासआगमानुस्तिप्रदर्शनार्थः॥ ३॥

**साद्धोंदितोदितनवांशहतात्समस्ताद्भागोष्टयुक्तशतसंख्यमुपैतिनाशम्॥ क्रूरेविलग्नसहितेविधिनात्वनेनसौम्येक्षितेदलमतःप्रलयंप्रयाति॥ ४॥**

अथलग्नस्थः पापश्चक्रपातवदायुषोंशमपहरतितस्यांशप्रमाणज्ञानंवसंततिल-

केनाह॥साद्धोंदितइति।उदितायेनवांशास्तेउदितनवांशाः सहार्द्धोदितेननवांशे-नवर्ततइतिसार्द्धोदितोदितनवांशाः।एतदुक्तंभवति। तात्कालिकस्यस्फुटलग्नस्ययेभुक्ताभागाः तेषांलिप्ताः पिंडीकृत्यशतद्वयेनभागमपहृत्यावाप्तंतस्मिन्कालेभ-चक्रस्यचयावंतोनवांशकाउदिताः पश्चादर्द्धोदितोनवांशकः सतत्रउदितलवांश-समूहेयोज्यः एवंकृतेसार्द्धोदितोदितनवांशसमूहोभवति तेनगणितागतंसम-स्तमेवायुःपिंडंगुणयेत् एवंकृतेसार्द्धोदितोदितनवांशहतःसमस्तआयुःपिंडोभव-ति तस्मादष्टाधिकशतेनभागेहृतेयदवाप्यतेवर्षादितन्नाशमुपैतिक्षयंगच्छति । किंसर्वेषां नेत्याह।क्रूरेविलग्नसहित इति।यदाविलग्नस्थः क्रूरः आदित्यांगारकश-नैश्चराणामन्यतमोभवतितदैवआगतंवर्षादिसमस्तायुःपिंडात्संशोध्यम् एवंकृतेतत्कालजातस्यजंतोरायुर्वर्षादिस्फुटंभवति किंतुप्रत्येकस्यग्रहस्यैतत्कर्मकर्तव्यम्येनायुःसंशुद्धानिदशावर्षाणिसर्वेषांभवंति । विधिनात्वनेनसौम्येक्षितइति । अ-नेनविधिनासएवलग्नस्थः क्रूरग्रहोयदासौम्येक्षितः शुभग्रहेणदृश्यते तदावि-धिनात्वनेनयत्फलमायुःपिंडात्सार्धोदितोदितनवांशहतात्समस्तायुः पिंडादष्टो-त्तरशतेनभागेहृतेयत्फलंलब्धम् अतोदलमर्धंप्रलयंप्रयाति।तदर्द्धीकृत्यायुःपिंडा-त्पातयेदेवंकृतेआयुःप्रमाणंस्फुटंभवति । अन्येएवंव्याचक्षते । तात्कालिकेनल-ग्नेनभुक्तायेनवांशकास्तेसार्द्धोदितनवांशेनसहग्राह्याः। अयमर्थः। तात्कालिकस्यलग्नस्यराशीनपास्यभागान्लिप्तापिंडीकृत्यशतद्वयेनभागमपहृत्यावाप्तमुदितां-शकास्तैःप्राग्वत्कार्यम्।एतदपिस्थूलम्। तेनलग्नभागाल्लिप्तीकृत्यताभिःप्रत्येकग्रह-दत्तवर्षादिरायुर्दायंसंगुण्यस्वच्छेदैर्भागमपहृत्योपर्युपरियोजयेत् वर्षभगणकला-भिर्भागमपहरेल्लब्धंवर्षादि तस्यप्राग्वत्पातनंकार्यम्।तथाचसारावल्याम्॥लग्नां-शलिप्तिकाहत्वाप्रत्येकांविहगायुषा। भाज्यामंडललिप्ताभिर्लब्धंवर्षादिशोधयेत् ॥ २१६०० स्वायुषोलग्नगेक्रूरेसौम्यदृष्टेचतद्दलमिति । एतदेवशोभनमस्माकंप्रति-भाति।नकेवलमत्र यावच्चक्रपातेप्येवंविधिः लग्नादिष्टग्रहंशोध्यावशेषंयदिषड्-भादूनंतदातस्यग्रहस्यचक्रपातोस्तिनान्यथेति तेनावशेषेणायुःपिंडस्यभागम-पहृत्यलब्धंप्राग्वदायुःपिंडंपातयेत् तेनायुश्चक्रेणशुद्धंभवति।अथरूपादूनोभागहा-रोभवतितदारूपाद्भागहारंसंशोध्यशेषेणायुर्दायंसंगुण्यरूपेणभागमपहृत्यलब्ध-मेवायुश्चक्रपातशुद्धंभवति। उक्तंच लग्नंग्रहोनकंषड्भादूनकंयद्यसौहरः। आयुः-पिंडंभजेत्तेनलब्धंवर्षादिशोधयेत् ॥ रूपाद्यदोनोहारःस्याद्रूपाच्छुद्धेनताडयेत् । रूपेणविभजेल्लब्धंतदेवायुः स्फुटंभवेत् ॥ अस्मिन्सार्धोदितकर्मणिलग्नेयदापा-पसौम्यौभवतस्तदायोलग्नोदितांशकसमीपवर्तीसएवग्राह्योनेतरइति।अत्रक्रूरश-ब्देनक्षीणश्चंद्रमानग्राह्यः। तथाचबादरायणः॥ सूर्यांगारकशनीनामेकस्मिँल्लग्न-गेभवतिहानिः। विधिनात्वनेनसौम्योक्षितेदलंपातयेल्लब्धम् ॥ ४ ॥

समाःषष्टिर्द्विघ्नामनुजकरिणांपंचचनिशाहयानांद्वात्रिंशत्ख-
रकरभयोःपंचककृतिः ॥ विरूपासाप्यायुर्वृषमहिषयोर्द्वाद-
शशुनांस्मृतंछागादीनांदशकसहिताःषड्परमम् ॥ ५ ॥

अथपुरुषादीनांपरमायुःप्रमाणज्ञानंशिखरिण्याह ॥ समाषष्टिर्द्विघ्नाइति । समाशब्देनवर्षमुच्यते समानांवर्षाणांषष्टिर्द्विघ्नाद्विगुणीकृताविंशत्यधिकंवर्षशतं भवति एवंविंशत्यधिकंवर्षशतंपंचनिशापंचरात्रयोऽहोरात्राणीत्यर्थः। मनुजकरिणांमनुजानांमनुष्याणांकरिणांहस्तिनांचपरमायुः हयानामश्वानांद्वात्रिंशद्वर्षाणिपरमायुः खरोगर्दभः करभउष्ट्रः अनयोः पंचककृतिः पञ्चकस्यकृतिः पंचानां वर्गः पंचविंशतिः परमायुः विरूपासाप्यायुरितिसापंचककृतिः विरूपाविगता रूपा एकोना चतुर्विंशतिर्वर्षाणिवृषमहिषयोः वृषाणांमहिषाणांचपरमायुः गोमहिष्योरित्यर्थः । शुनांसारमेयानांद्वादशवर्षाणिपरमायुः। श्वग्रहणंसर्वेषांनखिनामुपलक्षणार्थं तेनसिंहमार्जारादीनामप्येतदेवस्मृतम् । छागादीनामिति दशकसहिताःषट्षोडशवर्षाणिपरमायुः । छागादीनाम् आदिग्रहणान्मृगादीनामपि । परममिति सर्वेषांशेषभूतम् । किंपरमायुर्दायप्रयोजनम् । अश्वादीनां जातानामायुःप्रमाणज्ञानार्थमिति ।तद्यथा अश्वादेर्जातस्यपुरुषवदायुःप्रमाणमानीयततस्त्रैराशिकंकर्तव्यंयदिविंशत्यधिकवर्षशतंपंचादिनाधिकंपुरुषस्यायुःप्रमाणंतदाद्वात्रिंशद्वर्षायुःप्रमाणस्याश्वस्यकिंस्यादिति।एवमागतमायुःप्रमाणमश्वस्य तत्कालजातस्यवाच्यम्।एवंसर्वेषामभिहितप्राणिनांस्वायुषापरमेणत्रैराशिकंकृत्वातत्कालजातस्यायुःप्रमाणनिर्देशः कार्यः।अन्येएवंवदंति यथापठितात्परमायुषः प्रमाणादधिकंन कश्चिज्जीवति।तदयुक्तम् । यस्माद्विंशत्यधिकाद्वर्षशतादधिकमप्यायुर्गणितकर्मणाभवति यस्मात्परमायुःप्रमाणपठनंत्रैराशिकार्थमेवज्ञातव्यमिति ॥ ५ ॥

अनिमिषपरमांशकेविलग्नेशशितनयेगविपंचवर्गलिप्ते ॥
भवतिहिपरमायुषःप्रमाणंयदिसकलाःसहिताःस्वतुंगभेषु ॥ ६ ॥

अथयस्मिन्योगेजातस्यपरमायुर्भवतितद्योगज्ञानंपुष्पिताग्रयाह ॥ अनिमिषपरमांशकइति । अनिमिषोमीनः तस्यपरमांशकोनवमनवांशकः तस्मिन्ननिमिषपरमांशकेविलग्नेशशितनयेबुधेगविवृषेचपंचवर्गलिप्तेस्थिते लिप्ताः पंचविंशतिभुक्त्वाबुधोवृषेस्थितः सकलाः समस्ताअन्येग्रहाःसर्वएवयदिस्वतुंगभेषुस्थिताः परमोच्चगताभवंति तदाजातस्यपरमायुःप्रमाणंविंशत्यधिकंवर्षशतं

पंचदिनाधिकमायुर्भवति । तत्रचकर्म तद्यथा आदित्यादयोग्रहाः सलग्नाईदृशाः

| र. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | १ | ९ | १ | ३ | ११ | ६ | ११ |
| ९ | २ | २७ | ० | ४ | २६ | १९ | २९ |
| ० | ० | ० | २५ | ० | ० | ० | ५९ |
| ० | ० | ० | ० | ० | ० | ० | ० |

अत्रादित्यादीनांबुधवर्जितानांयथापठितानिपरमायुःप्रमाणवर्षाणिभवंति बुधस्यपुनः क्रियते। तत्रतावद्बुधोनीचान्मीनाद्विच्युतः तस्मात्तात्कालिकादस्माद्बुधात् १।०।२५।० बुधपरमनीचध्रुवकमिदं ११।१५।०० संशोध्यजातम् । १।१५।२५।० एतल्लिप्तापिंडीकृतं २७२५ एताभिस्त्रैराशिकं यदि भगणार्धलिप्तानामेतासां १०८०० बुधपरमनीचवर्षाणिषट् भवंति लग्न ११ । २७ तदाऽऽसांनीचाक्रांतलिप्तानां २७२५ किंस्यादिति ।

च बु२ ५ सू.१ ११
शु. १२
मं. १०
३ ९
४गु. ६ ८
५ ७श.

अत्रप्राग्वत्फलंवर्षादि १ । ६ । ५ । ० एतद्बुधपरमनीचवर्षेष्वेतेपुदत्वाजातं ७।६।५ एतद्बुधस्यपरमायुः तत्र लग्नादेकादशस्थानत्वाद्भौमस्यचक्रपातात्परमायुःप्रमाणवर्षपंचदशकादर्धंपातयित्वासार्धानिसप्त ७ । ६ । वर्षाणि सौरस्याष्टमस्थानस्थत्वात्परमायुःप्रमाणाद्वर्षविंशतेः पंचमभागेचत्वारिवर्षाणिपातयित्वाजातानिषोडशवर्षाणि १६ आदित्यचंद्रबृहस्पतिशुक्राणांपरमायुः लग्नस्यनवमनवांशकस्थत्वान्नववर्षाणिभवंति।सर्वेषांस्थापनम्।सूर्यवर्षाणि १९ चंद्रवर्षा०२५ भौमवर्षा० ७ मासाः ६ बुधवर्षा० ७ मासाः ६ दिनानि ५ जीववर्षा० १५ शुक्रवर्षा० २१ शनिवर्षा० १६ लग्नवर्षा० ९ सर्वेषांयोगः वर्षा० १२० दिना० ५ एवंदर्शितयोगेपरमायुःप्रमाणमागतमिति । अत्र चादित्येमेषस्थेकन्यास्थत्वंबुधस्यनसंभवति तेनषड्भिर्ग्रहैरुच्चस्थैर्बुधेचवृषस्थेयोगोयंप्रदर्शितः।अत्रचपरमोच्चगतेसूर्येबुधस्यवृषस्थभागचतुष्टयंभुक्त्वास्थितिर्भवतिनास्मादधिकं यतोमध्यमार्कोदयराशिस्थानेशून्यभागाः षट्पंचाशल्लिप्ता०।६।५० भवंति तदातस्यस्फुटस्यपरमोच्चताभवति एषएवसूर्योमध्यमबुधः अत्रचयदापरमार्कफलंपरमंचशीघ्रफलंधनगतंभवतितदाबुधोवृषेभागचतुष्के स्फुटोभवतितत्रयथादर्शितलग्नेयथावस्थितग्रहसंस्थायांवृषेचतुर्थभागेईदृशोबुधोभवति १।४ अस्मान्नीचध्रुवकमिदम् ११।१५। संशोध्यजातम् १ । १९ एतल्लिप्तापिंडीकृतम् २९४० एताभिस्त्रैराशिकंयदिभगणार्धलिप्तानामेतासाम् १०८०० षड्वर्षाणितदैताभिः २९४० कानीति लब्धंवर्ष १ मासाः ७ दिनानि १८ एतद्बुधपरमनीचवर्षेपुदत्वाजातानिवर्षाणि ७ मासाः ७ दिनानि १८ एतदाद्येपुयथादर्शितवर्षेपुसंयोज्यजातवर्षाणांविंशत्यधिकंशतं १२० मासः १ दिनानि १८ एतद्दर्शितपरमायुःप्रमाणादधिकमप्यायुः संभवतिइति । तस्मात्परमायुःप्रमाणपठनंत्रैराशिकार्थमेवव्याख्यातम् । अन्ये

पुनः अनिमिषपरमांशकेविलग्नेयोगमेवामुंव्याचक्षते । यथामीनेवर्गोत्तमगते लग्नेवृषभस्थेनवुधेनपंचविंशतिलिप्ताभुक्ताभवंत्यन्येचग्रहाः स्वोच्चराशिपुपरमोच्चभागव्यतिरेकेणापियदिस्थितास्तदा योगशक्त्यैवपरमायुःप्रमाणंजातोजीवति । अथवुधस्यपरमनीचध्रुवकंमिदम् ११ । १४ पूर्वंदर्शितंसांप्रतंकर्मकालेकथमिदंप्रदर्शितमित्यत्रोच्यते। चतुर्दशभागान्भुक्त्वापंचदशेपठितेपरमनीचभागेव्यवस्थितोभवति अतश्चतुर्दशभागाः परमनीचस्थस्यप्रदर्शिताः तत्रस्थस्यपरमनीचप्रदर्शितमायुर्भवति तस्माद्यावत्पंचदशोभागोनभुक्तोवुधेनतावत्त्रैराशिकोत्पत्तिर्नकर्तव्येत्यतः कर्मकालेपंचदशभागाः प्रदर्शिताः इत्येतत्सर्वेषामेवग्रहाणांत्रैराशिककालेपठितैर्भागैर्भुक्तैः प्रदर्शयितव्यानितत्रत्रैराशिकार्थमुच्चध्रुवकाः तथात्रैराशिकार्थपरमनीचध्रुवकाः एतैः कर्मकर्तव्यमिति ॥ ६ ॥

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | १ | ९ | ५ | ३ | ११ | ६ | ११ |
| ९ | २ | २७ | १४ | ४ | २६ | १९ | २९ |

आयुर्दायंविष्णुगुप्तोपिचैवंदेवस्वामीसिद्धसेनश्चचक्रे ॥
दोषश्चैषांजायतेष्टावरिष्टंहित्वानायुर्विंशतेःस्यादधस्तात् ॥ ७॥

अथास्यापरमतायुर्दायस्यदूषणार्थंशालिन्याह॥आयुर्दायमिति। एतदायुर्दायंनकेवलंमययवनभणित्थशक्तिपूर्वैरुक्तंयावद्विष्णुगुप्तेनापिचाणक्यापरनाम्नैवमुक्तम्।आचार्यदेवस्वामीतथासिद्धसेनश्चैवंचक्रेकृतवानित्यर्थः।तथाचविष्णुगुप्तः॥परमोच्चगतैःसर्वैर्मीनेमीनांशसंस्थिते। सौम्येचवृषगेजातः परमायुःसजीवति॥ तथाचदेवस्वामी॥सूर्याद्यैरुच्चगतैर्मीनेमीनांशसंस्थितेलग्ने । सौम्येवृषभंयातेजातःपरमायुराप्नोति॥तथाचसिद्धसेनः॥मीनेपरमांशगतेसौम्येगविपंचवर्गलिप्तास्थे।सर्वैः परमोच्चगतैर्जातःपरमायुराप्नोति। यद्येवंबहुभिराचार्यैरुक्तंतत्कोस्यदोषः।तत्रोच्यते।वक्ष्यमाणंसत्याचार्यमतेप्रदर्शितमायुर्दायंबहुतराणामाचार्याणांमतमिति। यस्मादाचार्यवराहमिहिरस्यप्रतिज्ञेयम्। ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकम्।स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये॥ अस्यपरमतस्यबहुतरविरुद्धत्वंतावदास्ताम्। विवादसंभवोदोषोप्यस्तिदोषश्चैषामित्यादि । एषामाचार्याणांमतेदोषोजायते कीदृशइत्याह।अष्टावरिष्टमित्यादि। वर्षाष्टकंयावज्जातानामरिष्टमुक्तंवर्षाष्टकंहित्वात्यक्त्वावर्षविंशतेरधस्ताद्दर्शितप्रकारेणायुर्नस्यान्नागच्छति। एवंवर्षाष्टकादूर्ध्वमरिष्टंनास्तितस्माद्वर्षाष्टकादूर्ध्वंवर्षविंशतेरधस्तान्नकस्यचिन्मरणमापद्यते यावच्चम्रियंतोदृश्यंते अयंतेषांप्रत्यक्षोदोषः ॥ ७ ॥

यस्मिन्योगेपूर्णमायुःप्रदिष्टंतस्मिन्प्रोक्तंचक्रवर्तित्वमन्यैः ॥
प्रत्यक्षोयंतेषुदोषःपरोपिजीवत्यायुःपूर्णमर्थैर्विनापि ॥ ८ ॥

अधुनातेषामेवाचार्याणांमतेआयुर्दायदूषणांतरंशालिन्याह॥यस्मिन्योगेइति।अनिमिषपरमांशकेविलग्नइत्यस्मिन्योगेविंशत्यधिकंवर्षशतंसपंचदिनंपरमायुः पूर्णं प्रदिष्टं तस्मिन्योगेषड्ग्रहाः परमोच्चगताभवंति षड्भिश्चपरमोच्चगतैश्चक्रवर्तित्वं भवतीतिप्रोक्तमभिहितमन्यैराचार्यैः। तथाचबादरायणः॥षड्भिः स्याच्चक्रवर्त्ती त्रिभुवनमखिलंशास्तिसर्वैर्ग्रहेंद्रैरिति। यवनेश्वरश्च॥षड्राजराजर्द्धिबलोपकर्षप्रदानमानेष्वभिजातशक्तिः। तत्रपरमोच्चगतायावंतः षड्ग्रहानभवंति तावत्परमोच्चायुर्नप्राप्नोति यदापरमोच्चगताभवंतितदाजातेनचक्रवर्तिनाभवितव्यम्।एवंपूर्णमायुःविंशत्यधिकंवर्षशतमर्थैर्धनैर्विनावर्जयित्वाबहवःपुरुषाजीवंति तस्मादयमपितेष्वपरोदोषः।एतच्चपरमतायुर्दायदूषणंशालिनीद्वयमसंबद्धत्वाद्वराहमिहिरकृतमेवनभवतीतिप्रतिभाति।तत्रतावद्यदत्रप्रथमशालिन्यादूषणमुक्तम्तस्यदूषणस्यासंबद्धत्वमुच्यते सार्द्धोदितोदितनवांशहतात्समस्तादितिन्यायेनयत्क्रूरेविलग्नगतेआयुषः पातनंक्रियते तस्यप्रतिलग्नंप्रत्यंशकवशादियत्तानसंभवतीतिचपातयित्वायदायुरवशिष्यतेतस्यापीयत्तानास्तीति। तस्माद्यदुक्तम् नायुर्विंशतेःस्यादधस्तात्तदयुक्तम्। अत्रोदाहरणम् यथाकुंभलग्नस्याद्यंशकोदयेआदित्यचंद्रशुक्राःपरमोच्चेबुधजीवशनैश्चराः परमनीचेभौमश्चकुंभस्याप्यष्टाविंशतिमंभागं भुक्त्वास्थितस्तदातात्कालिकाग्रहाःसलग्नाःअत्रलग्नंनकिंचिद्भुक्तमिति लग्नायुर्दायोनास्ति परमोच्चगतानांपरमनीचगतानांचज्ञातएव भौमस्यक्रियते तात्कालिकाद्भौमादस्मात्१०।२८भौमस्यपरमोच्चध्रुवकमिदम्९।२८ संशोध्यजातम् १।०

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | १ | १० | ११ | ९ | ११ | ० | १० |
| ९ | २ | २८ | १४ | ४ | २६ | १९ | ० |
| ० | ० | ० | ० | ० | ० | ७ | १ |

एतल्लिप्तापिंडीकृतम् १८०० अथत्रैराशिकंयदिभगणार्द्धलिप्तानामेतासां १०८०० भौमनीचमासाःनवति ९० भवंति तदैतासांकियंतइति लब्धामासाः १५ एतर्वर्षसत्रिमासंजातं वर्ष १ मासाः ३ एतद्भौमपरमोच्चवर्षेष्वेतेषु १५ संशोध्यजातंवर्षाणि १३ मासाः ९ एषभौमायुर्दायः। अथजीवस्यलग्नाद्द्वादशस्थत्वाच्चक्रपातेनार्द्धंपातयित्वाजातजीवायुर्दायः वर्षा ०३ मासाः९ परमोच्चगतानांपरमनीचगतानांचशत्रुक्षेत्रस्थत्वात्त्र्यंशमस्तंगतानामर्द्धंचनपात्यते यस्मादनिमिषपरमांशकेविलग्नेइत्यत्रयोगेचंद्रमसोवृषस्थत्वाद्यद्यायुषः त्रिभ गः पात्यतेतदापूर्णमायुर्नभवतीति यस्मादन्याचार्यमतमिति तात्कालिकमित्राभित्रविधावुक्तम्॥मूलत्रिकोणाद्धनधर्मबंधुपुत्रव्ययस्थानगताग्रहेंद्राः। तात्कालिकाः स्युःसुहृदोग्रहस्यस्वोच्चेचयोयस्यविकृष्टवीर्यः॥ जामित्रषष्ठाष्टमशत्रुमूर्तिर्द्यूनत्रिकोणैकगृहेनिविष्टाः। तात्कालमेतेरिपवोभवंतिह्येतानिमित्राणिरिपूंश्चवक्ष्ये॥ अनेनापिशुक्रश्चंद्रमसः तात्कालिकंमित्रंनभवति तस्मान्मीनस्थेशुक्रेवृषस्थश्चंद्रमाः शत्रुगृहगोभवति तस्यचशत्रुक्षेत्रस्थत्वाद्यद्यायुषस्त्रिभागःपात्यतेतदा अनिमिषपरमांशकइत्यत्रयोगेपूर्णमायुर्नप्राप्नोतीति। तच्चाचार्येणशृंगग्राहिकयैवप्रद-

र्शितम् । तेनैतज्ज्ञापयति । परमोच्चगतानांपरमनीचगतानांचशत्रुक्षेत्रेत्र्यंशमस्तं गतानांचार्द्धनपात्यते तेनयथादर्शितयोगंक्पृथपृथग्ग्रहायुर्दायवर्षाणिलिख्यंते । सूर्यस्यवर्षा० १९ चंद्रस्यवर्षा० २५ भौमस्यवर्षा० १३ मासाः ९ बुधस्यवर्षा० ६ जीवस्यवर्षा० ३ मासाः ९ शुक्रस्यवर्षा० २१ शनेःवर्षा० १० लग्नेननकिंचिद्भुक्तमिति लग्नायुर्दायोनास्ति। अथैतेषांयोगः वर्षा० ९८ मासाः ६ अथांगारकस्यलग्नगतत्वात्सार्द्धोदितेतिकर्मक्रियते तत्रचलग्नेकुंभारंभत्वान्नवति ९० नवांशकाभुक्ताभवंति तेचनवांशकाश्चक्रस्योदिताउदयगतएकनवतिसमाः ९१ तेनैकनवत्यासर्वायुःपिंडमिदंवर्षा० ९८ मासाः ६ संगुण्यजातम् ८९।६।३।६ अस्याष्टाधिकशतेनभागमपहृत्यावाप्तवर्षाणि ८२ मासाः ११ दिना० २८ घटिकाः २० एतानिवर्षाणि अस्मात् ९८।६ संशोध्यजातंवर्षा० १५ मासाः६दिनं १ कलाः ४०एवमष्टभ्यऊर्ध्वंविंशतेरधस्तादायुरुत्पन्नमिति। तस्मादयुक्तमुक्तम्। नायुर्विंशतेःस्यादधस्तादिति। अत्रान्येवदंति।यथाक्रूरहीनंमीनलग्नंहृदिकृत्वैतद्वराहमिहिरेणोक्तम् अनिमिषपरमांशकेविलग्नेइति।अनेनापिप्रकारेणनवक्तव्यम् । यथानायुर्विंशतेःस्यादधस्तादित्यत्रधन्विलग्नेक्षीणेचंद्रेविंशतितमेभागेबुधस्तत्रास्तमितः सर्वेष्वन्येषुपरमनीचस्थेषुयस्यजन्मभवतितस्यचक्रपातेनैवायुर्दायोबहुः पततीति । तस्यैवतावत्प्रदर्श्यते तत्रतात्कालिकाग्रहाःसलग्नाः रविः ६।९ चंद्रः ७।२ भौमः ३।२७ बुधः ५।२० गुरुः ९।४ शुक्रः ५।२६ शनिः ०।१९ लग्नं ८।० तत्रबुधस्योच्चध्रुवकं ५।१५ बुधः ५।२० अस्मात्पातयित्वाशेषं ०।५ लिप्तापिंडीकृतं ३०० ततस्त्रैराशिकेनतदंतरंपरमनीचमासैः ७२ गुणितंभगणार्धलिप्ताभिः १०८०० भक्तं लब्धं वर्ष० मासौ २ एतत्परमायुषःनिपात्यजातं वर्षा० ११ मासाः १० अन्येषांपरमनीचस्थत्वाज्ज्ञायते लग्नेननकिंचिद्भुक्तमितितस्यायुर्दायोनास्ति । चंद्रस्यक्षीणस्यपापत्वाल्लग्नाद्द्वादशस्थत्वाच्चचक्रपातेन सर्वंपततितदायुर्दायोनास्ति ।आदित्यस्यलग्नैकादशस्थत्वाच्चक्रपातेनार्द्धंपातयित्वाजातंवर्षा० ४ मासाः ९ बुधस्यास्तमितत्वादर्धंपातयित्वाजातंवर्षा० ५ मासाः ११ दशमस्थत्वाच्छुक्रःस्वादायुषस्तृतीयमंशमपहरातिइति ।सौम्यत्वात्तदर्धमस्मात्षड्भागाद्वर्षमेकंनवमासान्पातयित्वाजातान्यष्टौवर्षाणिनवमासाश्चशुक्रस्य भौमस्यलग्नाष्टमस्थत्वात्पंचमभागंसार्द्धंवर्षंपातयित्वा जातानिवर्षाणिषट्इति । एवंसर्वेषांवर्षाणि वर्षा० ४ मासा० ९ सूर्यस्य।वर्ष० मासाः ० चंद्रस्य।वर्षा० ६ मासः० भौमस्य। वर्षा० ५ मासाः ११ बुधस्य । वर्षा० ७ मासाः ६ जीवस्य ।वर्षा० ८ मासाः९ शुक्रस्य । वर्षा० १० मासाः ० शनैश्चरस्य । वर्षा ० मासाः ० लग्नस्य । सर्वेषांयोगः वर्षा० ४२ मासाः ११ अत्रासंभवेप्यभिगम्यापिभ्रमः । एवंविधआयुर्दायः सर्वेप्यस्तंगतायदिभवंति

तथापि सूर्योच्छिन्नद्युतिपुचदलंप्रोज्झ्य शुक्रार्कपुत्राविति कृत्वा तथापिपंचत्रिंशद्वर्षाणिमासोनानियतोबुधस्यपूर्वमेवार्द्धंपातितम् । एवंचद्विचत्वारिंशतोऽधस्तादायुर्नागच्छतीति तथापिविंशतेरधस्तादित्यसंबद्धम् । अत्राप्यन्येएवंवदंति क्रूरहीनेविलग्नेजाताअष्टाभ्यऊर्ध्वंविंशतेः अधस्तान्म्रियमाणादृश्यंते तेनान्याचार्यमतमसंबद्धम् । अत्रोच्यते।अन्याचार्यमतंपूर्वापर्येणविचार्यैतद्वदंति यैरेवाचार्यैरनेनमार्गेणायुर्दायः प्रदर्शितः तैरेवायंमृत्युयोगोभिहितः । सचेहलिख्यते । तथाचबादरायणः ॥ षष्ठाष्टमस्थोरिपुदृष्टमूर्तिः पापग्रहः पापगृहेयदिस्यात् । स्वांतर्दशायांमरणायजंतोर्ज्ञेयः सयुद्धेविजितोयदान्यैः ॥ तथाचयवनेश्वरः ॥ षष्ठाष्टमस्थोशुभदस्त्वरौद्रःपापैः सुहृत्स्थानगतश्चदृष्टः । स्वांतर्दशायां प्रकरोतिमृत्युंपाशाध्वबंधादिपरिक्षयाद्वा ॥ तथाचसारावल्याम् ॥ क्रूरदशायां क्रूरः प्रविश्यचांतर्दशांयदाकुरुते । पुंसांस्यात्संदेहस्तदारियोगोहिसदैवमहान् ॥ रवितनयस्यदशायांक्षितिजस्यांतर्दशायदाभवति । बहुकालजीविनामपिमरणं निःसंशयंपुंसाम् ॥ क्रूरराशौस्थितः पापः षष्ठेवानिधनेपिवा । तत्स्थेनवारिणादृष्टः स्वपाकेमृत्युदोग्रहः ॥ योलग्नाधिपतेः शत्रुर्लग्नस्यांतर्दशांगतः । करोत्यकस्मान्मरणंसत्याचार्यः प्रभाषते ॥ एवंक्रूरहीनेलग्नेयेजातास्तेषांवर्षाष्टकादूर्ध्वंदर्शितकालादधस्तान्मरणंसंभवत्येव । तेचापिमृत्युयोगेनानेनमृताइतिज्ञेयाः यस्मात्तस्यांतर्दशादर्शितग्रहसंबंधिनीकदाभवतीत्यत्रायंनियमः । तस्मादन्याचार्यमतेनैवाष्टाभ्यऊर्ध्वंदर्शितकालादधस्तान्मरणंसंभवत्येव तस्मादेतद्दूषणमसंबद्धंप्रथमम्।अथद्वितीयस्य दूषणस्यासंबद्धत्वमुच्यते। अत्रचक्रवर्तित्वयोगंविनापिदीर्घमायुःसंभवति । अत्रोदाहरणम् । यत्रतात्कालिकाग्रहाः सलग्नाःवृषेर्कोदशभागान्भुक्त्वास्थितः एवंमिथुनेचंद्रमास्त्रीन्भागान् कुंभेभौमोष्टाविंशतिभागान् मेषेबुधःपंचदशभागान् सिंहेजीवःपंचभागान् मेषेसप्तविंशतिःसत्रिभागाञ्छुक्रः कुंभेविंशतिभागान्सौरः धन्विलग्नमंत्येंशे। तद्यथा

| र. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| १ | २ | १० | ० | ४ | ० | १० | ८ |
| १० | ३ | २८ | १५ | ५ | २७<br>२० | २० | २९<br>५९ |

ईदृशाग्रहाः अत्रपूर्वप्रदर्शितकर्मणागतानिग्रहायुर्दायवर्षाणिलिख्यंते वर्षा० १७ मासाः ५सूर्यस्य वर्षा०२२ मासाः ११चंद्रस्य वर्षा० १३ मासाः९भौमस्य वर्षा० ७ मासाः ० बुधस्य वर्षा० १३ मासाः ९ जीवस्य वर्षा० १९ मासाः२दिना० २६घ०३०शुक्रस्य वर्षा० १३ मासाः ४ शनेःवर्षा० ९ मास०लग्नस्य।अथबृहस्पतेर्वर्षाणांचक्रपातादष्टमभागमपास्यजातंवर्षा०१३ मासाः ० दि०११ घ०१५ चंद्रस्यषड्भागमपास्यजातंवर्षा० १९ मासः १ दि० ५ रवेः गुरुर्मित्रमतोन्यथान्यइति । शुक्रः शत्रुः सचार्कमूलत्रिकोणात्सिंहान्नवमेस्थानेस्थितः तस्मात्तात्कालिकंमित्रीभूतः तेनवृषस्थः समक्षेत्रे स्थितस्तेनतस्यायुर्दायंनकिंचित्प-

तति चंद्रश्चमिथुनेमित्रक्षेत्रेस्थितः । तस्यापियथादर्शितान्येवायुर्दायवर्षाणि । यस्मादुक्तम् इंदोर्बुधंदेवगुरुंचविद्यात् । अंगारकः कुंभेशत्रुक्षत्रेस्थितः यस्मादुक्तम् भौमस्यशुक्रः शशिजश्चमित्रमिति । शेषान् रिपून् शेषत्वाच्छनैश्वरस्तस्यशत्रुस्तात्कालिकश्चैकगृहेनिविष्टत्वाच्छनैश्वरोधिशत्रुः किंत्वंगारकस्यशत्रुक्षेत्रस्थस्यापिनपतति ।यस्मादुक्तम् हित्वावक्रंरिपुगृहगतैर्हीयतेस्वत्रिभागइति । तस्मादंगारकस्ययथागतमेवायुः चांद्रेरनर्काइतिवचनाद्भौमोबुधस्यमित्रम् तेनतस्यमेषस्थत्वाद्यथागतमेवायुर्बुधस्य बृहस्पतेरप्यादित्योमित्रम् ।यस्मादुक्तम् गुरोश्चभौमंपरिहृत्यसर्वेइति । तस्मात्सिंहस्थस्यबृहस्पतेः यथागतमेवायुः शुक्रस्य मेषेसचमित्रक्षेत्रे । यस्मादुक्तम् भृगुनंदनस्यत्वर्कैंदुवर्ज्याः सुहृदः प्रदिष्टाः।तस्मात्तस्यापियथागतमेवायुः शनैश्वरस्यापिकुंभेस्वक्षेत्रेस्थितत्वाद्यथागतमेवायुः लग्नस्यपातचारहीनत्वात् यथागतमेवायुः । एवमायुर्दायवर्षाणिपृथक्पृथग्लिख्यंते । वर्षाणि १७ मासाः५सूर्यस्य वर्षा० १९ मासः १ दिना०५चंद्रस्य वर्षा० १३मासाः९भौमस्य वर्षा०७मासाः०बुधस्य वर्षा० १२मासाः०दि० ११ घ० १५ गुरोः वर्षा० १९ मासौ २ दि० २६ घ० ३० शुक्रस्य वर्षा० १३मासाः ४ शनेः वर्षा० ९ मास ० लग्नस्य एवंविधेयोगेदशाधिकंवर्षशतमप्यायुः वर्षादि ११० । १० । १२ । ४५ संभवति ११३ मासा ११ यदाचंद्रवर्षा० २२ मासाः९ तदासर्वेषांयोगः वर्षादि ११४।८।७ ।४५ एवंविधेयोगेचतुर्दशाधिकंवर्षशतमप्यायुः संभवति । केमद्रुमाख्यश्चायंयोगः । यस्माद्वक्ष्यति॥हित्वार्कंसुनफानफादुरधरास्वांत्योभयस्थैर्ग्रहैः शीतांशोः कथितोन्यथात्रबहुभिः केमद्रुमोन्यैस्त्वसौ । तस्मादेवंविधेयोगेजातोदीर्घमायुः प्राप्नोति । केमद्रुमत्वाच्चदरिद्रोभवति । वक्ष्यतिच केमद्रुमेमलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्चनृपतेरपिवंशजाताः। केवलंदरिद्रादीर्घायुषोदृश्यंते। नकेनचित्कस्यचिद्दरिद्रस्यायुःप्रमाणंज्ञातम्। यथायंदरिद्रोविंशत्यधिकेनवर्षशतेनसपंचादिनेनमृतः तस्मात्क्षौद्रमेवदूषणंज्ञातव्यम् । एवमस्यदूषणस्यासंबद्धत्वंप्रदर्शितामिति । असंभाव्यत्वाद्वराहमिहिरकृतमेतच्छालिनीद्वयंनसंभाव्यते। यच्चदर्शिताचार्यमेतनायुर्दायंत्यक्त्वासत्यमतायुर्दायमंगीकरिष्यत्याचार्यस्तत्रचसत्यमतस्यबहुतराणामाचार्याणांमतांगीकरणमेवप्रयोजनम् । यस्मात्पूर्वमेवाचार्यमतेनायुःप्रतिज्ञाव्याख्याता । ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकम्।स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये ॥ अथकश्चिदाह । ननुयोयं योगस्त्वयाप्रदर्शितः सकेमद्रुमएवनभवति । यस्मादाचार्यएववक्ष्यति केंद्रेशीतकरेथवा ग्रहयुतेकेमद्रुमोनेष्यतइति । लग्नात्सप्तमस्थः केंद्रस्थश्चंद्रमास्तस्मादयंकेमद्रुमोनभवति । अत्रचब्रूमः । अत्रचंद्रमानगण्यते यस्माच्चंद्रमसः सकाशाद्ग्रहेणान्येनयोगः

कर्त्तव्यइति । यद्येवंतल्लग्नात्केंद्रस्थः कथंकरोतीत्यत्रोच्यते । चंद्रलग्नयोस्तुल्यत्वात् । तथाचयवनेश्वरः॥मूर्तिंचहोरांशशिनंचविद्यात्। अत्रचगार्गिः॥व्यर्थकेंद्रगश्चंद्राद्विनाभातुंनचेद्ग्रहः । कश्चित्स्याद्वाविनाचंद्रंलग्नात्केंद्रगतोथवा ॥ योगः केमद्रुमोनामतदास्यात्तत्रगर्हितः । भवंतिनिंदिताचारादरिद्यामयसंयुताइति । तस्माल्लग्नात्सप्तमस्थेचंद्रमस्यस्ययोगस्यकेमद्रुमतासिद्धैवेति ॥ ८ ॥

**स्वमतेनकिलाहजीवशर्माग्रहदायंपरमायुषःस्वरांशम् ॥**
**ग्रहमुक्तनवांशराशितुल्यंवहुसाम्यंसमुपैतिसत्यवाक्यम् ॥९॥**

अथजीवशर्ममतेनसत्याचार्यमतेनचायुर्दायमौपच्छंदसिकेनाह॥स्वमतेनेति॥ जीवशर्मानामाचार्यः स्वमतेनात्मीयमतेनपरमायुषोविंशत्याधिकस्यवर्षशतस्य सपंचदिनस्यस्वरांशंसप्तमभागंप्रत्येकस्यग्रहस्यायुर्दायमाहकथयति । किलशब्दस्तथानामप्रदर्शनार्थः । तद्यथापरमायुः १२०।०५ अस्यसप्तभिर्भागमपहृत्यावाप्तंवर्षादि १७ । १ । २२ । ८ । ३४ । यथान्याचार्यैर्नवतिर्थिविषयेत्येदमादीनिपरमोच्चगतानामादित्यादीनांवर्षाणिपठितानितथैतानिपरमायुःस्वरांशवर्षाण्येकैकस्यजीवशर्मपठितानि नीचेर्द्धंहसतीत्यत्रापिस्थितमेवतत्रार्द्धमेतत् ८ । ६।२६।४।१७। एतानिपरमनीचस्थस्यैकैकस्यग्रहस्य एतैः प्राग्वदेवत्रैराशिकंकृत्वैकैकस्यग्रहस्यायुर्दायः कर्तव्यः । अत्रापिवक्रंविनाशत्रुक्षेत्रस्थस्यग्रहस्य त्र्यंशापहानिः शुक्रशनैश्चरौविनाभौमंविनास्तंगतस्यार्द्धापहानिः सर्वार्द्धत्रिचरणेत्यादिकाचक्रपातापहानिः क्रूरेविलग्नेसार्द्धोदितोदितेतिहानिः एतत्सर्वंजीवशर्मणोप्यन्याचार्यैः समानम् । तथाचजीवशर्मा॥सप्तदशै १७ को १ द्वियमौ २२ वसवो ८ वेदाग्नयो ३४ ग्रहेंद्राणाम् । वर्षाण्युच्चस्थानांनीचस्थानामतोर्द्धंस्यात् । मध्येनुपाततः स्यादानयनं शेषमत्रयत्किंचित् ॥ पिंडायुषइवकार्यं तत्सर्वंगणिततत्वज्ञैरिति । अत्रानयनं सुखोपायेनप्रदश्यते । स्वोच्चशुद्धोग्रहः शोध्यषड्भाद्रूनोभमंडलात् । तद्भागाः कब्धिषड्गांगि ८६४१ हतावेदाभ्रसायकैः ५०४ ॥ भक्तादिनादियल्लब्धंतदायुर्जीवशर्मजम् । दिनैस्तुत्रिंशतामासामासेभ्योरविभिः समाः ॥ नकेवलंग्रहदायंपरमायुषः स्वरांशमेतत्तेनोक्तम्।यावत्स्वमतेनेति।अनेनैवंप्रतिपादयति। यथैतन्मयाऋषिकृतेष्वाचार्यकृतेषुवानकेपुचिच्छास्त्रेषुदृष्टमिति तस्मादस्यायुर्दायस्यजीवशर्मणः स्वमतकरणमेषदोषः । एवंसर्वाचार्यमतेनायुर्दायोव्याख्यातः । अत्राचार्येणपरमतमेवोपन्यस्तम् मययवनमणित्थशक्तिपूर्वैरिति । नचयवनेश्वरकृतेशास्त्रेतथाविधआयुर्दायोदृष्टः । यस्माद्यवनेश्वरेणोक्तम् ॥ आयूंषिराश्यंशकराशियोगादिति । अत्रोच्यते । यवनेश्वरेणस्फुजिध्वजेनान्यच्छास्त्रंकृतम् । तथाच

स्फुजिध्वजः ॥ गतेनसाभ्यर्धशतेनयुक्ताप्यंकेनकेषांनगताब्दसंख्या । कालः शका १०४४ नांसविशोध्यतस्मादतीतवर्षाद्युगवर्षजातम् ॥ एवंस्फुजिध्वजकृतंशककालस्यार्वाग्ज्ञायते।अन्यच्च यवनाचार्यैःपूर्वैः कृतमिति तदर्थंस्फुजिध्वजोप्याह। यवनाऊचुः येसंग्रहेदिग्जनजातिभेदाःप्रोक्ताःपुराणैःक्रमशोग्रहस्य। तदेतज्ज्ञायतेयथावराहमिहिरेणपूर्वयवनाचार्यमतमेवोपन्यस्तम् अस्माभिस्तन्न दृष्टम् स्फुजिध्वजकृतमेवदृष्ट्वा पराशरस्यापीयमेववार्ता पाराशरीयासंहिताकेवलमस्माभिर्दृष्टानजातकंश्रूयतेस्कंधत्रयमितिपाराशरस्येति तदर्थंवराहमिहिरः शक्तिपूर्वैरित्याह ॥ चित्रंप्रोज्झ्यपराशरः कथयतेदौर्भाग्यदंयोषितामित्येवमादि मयमणित्थयोर्होराशास्त्रेविद्यते।तथाचमयः॥एकोनविंशतिःसूर्यश्चंद्रमाःपंचविंशतिः।तिथिसंख्याकुजः सौम्योद्वादशोच्चगतोगुरुः॥कुजवद्दैत्यपूज्यस्यवर्षाणामेकविंशतिः॥एकोनासूर्यपुत्रस्यपरमोच्चगतस्यच ॥ आयुर्दायमिदंप्रोक्तमर्धंनीचगतस्यतु।अंतरेत्वनुपाताच्चकारयेदायसंग्रहम्॥तथाचमणित्थः॥नवरूपाःशरयमलास्तिथयोर्काःपंचरूपकाःक्रमशः।रूपयमाकृतिसंख्याःसूर्यादीनांस्वतुंगभेष्वब्दाः॥ नीचेष्वस्माद्दलमन्यत्रानुपाततःकार्यम् । आयुर्दायविधानंहोराभक्तांशराशितुल्यमपि॥अथवराहमिहिरस्यस्वमतायुर्दायोयवनेश्वरसत्यमतानुसारीव्याख्यायते । ग्रहभुक्तनवांशराशितुल्यमिति। यत्रतत्रराशौयस्मिन्नवांशकेग्रहोव्यवस्थितःसच नवांशकोमेषादेरारभ्ययावत्संख्यस्यराशेःसंबंधीभवति तावंतिवर्षाणिग्रहः स्वायुर्दायंप्रयच्छति। एतदुक्तंभवति । मेषादेरारभ्ययावतांराशीनांसंबंधिनोनवांशकाग्रहेणभुक्ताभवंति।तावंतिवर्षाणिग्रहःप्रयच्छति एवंग्रहभुक्तनवांशराशितुल्यंभवति।यस्मिन्नवांशकेवर्तते तस्माच्चद्भुक्तंग्रहेणतेनसहत्रैराशिकंकृत्वामासाद्यानयितव्यम्।त्रैराशिककरणंचवक्ष्यति।एवमायुर्दायानयनंचसत्याचार्येणोक्तम्।तथाच तद्वाक्यम्॥राश्यंशकसंयोगादायुरिहसमासतोग्रहाद्द्युः । एतच्चसत्यवाक्यम्॥ बहुसाम्यंसमुपैति बहूनामाचार्याणांसंमतम्॥तथाचयवनेश्वरः ॥ आयूंषिराश्यंशकचारयोगादिति ।अत्रतावत्सत्ययवनेश्वरवाक्यव्याख्यानेकिंचिद्विप्रतिपन्नं राशेरंशकचारयोगादितिव्याचक्षते । यथायस्मिन्राशौग्रहोवर्तते तत्रतेनयावंतोनवांशकाभुक्तास्तावंत्येववर्षाण्यायुःसग्रहोददाति । अत्रचव्याख्यानेपरमग्रहदायसाध्यमानेनवर्षाणिभवंति । एतच्चव्याख्यानंवादरायणादिभिरंगीकृतम्।तथाच बादरायणः॥राश्यंशकलागुणिताद्द्वादशनवभिर्ग्रहस्यभगणेभ्यः । द्वादशहृतावशेषेब्दमासदिननाडिकाःक्रमशः ॥ इदमाचार्यवराहमिहिरेणविनष्टएवस्वल्पजातकेभिहितमेतदनुसारेणसत्ययवनेश्वरयोर्व्याख्यानंक्रियते । आयूंषिराश्यंशकचारयोगादिति । राशीनामंशकाराश्यंशकाः । तेषुचारयोगादिति।यत्रतत्रराशौ मेषांशकस्थोग्रहोवर्षमेकंप्रयच्छति वृषनवांशकस्थोग्रहोवर्षद्वयंप्रयच्छति एवमु-

त्तरोत्तरांशकवृद्ध्यावर्षवृद्धिर्यावन्मीनांतेद्वादशइति पूर्वव्याख्यानेनयवनेश्वरसत्यवाक्ययोराशिग्रहणमनर्थकंभवति। अवश्यमेवराश्यंशकैर्भवितव्यामिति ॥९॥

**सत्योक्तेग्रहमिष्टंलिप्तीकृत्वाशतद्वयेनाप्तम् ॥**
**मंडलभागविशुद्धेब्दाःस्युःशेषात्तुमासाद्याः ॥ १० ॥**

अथानेनैवव्याख्यानानुसारेणाचार्यःसएवायुर्दायानयनमार्ययाह ॥सत्योक्तेइति। सत्योक्ते सत्यमतायुर्दायकरणेतात्कालिकमिष्टमभिप्रेतं ग्रहंलिप्तीकृत्यलिप्तापिंडंकृत्वातस्यशतद्वयेनभागमपहृत्ययदवाप्तंतदवाप्ताख्यंस्थाप्यम्। अवशेषमधःस्थाप्यम्। अवाप्तमंडलभागविशुद्धेऽब्दाःस्युःमंडलभागशब्देनद्वादशभागउच्यते।तेनावाप्तस्यद्वादशभिर्भागमपहृत्यावाप्तंत्याज्यम्।यदवशिष्यतेतेब्दाःस्युस्तावंतिवर्षाणितेनग्रहेणायुषोदत्तानिभवंति। शेषात्तुमासाद्याःयदवशेषंस्थापितं तस्माद्द्वादशगुणितात्तेनैवच्छेदेनविभक्तान्मासालभ्यंते।तच्छेषात्रिंशद्गुणिताद्दिनानि तच्छेषत्षष्ट्यागुणिताद्घटिकाःपुनरपिषष्टिघ्नात्प्राग्वत्भक्ताच्चविकलालभ्यंतेइति एवमागतंग्रहस्यायुर्दायंभवति॥तत्रोदाहरणम्॥तात्कालिकोग्रहः १।८।४५।० लिप्तापिंडीकृताः २३२५ अस्यशतद्वयेन २०० भागमपहृत्यावाप्तं ११ जातंअवशेषम् १२५ अवाप्तस्यास्यद्वादशभिर्भागंनप्रयच्छति इतिएतदेवावशेषंतस्माद्ग्रहेणैकादशवर्षाणिदत्तानिभवंति। अवशेषं १२५ द्वादशभिर्गुणितं जातम् १५०० अस्यशतद्वयेनभागमपहृत्यावाप्तं ७ जातमेवंसप्तमासाः अथमासशेषम् १०० त्रिंशता ३० गुणितंजातम् ३००० अस्यशतद्वयेनभागमपहृत्यावाप्तं १५ दिवसाः पंचदशइति शेषस्याभावात् घटिकाभावः एवमागतमेवंविधाद्ग्रहाद्वर्षादि वर्षा० ११ मासा० ७ दिना० १५ घटिका० अथतदेवराश्यंशकलागुणितादिति न्यायेनप्रदर्श्यते। तद्यथा राश्यादिग्रहः १।८।४५। अस्यराशिभागलिप्ताः पृथक्पृथग्द्वादशहताः १२।८६।५४० अथ भूयोनवाहताः ।१०८।८६४।४८६० अत्रलिप्तानामेतासां ४८६० षष्ट्याभागेहृतेलब्धम् ८१ अवशेषं० लब्धमिदंघटिकाख्यं ८१ भागेषु ८६४ संयोज्यंजातम् ९४५ अस्यत्रिंशताभागेहृतेलब्धम् ३१ अवशेषम् १५ एतेदिवसाः अथलब्धमिदं ३१ राशिष्वेतेषु १८ संयोज्यंजातम् १३८ अस्यद्वादशभिर्भागेहृतेलब्धं ११ शेषम् ७ एतेमासाः लब्धस्यास्य ११ द्वादशभिर्भागं नप्रयच्छतीत्यतएतदेवात्रशेषम् ११ एतानिग्रहायुर्दायवर्षाणि ११ मासाः ७ दिना० १५ घ० । एतत्पूर्वकृतायुर्दायेसंविहितमिति । एवंयवनेश्वरसत्याचार्यबादरायणवराहमिहिरैरायुर्दायः प्रदर्शितइति ॥ १० ॥

स्वतुंगवक्रोपगतैस्त्रिसंगुणंद्विरुत्तमस्वांशकभत्रिभागगैः ॥
इयान्विशेषस्तुभदत्तभाषितेसमानमन्यत्प्रथमेप्युदीरितम् ॥ ११ ॥

एवमागतस्यायुर्दायस्यसत्याचार्यमतेनैवकर्मविशेषार्थंवंशस्थेनाह॥ स्वतुंगवक्रेति । स्वतुंगस्थैः स्वोच्चगतैर्ग्रहैः वक्रोपगतैः विपरीतगत्यास्थितैश्चयत्स्वदत्तमायुस्तत्त्रिशत्संगुणंकार्यम् । द्विरुत्तमेति । उत्तमांशोपगतैः वर्गोत्तमांशस्थितैः स्वांशकस्थितैः स्वनवमभागगतैः स्वभस्थैः स्वराश्युपगतैः स्वत्रिभागगैः स्वद्रेष्काणस्थैः एतैः यद्दत्तमायुः तद्द्विसंगुणंकार्यम् । इयान्विशेषइति । भदत्तशब्देनसत्याचार्योभिधीयते यस्मात्तन्मतमिहप्रमाणीक्रियते । पूर्वोक्तविधिनामययवनमणित्थादिमतेनायुर्दायः कृतः तस्माद्भदत्तभाषिते सत्याचार्यकृतेइयानेतावान्विशेषः । यदेतत्स्वतुंगवक्रोपगतैः त्रिसंगुणमिति तत्सत्योक्तमेवसमानमन्यदिति । अन्यद्यच्छेषंतत्प्रथमेप्युदीरितम् । प्रथमेमययवनादिमतेयदुदीरितमुक्तम् ।तत्समानमत्रापितत्तुल्यम् । एतदुक्तंभवति॥सत्याचार्यमतेनायुर्दायंकृत्वावक्रवर्ज्यंशत्रुक्षेत्रगतस्यत्र्यंशंपातनीयंशुक्रसौरवर्ज्यम् । अस्तगतस्यार्द्धंपात नीयंसर्वार्धत्रिचरणेत्यादिचक्रपातोपहानिः कार्या ॥ ११ ॥

किंत्वत्रभांशप्रतिमंददातिवीर्यान्विताराशिसमंचहोरा ॥
क्रूरोदयेचोपचयःसनात्रकार्यंचनान्दैःप्रथमोपदिष्टैः ॥ १२ ॥

एवंसत्याचार्यमतेनग्रहायुर्दायमुक्त्वाधुनालग्नायुर्दायकरणंक्रूरोदयेपापहानिःप्राप्तातदपवादार्थमिंद्रवज्रयाह॥ किमिति ।अत्रास्मिन्सत्यमतायुर्दायेहोरालग्नंभांशप्रतिमंददाति॥एतदुक्तंभवति॥मेषादेरारभ्ययावत्संख्यास्यराशेःसंबंधीनवांशको लग्नेनभुक्तस्तावंतिसंख्यानिवर्षाणिलग्नायुर्दायोभवति । शेषाद्भागादिकान्नवांशकात्त्रैराशिकेनमासाद्यानयितव्यम्।एतदुक्तंभवति।सत्योक्तिग्रहमिष्टंलिप्तीकृत्येत्येवंलग्नायुर्दायःकर्तव्यः।एवंकृत्वायदिवीर्यान्विताहोराभवति तदाराशिसमानानि राशितुल्यानिवर्षाणिप्रयच्छतीति । होरास्वामिगुरुज्ञवीक्षितयुतानान्यैरिति न्यायेनयदिवीर्यान्विताबलवतीहोरालग्नंभवति तदाराशिसमंददाति तत्तुल्यानिवर्षाणिप्रयच्छति भागादिकात्त्रैराशिकेनमासाद्यानयितव्यं कथमुच्यते । भागाश्चलिप्तापिंडीकृत्यद्वादशभिः संगुण्याष्टादशभिः शतैः भागमपहृत्यावाप्तं मासाः अवशेषंत्रिंशतासंगुण्य तेनैवच्छेदेनभागमपहृत्यावाप्तंदिवसाः तदेवशेषं षष्ट्यासंगुण्यतथैवघटिकाः पुनरपिशेषंषष्ट्यासंगुण्य तथैवचषकाः लब्धं मासादितत्रैवयोजयेदेवंलग्नायुर्दायोभवति वीर्यान्वितस्यलग्नस्य यत्कर्मतद्वीर्यवर्जितस्यचनकर्तव्यम् ॥ अत्रचबादरायणः ॥ होरादयोप्येवंबलयु-

क्तान्यानिराशितुल्यानि।वर्षाणिसंप्रयच्छत्यनुपाताच्चांशकादिफलम् ॥ एतच्चार्यवराहमिहिरेणस्वल्पजातकेऽविनष्टचैवाभिहितम् । क्रूरोदयइति । मययवनादिमतायुर्दायेक्रूरोदयेक्रूरेलग्नगतेसार्द्धोदितोदितनवांशहतात्समस्तादितिन्यायेन-यदायुषोपचयः क्रियते तदत्रास्मिन्सत्यमतायुर्दायेनकर्तव्यम्।अन्यत्सर्वंकर्तव्यम्।कार्यंचनाब्दैरिति प्रथमोपदिष्टैः पूर्वकथितैरब्दैः नवतिथिविषयैतियेब्दायवन-बादरायणाचार्यमतेनपठिताजीवशर्ममतेनचग्रहदायंपरमायुषः स्वरांशमिति तैरब्दैस्त्रैराशिकमुक्तंतदिहनसंभवति । यथादित्यस्यद्वादशकानामंशकानामेकोनविंशत्यब्दाभवंति तदेकस्मिन्नंशकेकिमितिसत्यायुर्दायेनकर्तव्यम् ॥ १२ ॥

सत्योपदेशोवरमत्रकिंतुकुर्वंत्ययोग्यंबहुवर्गणाभिः ॥
आचार्यकत्वंचबहुघ्नतायामेकंतुयद्भूरितदेवकार्यम् ॥ १३ ॥

अथमयादिमतमुपन्यस्यजीवशर्ममतंचोपन्यस्यसत्यमतस्यैवांगीकरणमिंद्रवज्रयाह॥सत्योपदेशइति।अत्रास्मिन्मतत्रयेसत्योपदेशोवरंश्रेष्ठइत्यर्थः।किंतुतदप्यन्येबहुवर्गणाभिः बह्वीभिः गुणनाभिरयोग्यंकुर्वंतिविनाशयंतिकास्ताः गुणनाः स्वतुंगवक्रोपगतैस्त्रिसंगुणमित्यादिकाः तत्रयदिस्वगृहेग्रहोभवतितदा द्विगुणमायुः कुर्वंति सएवस्वगृहांशकेयदिभवतितदाभूयोपिद्विगुणंकुर्वंति स एव स्वद्रेष्काणेयदाभवतितदाभूयोपिद्विगुणंवर्गोत्तमांशेसएववक्रीयदिभवति तदाभूयस्त्रिगुणंकुर्वंतिसएवस्वोच्चस्थोभवतितदाभूयोपित्रिगुणंकुर्वंति । एवमनवस्था । अनेनानवस्थाप्रसंगेनसत्योक्तमप्यायुर्दायमयुक्तंबहुवर्गणाभिः कुर्वंति । तथाचमयः ॥ वर्गोत्तमेस्वराशौद्रेष्काणेस्वेनवांशकेद्विगुणम् । वक्रोच्चगते त्रिगुणंद्विगुणंकार्यंयथासंख्यम्॥ तथाचसारावल्याम् ॥ बहुताडनसंप्राप्तौयांकरोत्येकवर्गणाम् । वराहमिहिराचार्यः सानदृष्टाचिरंतनैरिति ॥एतदप्ययुक्तम्।तदात्र किंकार्यमित्याह।आचार्यकत्वंतुबहुघ्नतायामिति।एतदाचार्यकत्वमत्रागमः बहुघ्नतायांप्राप्तायामेकंतुयद्भूरिबहुतरंगुणनंतदेवकार्यमिति । बहुषुगुणनासुप्राप्तास्वेकैवक्रियतेइति बहुवारंयत्रद्विगुणंप्राप्तंतत्रसकृदेवद्विगुणमायुः कर्तव्यम् । यत्रद्विगुणत्वंत्रिगुणत्वंचप्राप्तंतत्रसकृदेवत्रिगुणंकर्तव्यम् । यत्रवारद्वयंत्रिगुणत्वं प्राप्तंतत्रसकृदेवत्रिगुणंकर्तव्यम् । एकंतुयद्भूरितदेवकार्यमितिवचनात् स्वल्पजातकेप्युक्तमाचार्येण ॥ वर्गोत्तमेस्वराशौस्वद्रेष्काणेस्वनवांशकेसकृद्द्विगुणं वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वेसकृत्त्रिगुणमिति ॥ चक्रपातंवर्जयित्वाबहुवर्गणान्यायेनैतदेवकर्म शत्रुक्षेत्रस्थोनीचस्थश्चयदाग्रहोभवति अस्तंगतोवातदा सकृदेवापहानिःकार्या नीचेतोर्द्धंहसतीत्यत्रापिअनुवर्तनीयम् । उक्तंचस्वल्पजातके॥शत्रुक्षेत्र्यंशंनीचेर्द्धंसूर्यलुप्तकिरणाश्च ।क्षपयंतिस्वादायान्नास्तंयातौराविज-

शुक्राविति॥ एवंकृतस्यसत्याचार्यमतस्यस्पष्टताभवतीत्याचार्यस्यमतम्। यत्रापहानिः प्राप्तागुणनाचप्राप्तातत्रसकृदेवापहानिंकृत्वासकृदपिगुणनाकार्या किंत्वपहानौकर्तव्यायांचक्रपातापहानिंकृत्वाततः शत्रुक्षेत्रस्थस्यापहानिः सकृदेवकर्तव्या ततःसकृदेवगुणनाकार्या अत्रचभगवान्गार्गिः॥ राशितुल्यांशसंख्या निग्रहोद्दानिप्रयच्छति।लग्नश्चसबलोन्यानि भुक्तराशिसमानितु॥मासाद्यानयनं कार्यमनुपातादतःपरम्।सर्वार्द्धत्रिचतुर्थांशान्वामंपंचचतुःसमित्॥ हरंतिपापाः स्वाद्दायात्तदर्धमितरेग्रहाः।व्ययाचक्रापहानिस्तुकथितेयंतथाध्रुवम्॥एकस्त्वेकर्क्षगेष्वेवकरोतिबलवान्ग्रहः।शत्रुक्षेत्रगतश्चयंशंनीचेर्द्धसूर्यगस्तथा॥हंतिस्वाद्दायाद्द्विगौनसितादित्यनंदनौ।नचावनिसुतश्चांशंशत्रुक्षेत्रगतस्तथा॥ध्रुवापहानिःकर्तव्याततोन्यासुबह्वष्वपि।प्राप्तास्वेकैवकर्तव्यायास्यात्तासुमहत्तरा॥ ततोपिगुणना कार्याप्येकैवमहतीसकृत्। द्वाभ्यांवर्गोत्तमेस्वांशेस्वद्रेष्काणेस्वकेग्रहे ॥ त्रिभिर्वक्रगतस्याथस्वोच्चराशिगतस्यच।ग्रहदायोभवत्येवंशोध्यक्षेपकृतस्तुयः॥ अत्रयद्यप्याचार्येणांशायुः प्रमाणीकृतम् तथापिलग्नोयदिसम्यग्बलीभवतितदांशायुः कर्तव्यम्।अथार्कोबलवांस्तदापिंडायुः।तथाचमणित्थः ॥ विलग्नेतिबलोपेतेशुभदृष्टेंशसंभवः।रवौपिंडोद्भवंकुर्यादितिब्रूयुश्चिरंतनाः॥तथाचसारावल्याम्। अंशोद्भवंविलग्नात्पिंड्यंभानोर्निसर्गजंचंद्रादिति॥ अन्येप्येवमाहुः यथाअंशायुःपिंडायुषीद्वेअपिकार्ये द्वाभ्यामपिदशांतर्दशाविभागपरिकल्पनाकार्या तत्रयदल्पंतस्यांतिममंतर्दशासैवयद्याधिकस्यतत्कालंवर्तते तदाधिकमायुर्जीवति शत्रुदशाचेत्तदातत्रैवमरणंमित्रदशाचेत्तदापिजीवति मध्यमदशाचेत्तदापीडाभवति ततोपिजीवति अस्माकंसत्याचार्यमतमभिमतमिति ॥ १३ ॥

गुरुशशिसहितेकुलीरलग्नेशशितनयेभृगुजेचकेंद्रयाते ॥
भवरिपुसहजोपगैश्चशेषैरमितमिहायुरनुक्रमाद्विनास्यात्॥१४॥

## इति आयुर्दायाध्यायः सप्तमः॥७॥

अथ यस्मिन्योगेजातस्यायुःप्रमाणंनज्ञायतेतद्योगज्ञानंपुष्पिताग्रयाह ॥ गुरुरिति॥ कुलीरलग्नेकर्कटोदयेगुरुशशिसहितेजीवचंद्रयुक्तेतथाशशितनयेबुधेभृगुजेचशुक्रेकेंद्रयातेकंटकगते शेषैःपरिशिष्टैः रविभौमसौरैः भवरिपुसहजोपगैंतैःभवस्थानमेकादशंरिपुस्थानंषष्ठंसहजस्थानंतृतीयमेतेषुभवरिपुसहजेषुउपगतैः स्थितैः इहास्मिन्योगेजातस्यानुक्रमाद्विनागणितकर्मांतरेणापिविनाऽमितमपरिमितायुःस्याद्भवेत्॥ एतदुक्तंभवति॥ यदाकर्कटलग्नंभवतितत्रैवचंद्रजीवौव्यवस्थितौभवतः बुधशुक्रौसहितौपृथक्स्थौवालग्नचतुर्थसप्तमदशमस्थानानामन्यतमेयथासंभवंभवतः परिशेषाः आदित्यांगारकशनैश्चराः पृथक्सहितावाय-

थासंभवमेकादशषष्ठतृतीयगाः भवंतितदाईदृग्योगेयोजातः तस्यामितप्रमाण-मायुर्भवति अनुक्रमाद्गणितागतंविनैवअयमर्थः एवंविधेयोगेदृष्टेआयुर्दायग-णनानकर्तव्या यस्मात्तस्यासंभवइति अतोन्यथाजातस्ययथागतेनायुषावश्य-मेवभवितव्यम् । नायुःपिंडस्यार्वाक्तस्यमृत्युर्भवति नचायुःपिंडमतिक्रम्यते-नजीवितव्यमिति।यस्मिन्योगेजातस्यानाचारस्यैवायुषोध्वंसोभवतिइति। तथा चस्मृतिषूक्तम् ॥पारदार्यमनायुष्यमित्येवमादिकैर्दोषैर्नजीवतिएतद्योगेजातस्या युर्वेदोक्तैर्विधिसेवितैरसायनैः प्रयोगैर्यथाभिहितैर्दीर्घमायुरवाप्नोतीति ॥ १४ ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतावायुर्दायाध्यायःसप्तमः ॥ ७ ॥

उदयरविशशांकप्राणिकेंद्रादिसंस्थाःप्रथमवयसिमध्येंत्येच दद्युःफलानि ॥ नहिनफलविपाकःकेंद्रसंस्थाद्यभावेभवति हिफलपक्तिःपूर्वमापोक्लिमेपि ॥ १ ॥

अथातोदशांतर्दशाध्यायोव्याख्यायते।परिज्ञातसमस्तायुषःपुरुषस्यजीविता-भ्यंतरेस्थितयोःसुखदुःखयोःपरिच्छेदःक्रियते तत्रचशोध्यक्षेपविशुद्धमायुर्याव-त्प्रमाणंयेनग्रहेणदत्तंतावत्प्रमाणैवतस्यसंबंधिनीदशाभवति । तत्रदशाक्रमोनज्ञा-यतेतज्ज्ञानंमालिन्याह ॥ उदयोलग्नंतनुः रविरादित्यआत्मा शशांकश्चंद्रोमनः एषामुदयरविशशांकानांमध्याद्यःप्राणीबलवांस्तद्बलवशात्तस्यसंबंधिनीप्रथमाद शाभवति प्राधान्याद्देहवताम्।तथाचयवनेश्वरः ॥निशाकरादित्यविलग्नमध्येत-त्कालयोगादधिकंबलंयः ॥ बिभर्तितस्यादिदशेष्यतेसाशेषास्ततः शेषबलक्रमे-णेति ॥उदयश्चरविश्चशशांकश्चोदयरविशशांकाः उदयरविशशांकानांप्राणीउद-यरविशशांकप्राणीउदयरविशशांकप्राणीचकेंद्रादिसंस्थाश्चोदयरविशशांकप्राणि-केंद्रादिसंस्थाः एवमेषांमध्याद्येनप्रथमादशादत्तातस्यैवकेंद्रादिसंस्थाः केंद्र-पणफरापोक्लिमेषुस्थिताग्रहाः वीर्योपचयक्रमेणदशादद्युः एवंलग्नार्कशशांका-नांमध्यादेकस्यबलवतोदशाआदौपरिकल्प्या ततस्तस्यकेंद्रस्थास्तेषांदशाःपरि-कल्प्याः तैःकेंद्रस्थैः प्रथमवयसिफलंदत्तंभवति ॥ यदुक्तम् प्रथमवयसिमध्येत्यें-चदद्युःफलानीति। तथाचयवनेश्वरः ॥ पूर्वंतुकेंद्रोपगताःफलंतिमध्येवयःपाणफ-रंनिविष्टाः। आपोक्लिमस्थाःफलदावयोंत्येयथाबलंस्वंसमुपैतिपूर्वम्॥अथयदिकें-द्रस्थाग्रहाःनभवंति तदाकः प्रथमेवयसिफलंप्रयच्छतीत्याह ॥ नहिनफलविपाक इत्यादि। केंद्रस्थाद्यभावेकेंद्रस्थानांग्रहाणामभावेअसंभवेसतिप्रथमेवयसियःफल-विपाकःसनहिन।यतोद्वौनञौप्रकृतमर्थंगमयतः।पणफरस्थानामप्यभावेमध्येवय सिफलविपाकोनहिन आपोक्लिमस्थानामभावेंत्येवयसिफलविपाकोनहिन॥एत-

दुक्तंभवति । यदाकेंद्रस्थाग्रहानभवंतितदापणफरस्थाः पूर्वंफलंप्रयच्छंति । ततआपोक्लिमस्थाः । अथकेंद्रस्थाः पणफरस्थाश्चनभवंति तदासर्वस्मिन्नेवव-यसिआपोक्लिमस्थाःफलंप्रयच्छंति। यतउक्तम् भवतिहिफलपाक्तिःपूर्वमापोक्लिमे-पिइति । एवमापोक्लिमस्थानामभावेप्रथमंकेंद्रस्थाः फलंप्रयच्छंति ततःपणफर-स्थाः यदाआपोक्लिमस्थानभवंति नचपणफरस्थास्तदासर्वस्मिन्नेववयसिकेंद्र-स्थाःफलंप्रयच्छंति । एतदुक्तंभवति लग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथ मा।प्रथमांदशांकल्पयित्वाततस्तत्केंद्रगानांसर्वेषांकल्पनीयाः तेषांपरिकल्प्यप-णफरस्थानांपरिकल्पनीयास्ततःपरमापोक्लिमस्थानां केंद्रस्थानामभावेप्रथमंद-शापतेरनंतरंपणफरस्थानांकल्पनीयास्ततः आपोक्लिमस्थानांकेंद्रस्थानामभावे पणफरस्थानामभावे आपोक्लिमस्थानामेवकल्पनीयाः अथकेंद्रस्थाभवंतिपण। फरस्थानभवंति आपोक्लिमस्थाएवभवंति तदाकेंद्रस्थानांकल्पयित्वाआपो-क्लिमस्थानामेवकल्पनीयाः।अथकेंद्रस्थाएवकेवलंभवंतितदातेषामेवकल्पनीयाः-अथपणफरस्थाएवभवंतितदापणफरस्थानामेवकल्पनीयाः अथापोक्लिमस्थाभ-वंतितदातेषामेवकल्पनीयाः। तथाचस्वल्पजातकेउक्तम्॥ लग्नार्कशशांकानांयो बलवांस्तद्दशाभवेत्प्रथमा । तत्केंद्रपणफरापोक्लिमोपगानांबलाच्छेषाः ॥ १ ॥

आयुःकृतंयेनहियत्तदेवकल्प्यादशासाप्रबलस्यपूर्वम् ॥
साम्येबहूनांबहुवर्षदस्यतेषांचसाम्येप्रथमोदितस्य ॥ २ ॥

अथदशाकालप्रमाणंकेंद्रस्थानानामपिदशाक्रमज्ञानमिंद्रवज्रयाह ॥ आयुःकृ-तमिति । शोध्यक्षेपविशुद्धमायुर्यावद्वर्षप्रमाणंयेनग्रहेणदत्तंतदेवतस्यग्रहस्यसंबं-धिनीदशाकल्प्यापरिकल्पनीया ।तत्रलग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्र थमेतिन्यायेनतद्दशांप्रथमंकल्पयित्वात तस्तत्केंद्रगानांमध्यात्सैवदशाप्रबलस्या-तिबलस्यपूर्वंप्रथमंकल्प्या।अनंतरंतस्मादूनबलस्य एवंक्रमेणयथायथाऊनबलाभ-वंतितथातथापश्चात्तदीयदशाःकल्पनीयाःएवंकेंद्रस्थानां दशाःपरिकल्प्याःततः पणफरस्थानाम् अनेनैवक्रमेणपरिकल्प्याः ततःआपोक्लिमस्थानाम् अनेनैवक्रमे णेति । साम्येबहूनामिति।केंद्रस्थानांबहूनांग्रहाणांबलसाम्येसतिबहुवर्षदस्यबहू-निवर्षाणियेनदत्तानितस्यप्रथमंदशापरिकल्प्या । नन्वत्रकथंग्रहाणांबलसाम्यंभ वति यदिद्वावपिसुहृत्त्रिकोणोच्चगतौभवतस्तदानैसर्गिकेणबलेनयोधिकः स एवबलीस्यात्।अस्त्वेतत् । किंतुस्थानदिक्चेष्टाकालबलग्रहदर्शनादिबलानियाव-द्गणितविधिनैकीक्रियंतेतावद्बलसाम्यंभवति ग्रहाणांयथासामान्येनोदाहरणम्।य दिशनैश्चरोबलत्रयेणसंयुक्तोभवति भौमोबलद्वयेनतदातत्रभौमस्यानिसर्गबल-वत्त्वाद्बलसाम्यंभवति एवं सर्वेषामपिज्ञेयम् । तेषांचसाम्येप्रथमोदितस्येति

तेषांवर्षाणांसाम्येवर्षदानतुल्येपिप्रथमोदितस्यदशापरिकल्प्या प्रथममादावर्क-मंडलाद्यउदितउद्गतस्तस्ययदाबलसाम्यंनभवतितदाबहुवर्षदेपिग्रहेस्थितेतदा प्रथमोदितेपिस्थितेबलाधिकस्यैवपूर्वंदशापरिकल्प्यातेषांचबलसाम्येप्रथमोदि-तस्येत्यत्रद्विविधउदयः प्रत्यहंचक्रभ्रमवशादेकः आदित्यविप्रकर्षेणापरः त-त्रेहादित्यविप्रकर्षेणउदयोगणितस्कंधोक्तकालांशकवशाज्ज्ञेयः । अत्रचभगवान् गार्गिः ॥ बलीलग्नेंदुसूर्याणांदशामाद्यांप्रयच्छति ॥तस्मात्ततःप्रयच्छंतिकेंद्रादि-स्थाःक्रमेणतु ॥ तत्रापिबलिनः पूर्वंतत्साम्येबहुदायकाः । तत्साम्येपिप्रयच्छंतिये पूर्वंरविविच्युताः ॥ २ ॥

एकर्क्षगोर्द्धमपहृत्यददातितुस्वंत्र्यंशंत्रिकोणगृहगःस्मरगः स्वरांशम्॥पादंफलस्यचतुरस्रगतःसहोरास्त्वेवंपरस्परगताः परिपाचयंति ॥ ३ ॥

एवंदशाव्यवस्थायांजातायामंतर्दशापाकग्रहज्ञानंवसंततिलकेनाह॥एकर्क्षगो-र्द्धमिति।दशापतिनासहैकर्क्षगोग्रहः एकस्मिन्राशौव्यवस्थितः दशापतिदत्तांतर्द-शाकालस्ययदर्द्धंतदपहृत्यस्वैरात्मीयैर्दशागुणैःपरिपाचयति ।त्र्यंशमिति । त्र्यंशं त्रिकोणगृहगःदशापतेस्त्रिकोणगृहगोनवपंचमस्थानयोरन्यतमस्थितोदशापति-र्दत्तांतर्दशाकालात्त्र्यंशंतृतीयभागमपहृत्यस्वैरात्मीयैर्दशागुणैः परिपाचयति ॥ स्मरगः स्मरांशमिति । दशापतेः स्मरगः सप्तमस्थानस्थः दशापतिदत्तांतर्दशा-कालात्स्वरांशंसप्तमभागमपहृत्यस्वैर्दशागुणैः परिपाचयति।पादंफलस्येति।चतु-रस्रगतः दशापतेः चतुरस्रगोष्टमचतुर्थस्थानस्थोदशापतिदत्तांतर्दशाकालात्पादं चतुर्थभागमपहृत्यस्वैर्दशागुणैः परिपाचयति सहोराः होरालग्नंतयासहिताःप-रस्परमन्योन्यमनेन प्रकारेणव्यवस्थिताः स्वैः स्वैर्दशागुणैः परिपाचयति ।एत-दुक्तंभवति।यथादशापतेः सकाशादेकर्क्षादिस्थोग्रहोयथास्वंपठितमंशंपरिपाच-यति तथालग्नमपिपाचयति । अत्रदशापतेः प्रथममंशपरिकल्पनांकृत्वापश्चादे-कर्क्षादिस्थितानांकर्तव्याः यस्माद्दशापतेर्योभागआगच्छतितदनुसारेणार्द्धादयो भागाः परिशेषाणांभवंति अथैकस्मिन्स्थानेयदाबहवोग्रहाभवंतितदातेषांमध्ये योबलवान्सएवैकः परिपाचयति नान्ये। कथमेतदवगम्यते । उच्यते।एकवचन-निर्देशात् एकर्क्षगोर्धमपहृत्यददातितुस्वमित्याद्येकवचनात् । नकेवलंमिहिरा-चार्येणैकवचननिर्देशः कृतोयावत्स्वल्पजातकेपि तथाचोक्तम् ॥ एकर्क्षगोर्द्धंत्र्यंशं त्रिकोणयोः सप्तमेतुसप्तांशम् । चतुरस्रयोस्तुपादंपाचयतिगतोग्रहः स्वगुणैरिति॥ नकेवलंयावद्वर्गादीनामप्येकवचननिर्देशोस्ति । तथाचभगवान्गार्गिः ॥ एक-र्क्षसंस्थितश्चार्द्धंत्रिभागंतुत्रिकोणगः । सप्तमस्थः स्वरांशंतुपादंतुचतुरस्रगः ॥

लग्नेनसहिताःसर्वेह्यन्योन्यंफलदायकाः॥ यवनेश्वरश्चाप्येवम्॥कालोर्धभागैक-
गृहाश्रितस्यतदर्धभागंलभतेचतुर्थे । त्रिभागभागीचत्रिकोणसंस्थस्तदर्धभा-
क्स्याच्चपृथक्त्रिकोणे॥ स्यात्सप्तमेसप्तमभागभागीस्थितोग्रहश्चारवशाद्ग्रहस्य॥ए-
वंसर्वत्रैकवचननिर्देशः। तस्मादेवंज्ञायते। यतएकएवांशहारोभवतिनसर्वइति।
तथाचसत्यः॥अर्धंतृतीयमर्धात्तथार्द्धंस्वाच्चसप्तमंभागम्। एकर्क्षनवपंचमचतुर्थनि-
धनाद्यसप्तानाम्॥दद्युर्ग्रहाग्रहाणांस्वदशास्वंतर्दशाख्यानाम्।फलकालान्मिश्रवि-
विधंक्रमेणभेद्याश्चतेप्येवम्॥एकर्क्षगेषुबलवान्भागहारोमित्रतोरिपोर्वापि। मि-
त्रंचपुष्टफलंतस्मिन्कालेरिपुर्नैवम्॥तथाचयमः॥ एकर्क्षोपगतानांयोभवतिबला-
धिकोविशेषेण। एकःसएवहर्तानान्येतत्रस्थिताविहगाइति॥ लग्नेपियत्रांशाप-
हारित्वंप्राप्तंतत्रचलग्नेयदाग्रहः स्थितोभवति तदालग्नग्रहयोर्योबलवान्सएवै-
कः पठितमंशमपहरति नेतरइति। अन्येसर्वेषामेकादिराशिगानामंतर्दशा-
भागमिच्छंति। अन्येपुनः एकमेवभागंगृहीत्वा तद्भागस्यैकर्क्षगानांभागीकृ-
त्यतद्भागमिच्छंति॥ ३॥

**स्थानान्यथैतानिसवर्णयित्वासर्वाण्यधश्छेदविवर्जितानि॥**
**दशाब्दपिंडेगुणकायथांशंछेदस्तदैक्येनदशाप्रभेदः॥ ४॥**

अथदशापरिकल्पनाज्ञानमिंद्रवज्रयाह॥ स्थानानीति। अर्द्धादिकाभागाः
स्थानशब्देनोच्यंते तेषामर्द्धादिकानांभागानांसवर्णनाकार्या सवर्णनासदृश-
च्छेदनासादृश्यमुत्पाद्यततस्तानिसर्वाणिस्थानानि अधश्छेदैः विवर्जितानि
कार्याणि छेदानपास्यइत्यर्थः। उपरिस्थिताराशयोयथासंभवंप्रत्यंशंगुण-
काराभवंति। छेदस्तदैक्येनतेषांराशीनामैक्येनसंयोगेनच्छेदोभागहारोभवति।
कस्मिन्गुणकाराभागहाराइत्याह। दशाब्दपिंडेदशावर्षसमूहे।तेनैतदुक्तंभवति।
दशाब्दान् पृथक्पृथग्गुणकारैः संगुण्यछेदेनविभज्यावाप्तंवर्षाद्यंतर्दशाभ
वति। तद्यथोदाहरणम्। दशापतिनैवकेवलंकश्चिद्ग्रहः स्थितः अन्यस्था-
नेपुनकश्चित्स्थितस्तदासएवापहारी तत्रदशापतेः रूपस्यैकस्यैवाधोरूप-
मेकंन्यसेत् एवमर्द्धहारस्यरूपस्याधोरूपद्वयंन्यासः १।१ २ अत्रपरस्परच्छेदगु-
णावेतौराशीकर्त्तव्यौकृतौ २।१ २ एतौसमच्छेदिभूतौछेदहीनौ २। १ एतौगु-
णकारौअनयोर्योगःजातो ३ एषभागहारः। अत्रदशापतिदत्तायुर्दायः ३।०।०।०
एतद्द्वाभ्यांसंगुण्य त्रिभिर्विभज्यावाप्तंफलम्२इयंमूलदशापतेरंतर्दशा। अथपुनरे-
वमूलदशापतिवर्षाणि३व.०मा.०दि.०घ.० एकेनसंगुण्यत्रिभिर्विभज्यावाप्तंफलं
वर्षादि १व.०मा.०दि.०घ.इयंदशापतिनासहैकराशिन्यवस्थितस्यांतर्दशा एवं
मूलदशापतिदत्तांतर्दशाकालएकराशिगेनग्रहेणार्द्धंपाचितोभवति अस्यांतर्द-

शाकालद्वयस्ययोगोवर्षादिः ३।०।०।० जातासैवमूलदशेति । अथदशापतेः नवपंचमस्थानयोरेकस्मिन्स्थानेकश्चिद्ग्रहःस्थितोभवति नद्वितीयेनचदशापतिनासहनचतुरस्रयोः नचसप्तमे तदान्यासः $\frac{1}{1}\frac{1}{3}$ एतौपरस्परच्छेदहतौ $\frac{3}{3}\frac{1}{3}$ छेदेन हीनौ ३।१ एतौगुणकारौएकीकृतौ ४ एषभागहारः मूलदशापतेः दायः ४।०।०।०अस्यत्रिगुणस्यचतुर्भिर्भागमपहृत्यावाप्तम् ३।०।०।० अयंमूलदशापतेरंतर्दशाकालः।अथमूलदशापतिदायस्यास्य ४।०।०।० एकगुणस्यचतुर्भिर्भागमपहृत्यावाप्तम् १।० । ० । ० एषात्रिकोणस्थस्यांतर्दशेति। एवंमूलदशापतिदत्तांतर्दशाकालंत्रिकोणस्थेनग्रहेणत्रिभागमपहृत्यपाचितंभवति अस्यांतर्दशाकालद्वयस्ययोगः जातः ४।०।०।० सैवमूलदशेति । अथदशापतेश्चतुर्थाष्टमयोरेकस्मिन्स्थानेकश्चिद्ग्रहोभवति नद्वितीये नचदशापतिनासहनत्रिकोणयोःनसप्तमे तदान्यासः $\frac{1}{1}$।$\frac{1}{4}$। परस्परच्छेदहतौ $\frac{4}{4}$।$\frac{1}{4}$ छेदहीनौ ४।१ एतौगुणकारौएकीकृतौ५एषभागहारःमूलदशापतेःदायः५।०।०।०अस्यचतुर्गुणस्य२०।०।०।०पंचभिर्भागमपहृत्यावाप्तम् ४।०।०।० अयंमूलदशापतेरंतर्दशाकालः अथमूलदशापतिदायस्यास्य ५।०।०।० एकगुणस्यपंचभिर्भागमपहृत्यावाप्तम् १।०।०।० एषा चतुरस्रस्थस्यांतर्दशेति । एवंमूलदशापतिदत्तांतर्दशाकालाच्चतुरस्रस्थेनपादमपहृतंभवति । अस्यांतर्दशाकालद्वयस्ययोगः ५।०।०।० जातासैवमूलदशेति । अथदशापतेःसप्तमेस्थानेकश्चिद्ग्रहोभवति नदशापतिनासहनत्रिकोणेनचतुरस्रयोस्तदान्यासः $\frac{1}{1}$।$\frac{1}{7}$ परस्परच्छेदहतावेतौ $\frac{7}{7}$ । $\frac{1}{7}$ । छेदहीनौ ७ । १ । एतौगुणकारौएकीकृतौ ८ एषभागहारः दशापतेः दायः ८ । ० । ० । ० अस्यसप्तगुणस्या ५।६ ष्टभिः भागमपहृत्यावाप्तंवर्षादिः ७ । ० । ० । ० इयंमूलदशापतेरंतर्दशा पुनरपिमूलदशापतेः दायः ८ । ० । ० । ० अस्यैकगुणस्याष्टभिः भागमपहृत्यावाप्तम् १ । ० । ० । ० इयंमूलदशापतेः सप्तमस्थानस्थस्यांतर्दशा एवंमूलदशापत्यंतर्दशाकालात्सप्तमोभागः सप्तमस्थेनग्रहेणपाचितोभवति अस्यांतर्दशाकालद्वयस्थयोगः ८ । ० । ० । ० जातासैवमूलदशेति एवमेकस्मिन्दशाविकल्पाः अत्रादौमूलदशापतेरंतर्दशाभवति तदनंतरमंशहरस्य। अथदशापतिनासहैकस्मिन्राशौकश्चिद्ग्रहोभवत्यपरश्चनवमपंचमयोर्मध्यादेकस्मिन्भवतिनाद्वितीयेनान्येषुस्थानेषुनचतुरस्रयोः नसप्तमेतदान्यासः $\frac{1}{1}$ । $\frac{1}{2}$ । $\frac{1}{3}$ । एतेराशयः परस्परच्छेदहताजाताः $\frac{6}{6}$ । $\frac{3}{6}$ । $\frac{1}{6}$ छेदहीनाः ६ । ३ । २ एतेगुणकाराः एकीकृताः ११ एषभागहारः । अथदशापतिदायः ११ । ० । ० । ० अस्यषड्गुणस्यैकादशभिः भागमपहृत्यावाप्तम् ६ । ० । ० । ० एवंमूलदशापतेरंतर्दशा पुनरपिमूलदशापतिदायस्यास्य ११ । ० । ० । ० त्रिगुणस्यैकादशभिः भागमपहृत्यावाप्तम्

३ । ० । ० । ० इयमर्द्धपाचकस्यांतर्दशा पुनरपिमूलदशापतिदायस्यास्य ११ । ० । ० । ० द्विगुणस्यैकादशभिः भागमपहृत्यावाप्तम् २ । ० । ० । ० इयंत्रिकोणावस्थितस्यांतर्दशा अत्रदशापतेः यदर्द्धंतदेकगृहावस्थितः पाचयतित्रिभागंचत्रिकोणगः अंतर्दशात्रयस्यास्ययोगः ११ । ० । ० । ० जातासैवमूलदशेति । अथदशापतिनासहैकस्मिन्राशौकश्चिद्भवत्यपरश्चतुरस्रयोः मध्यादेकस्मिन्नद्वितीयेनचान्येपुस्थानेपुनत्रिकोणयोः नसप्तमेतदान्यासः । १/१ । १/२ । १/४ एतेपरस्परच्छेदहताजाताः ८/८ । ४/८ । २/८ छेदहीनाः ८ । ४ । २ एतेगुणकाराः एकीकृताः १४ एषभागहारः।अथदशापतिदायस्यास्य१४ । ० । ० । ० अष्टगुणस्यचतुर्दशभिः भागमपहृत्यावाप्तम् ८ । ० । ० । ० इयं मूलदशापतेरंतर्दशा पुनरपिमूलदशापतिदायस्यास्य १४ । ० । ० । ० चतुर्गुणस्यचतुर्दशभिः भागमपहृत्यावाप्तम् ४ । ० । ० । ० इयमर्द्धपाचकस्यांतर्दशा पुनरपिमूलदशापतिदायस्यास्य १४ । ० । ० । ० द्विगुणस्यचतुर्दशभिः भागमपहृत्यावाप्तम् २ । ० । ० । ० इयंचतुर्थभागपाचकस्यांतर्दशा अत्रदशापतेः यदर्द्धंतदेकगृहावस्थितः पाचयति चतुर्भागंचतुरस्रगतः अंतर्दशात्रयस्यास्ययोगः १४ । ० । ० । ० जातासैवमूलदशेति । अथयत्रदशापतिनासहैकस्मिन्राशौकश्चिद्भवत्यपरश्चसप्तमेनान्येपुस्थानेपुतदान्यासः १/१ । १/२ । १/७ एतेपरस्परच्छेदहताजाताः १४/१४ । ७/१४ । २/१४ छेदहीनाः १४ । ७ । २ एतेगुणकाराः एकीकृताः २३ एषभागहारः । अथदशापतिदायस्यास्य २३ । ० । ० । ० चतुर्दशगुणस्यत्रयोविंशत्याभागमपहृत्यावाप्तम् १४। ० । ०।० इयंमूलदशापतेरंतर्दशा पुनरपि मूलदशापतिदायस्यास्य२३। ० । ० । ० सप्तगुणस्यत्रयोविंशत्याभागमपहृत्यावाप्तम् ७ । ० । ० । ० इयंपाचकस्थेनसहावस्थस्यांतर्दशा पुनरपिमूलदशापतिदायस्यास्य २३ । ० । ० । ० द्विगुणस्य त्रयोविंशत्याभागमपहृत्यावाप्तम् २ । ० । ० ।० इयंसप्तमभागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगो जातः २३ । ० । ० । ० सैवमूलदशेति । अथ दशापतेस्त्रिकोणयोरपिग्रहोव्यवस्थितः नान्येपुस्थानेपुतदान्यासः

| | | |
|---|---|---|
| १ | १ | १ |
| १ | ३ | ३ |

एतेराशयः परस्परच्छेदहताजाताः

| | | |
|---|---|---|
| ९ | ३ | ३ |
| ९ | ९ | ९ |

छेदहीनाः ९ । ३ । ३ एतेगुणकाराः एकीकृताः १५ एषभागहारः दशापतिदायस्यास्य ५ । ० । ० । ० नवगुणस्यपंचदशभिः भागमपहृत्यावाप्तम् ३।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिमूलदशापतिदायस्यास्य ५ । ० । ० । ० त्रिगुणस्य १५ । ० । ० । ० पंचदशभिः भागमपहृत्यावाप्तम् १ । ० । ० । ० इयंत्रिकोणस्थस्यांतर्दशाद्वितीयस्यैवैव अस्यांतर्दशात्रयस्ययोगः ५ । ० । ० । ० जातासैवमूलदशेति । अथदशापतेस्त्रिकोणयोः मध्यादेकस्मिन्कश्चिद्ग्रहोव्यव-

स्थितः चतुरस्रयोः मध्यादेकस्मिन्नपिनान्येषुस्थानेषुतदान्यासः

| | | |
|---|---|---|
| १ | १ | १ |
| १ | ३ | ४ |

एतेपरस्परच्छेदहताजाताः

| | | |
|---|---|---|
| १२ | ४ | ३ |
| १२ | १२ | १२ |

छेदहीनाः १२ । ४ । ३ एते-गुणकाराः एकीकृताः १९ एषभागहारः अथदशापतिदायस्यास्य १९। ०।०।० द्वादशगुणस्यैकोनविंशत्याभागमपहृत्यावाप्तम् १२।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिदशापतिदायस्यास्य १९।०।०।० चतुर्गुणस्यैकोनविंशत्याभागमपहृत्यावाप्तम् ४।०।०।० इयंत्रिकोणभागपाचकस्यांतर्दशा पुनरपिदशापतिदायस्यास्य १९।०।०।० त्रिगुणस्यैकोनविंशत्याभागमपहृत्यावाप्तम् ३।०।०।० इयंचतुर्भागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगः १९।०।०।० जातासैवमूलदशेति।अथयत्रदशापतेस्त्रिकोणयोर्मध्यादेकस्मिन्स्थानेकश्चिद्ग्रहोऽन्यः सप्तमेतदान्यासः

| | | |
|---|---|---|
| १ | १ | १ |
| १ | ३ | ७ |

एते राशयः परस्परच्छेदहताजाताः

| | | |
|---|---|---|
| २१ | ७ | ३ |
| २१ | २१ | २१ |

छेदहीनाः २१ । ७। ३ एतेगुणकाराः एकीकृताः३१ एषभागहारः दशापतिदायस्यास्य ३१।०।०।० एकविंशत्यासंगुणितस्यैकत्रिंशताभागमपहृत्यावाप्तम् २१।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिदशावर्षाणि ३१।०।०।० सप्तभिः संगुण्यैकत्रिंशताभागमपहृत्यावाप्तम् ७।०।०।० इयंत्रिभागपाचकस्यांतर्दशा पुनरपिदशावर्षाणि ३१।०।०।० त्रिभिःसंगुण्यैकत्रिंशताभागमपहृत्यावाप्तम् ३।०।०।० इयंसप्तमभागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगः ३१।०।०।० जातासैवमूलदशेति यत्रदशापतेः चतुरस्रयोः द्वयोरेवग्रहौस्थितौनान्यत्रतदान्यासः

| | | |
|---|---|---|
| १ | १ | १ |
| १ | ४ | ४ |

एतेराशयः परस्परच्छेदहताजाताः

| | | |
|---|---|---|
| १६ | ४ | ४ |
| १६ | १६ | १६ |

छेदहीनाः १६ । ४ । ४ एतेगुणकाराएकीकृताः २४ एषभागहारः मूलदशापतिवर्षाण्येतानि ६। ०।०।० षोडशभिःसंगुण्य ९६।०।०।० चतुर्विंशत्या २४ भागमपहृत्यावाप्तम् ४।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिदशापतेः दायस्यास्य ६।०।०।० चतुर्गुणस्यचतुर्विंशत्याभागमपहृत्यावाप्तम् १।०।०।० इयंचतुर्थभागपाचकस्यांतर्दशा द्वितीयस्याप्येषैव अस्यांतर्दशात्रयस्ययोगः ६।०।०।० सैवमूलदशेति। अथयत्रदशापतेश्चतुरस्रयोः मध्यादेकस्मिन्कश्चिद्ग्रहोभवतिसप्तमेन्यस्तदान्यासः

| | | |
|---|---|---|
| १ | १ | १ |
| १ | ४ | ७ |

एतेराशयः परस्परच्छेदहताजाताः

| | | |
|---|---|---|
| २८ | ७ | ४ |
| २८ | २८ | २८ |

छेदहीनाः २८ । ७। ४ एतेगुणकाराः एकीकृताः ३९ एषभागहारः । अथमूलदशापतिवर्षाणि ३६।०।०।० एतान्यष्टाविंशत्यासंगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम् २५।१०।४।३६ इयंमूलदशापतेरंतर्दशा पुनरपिदशावर्षाणि ३६ सप्तभिः संगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम् ६।५।१६।९ इयंच-

तर्भागपाचकस्यांतर्दशापुनरपिदशावर्षाणि ३६ चतुर्भिः संगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम् ३।८।९।१५ इयंसप्तमभागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगः ३६।०।०।० जातासैवमूलदशेति । एवंत्रिविकल्पाः । अथयत्रदशापतिनासहैकराशौकश्चिद्व्यवस्थितोद्वयोरपित्रिकोणयोः तदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ३ | ३ |

एतेराशयः परस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| १८ | ९ | ६ | ६ |
| १८ | १८ | १८ | १८ |

छेदहीनाः १८।९।६।६ एतेगुणकाराः एकीकृताः ३९ एषभागहारः । अथमूलदशापतिवर्षाणि १३।०।०।० अतःप्राग्वदंतर्दशान्यासः

| | | | |
|---|---|---|---|
| ६ | ३ | २ | २ |
| ० | ० | ० | ० |
| ० | ० | ० | ० |
| ० | ० | ० | ० |

अस्यांतर्दशाचतुष्टयस्ययोगः १३।०।०।० जातासैवमूलदशेति । अथ यत्रदशापतिनासहैकराशौकश्चिद्व्यवस्थितः त्रिकोणयोर्मध्यादेकस्मिन्काश्चिद्द्व्यवस्थितश्चतुरस्रयोर्मध्यादेकस्मिन्नेव नान्यत्रतदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ३ | ४ |

एतेराशयःपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| २४ | १२ | ८ | ६ |
| २४ | २४ | २४ | २४ |

छेदहीनाः २४।१२।८।६ एतेगुणकाराःएकीकृताः ५० एष भागहारः मूलदशा ३६।०।० । ० अतःप्राग्वच्चतस्रोंतर्दशाः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १७ | ३ | १० | ४८ | ८ | ७ | २० | २४ | ५ | ९ | ३ | ३६ | ४ | ३ | २५ | १२ |

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।० । ० जातासैवमूलदशेति । अथदशापतिनासहैकस्मिन्राशौकश्चिद्व्यवस्थितस्त्रिकोणयोः मध्यादेकस्मिन्नन्यःसप्तमेव्यवस्थितोनान्यत्र तदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ३ | ७ |

एतेराशयःपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ४२ | २१ | १४ | ६ |
| ४२ | ४२ | ४२ | ४२ |

छेदहीनाः ४२।२१।१४।६ एतेगुणकाराःएकीकृताः ८३एषभागहारः मूलदशावर्षाणि १६।०।०।० अतः प्राग्वच्चतस्रोंतर्दशाः आनीताः

| | | | |
|---|---|---|---|
| ८ | ४ | २ | १ |
| १ | ० | ८ | २ |
| ४ | १७ | ११ | २६ |
| ४२ | २१ | ३४ | २३ |

अस्यांतर्दशाचतुष्टयस्ययोगः १६।०।०।० जातासैवमूलदशेति अथदशापतिनासहैकस्मिन्राशौकश्चिद्व्यवस्थितः अन्यौद्वयोश्चतुरस्रयोस्तत्र न्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ४ | ४ |

एतेपरस्परच्छेदहताः

| | | | |
|---|---|---|---|
| ३२ | १६ | ८ | ८ |
| ३२ | ३२ | ३२ | ३२ |

छेदहीनाः ३२।१६।८।८ एतेगुणकाराःएकीकृताः ६४ एष भागहारः मूलदशा ३६।०।०।० अतःप्राग्वच्चतस्रोंतर्दशाः

| | | | |
|---|---|---|---|
| १८ | ९ | ४ | ४ |
| ० | ० | | |
| ० | ० | ६ | ६ |
| ० | ० | | |

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति अथयत्रदशापतिनासहैकस्मिन्राशौकश्चिद्व्यवस्थितोन्यश्चतुरस्रयोः मध्यादेकस्मिन्नन्यः सप्तमेतदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ४ | ७ |

एतेपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ५६ | २८ | १४ | ८ |
| ५६ | ५६ | ५६ | ५६ |

छेदहीनाः ५६।२८।१४।८ एतेगुणकाराः एकीकृताः १०६ एषभागहारःमूलदशा ३६।०।०।० अतः प्राग्वच्चतस्रोंतर्दशाः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १९ | ० | ६ | ४८ | ९ | ६ | ३ | २४ | ४ | ९ | १ | ४२ | २ | ८ | १८ | ६ |

अस्यांतर्दशाचतुष्टयस्ययोगः जातासैवमूलदशेति ३६।०।०।०। अथयत्रत्रिको-

णयोः द्वयोःकश्चिद्ग्रहःस्थितः चतुरस्रयोः मध्यादेकस्मिंस्तदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ३ | ३ | ४ |

एतेपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ३६ | १२ | १२ | ९ |
| ३६ | ३६ | ३६ | ३६ |

छेदहीनाः ३६।१२। १२।९ एतेगुणकाराःएकीकृताः ६९ एषभागहारःमूलदशा २३।०।०।० अतःप्राग्वच्चतस्रोंतर्दशाः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | ० | ० | ० | ४ | ० | ० | ० | ४ | ० | ० | ० | ३ | ० | ० | ० |

अस्यांतर्दशाचतुष्टयस्ययोगोजातः२३।०।०।० सैवमूलदशेति। अथयत्रदशापतेस्त्रिकोणयोर्मध्यादेकस्मिन्स्थितः कश्चिद्द्वयोश्चतुरस्रयोश्चतदान्यासः

| | | | |
|---|---|---|---|
| | | | १ |
| १ | ३ | ४ | ४ |

एतेपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ४८ | १६ | १२ | १२ |
| ४८ | ४८ | ४८ | ४८ |

छेदहीनाः ४८।१६ १२।१२ एतेगुणकाराःएकीकृताः ८८ एषभागहारः मूलदशा २२।०।०।० अतःप्राग्वच्चतस्रोंतर्दशाः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | ० | ० | ० | ४ | ० | ० | ० | ३ | ० | ० | ० | ३ | ० | ० | ० |

अस्यांतर्दशाचतुष्टयस्ययोगः जातासैव २२।०।०।० मूलदशेति। अथयत्रदशापतेस्त्रिकोणयोर्मध्यादेकस्मिन्कश्चित्स्थितः चतुरस्रयोरप्येकस्मिन्सप्तमेचकश्चित्स्थितस्तदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ३ | ४ | ७ |

एतेराशयःपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ८४ | २८ | २१ | १२ |
| ८४ | ८४ | ८४ | ८४ |

छेदहीनाः ८४।२८।२१।१२ एतेगुणकाराः एकीकृताः १४५ एषभागहारः मूलदशा ३६।०।०।० अतःप्राग्वच्चतस्रोंतर्दशाः

| | | | |
|---|---|---|---|
| २० | ६ | ५ | २॥ |
| १० | ११ | २ | ११ |
| ७ | १२ | १६ | २२ |
| ५१ | ३८ | ५८ | ३३ |

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति। अथयत्रदशापतेश्चतुरस्रयोः द्वयोरपिग्रहःस्थितः सप्तमेचतदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ४ | ४ | ७ |

एतेपरस्परच्छेदहताजाताः

| | | | |
|---|---|---|---|
| ११२ | २८ | २८ | १६ |
| ११२ | ११२ | ११२ | ११२ |

छेदहीनाः ११२। २८।२८।१६एतेगुणकाराः एकीकृताः १८४ एषभागहारः मूलदशा ३६।०।०।० अतः प्राग्वच्चतस्रोंतर्दशाः

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २१ | १० | २८ | ४२ | ५ | ५ | २२ | १० | ५ | ५ | २२ | १० | ३ | १ | १६ | १८ |

अस्यांतर्दशाचतुष्टयस्ययोगः३६।०।०।०जातासैवमूलदशेतिएवंचतुर्विकल्पाः।अथपंचविकल्पेषुन्यासादेवग्रहावस्थानं बोद्धव्यम्।न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ३ | ४ |

छेदेनानेन२४ हताजाताःगुणकाराः २४ । १२ ।८। ८।६। भागहारः ५८ न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ३ | ७ |

छेदेनानेनगुणकाराः ४२ । २१ । १४ । १४ । ६ भागहारः ९७ न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ४ | ४ |

छेदेनानेन २४ गुणकाराः २४ । १२ । ८ । ६ । ६ भागहारः ५६ न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ४ | ४ | ७ |

छेदेनानेन ५६ गुणकाराः ५६ । २८ । १४ । १४ । ८ भागहारः१२०न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | २ | ३ | ४ | ७ |

छेदेनानेन ८४ गुणकाराः ८४।४२।२८।२१।१२ भागहारः १८७ न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | ३ | ३ | ४ | ४ |

छेदेनानेन १४४ गुणकाराः १४४।४८।४८।३६।३६ भागहारः ३१२ न्यासः

| | | | | |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| १ | ३ | ३ | ४ | ७ |

छेदेनानेन ८४ गुणकाराः ८४।२८।२८।२१।१२ भागहारः १७३ एवंपंचविकल्पाः। अथषड्विकल्पाः।न्यासः

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ३ | ४ | ७ |

छेदेनानेन २५२ गुणकाराः २५२।१२६।८४।८४। ६३।३६ भागहारः ६४५ न्यासः

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ४ | ४ | ७ |

छेदेनानेन १६८ गुणकाराः १६८।८४।५६।४२।४२।२४ भागहारः ४१६ न्यासः

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ३ | ४ | ४ |

छेदेनानेन ९६ गुणकाराः ९६।४८।३२ ३२।२४।२४ भागहारः २५६ न्यासः

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| १ | ३ | ३ | ४ | ४ | ७ |

छेदेनानेन ८४ गुणकाराः ८४।२८।२८।२१।२१।१२ भागहारः १९४ इतिजाताः षड्विकल्पाश्चत्वारः। अथसप्तविकल्पाः। न्यासः

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ३ | ४ | ४ | ७ |

छेदेनानेन १६८ गुणकाराः १६८।८४।५६ ५६।४२ ४२।२४ भागहारः ४७२ एवंयावंतोदायहाराभवंति तावदेवतत्कर्मउपपद्यते । यावंतोनभवंतितावत्कर्मनोपपद्यतइति। एकविकल्पोनास्ति द्विविकल्पाश्चत्वारः४ त्रिविकल्पाः ७ सप्त चतुर्विकल्पानव९ पंचविकल्पाःसप्त ७ षड्विकल्पाश्चत्वारः ४ सप्तविकल्पएकः । एवंद्वात्रिंशद्विकल्पाः ३२ ॥ यत्रबहवःपाचकाभवंतितत्रप्रथमंमूलदशापतिरेवांतर्दशापाचको भवति । ततःपरंयएवदशाविभागक्रमः सएवांतर्दशाविभागक्रमः। यस्यादौदशापाचकत्वंतस्यैवांतर्दशापाचकत्वम्। यस्यपश्चात्तस्यपश्चादिति दशाक्रमपाचनेयस्यांतर्दशापाचकत्वंनप्राप्तंतस्यनवक्तव्यम्।तदनंतरंयस्यप्राप्तंतस्यैववक्तव्यम्। अत्रान्येमूलदशापतेरंतर्दशांदत्वाततःपरमेकर्क्षगस्यददाति । ततस्त्रिकोणगतस्यततश्चतुरस्रगतस्यततःसप्तमगस्य । त्रिकोणचतुरस्रयोर्यदाग्रहौतदातयोर्बलाधिकस्तस्यादौतच्चायुक्तम् । यस्माद्भगवान्गार्गिः । आदावंतर्दशापाकोभवत्येवदशापतेः । ततःपरंतुवक्तव्यंदशापाकक्रमेणतु ॥ ४ ॥

सम्यग्बलिनःस्वतुंगभागेसंपूर्णाबलवर्जितस्यरिक्ता ॥
नीचांशगतस्यशत्रुभागेज्ञेयानिष्टफलादशाप्रसूतौ ॥ ५ ॥

एवंदशांतर्दशाविभागेज्ञाते कस्यसंबंधिनीदशांतर्दशावाशुभफलाभवति कस्याशुभफलेत्येतन्नज्ञायते ।तदर्थंदशादेःस्वफलानुरूपाःसंज्ञावैतालीयेनाह॥ सम्यग्बलिनइति । प्रसूतौपुरुषस्यजन्मकालेयोग्रहःसम्यग्बलवान्भवति । पूर्वोक्तैर्बलैःसर्वैर्युक्तोभवति तत्संबंधिनीसंपूर्णानाम्नीदशाभवतिनकेवलंयावत्स्वतुंगभागेऽवस्थितस्यपरमोच्चभागगतस्यैवसंपूर्णानाम्नीदशाभवति । सम्यग्बलिनइत्युक्त्वा पुनःस्वतुंगभागइत्यनेनैतज्ज्ञापयति । यथापरमोच्चगतोग्रहोऽन्यैःबलकारणैर्युक्तोनभवति । तथापितस्यसंबंधिनीदशासंपूर्णैव । संपूर्णायांदशाया-

मंतर्दशायांचकालेशरीरारोग्यधनवृद्धिभिःपुरुषोभिवर्द्धते । अथसमस्तबलैर्युक्तोनभवतिकिंचिदूनबलस्तदातस्यसंपूर्णनाम्नीदशाभवति । अथपरमोच्चगतोनभवति केवलमेवोच्चराशिगतोभवति तदातस्यदशापूर्णैवभवति । पूर्णायांचदशायांकालेधनलाभमवाप्नोति । तत्रारोग्यम् । बलवर्जितस्यग्रहस्यरिक्तानाम्नीदशाभवति । यश्चनीचराशौस्थितस्तस्यरिक्तैवरिक्तादशाकालेंतर्दशाकालेधनहानिमवाप्नोति । नीचांशगतस्येतिनीचांशेनीचराशिनवभागेयोग्रहोगतः । स्थितोभवति । यश्वशत्रुभागेशत्रुनवांशेचस्थितस्तस्यदशानिष्टफलाज्ञेयाज्ञातव्या । अनिष्टफलदशांतर्दशाकालेधनहानिमनारोग्यंचप्राप्नोति । अत्रचभगवान्गार्गिः ॥ सर्वैर्बलैरुपेतस्यपरमोच्चगतस्यच । संपूर्णाख्यादशाज्ञेयाधनारोग्यविवर्धिनी । सर्वैर्बलैर्विहीनस्यनीचराशिगतस्यच । रिक्तानामदशाज्ञेयाधनारोग्यविनाशिनी । स्वोच्चराशिगतस्याथकिंचिद्बलयुतस्यच । पूर्णानामदशाज्ञेयाधनवृद्धिकरीशुभा । यःस्यात्परमनीचस्थस्तथाचारिनवांशके । तस्यानिष्टफलानामव्याध्यनर्थविवर्द्धिनी ॥ ५ ॥

भ्रष्टस्यतुंगादवरोहिसंज्ञामध्याभवेत्सासुहृदुच्चभागे ॥
आरोहिणीनिम्नपरिच्युतस्यनीचारिभांशेष्वधमाभवेत्सा ॥ ६ ॥

अथदशांतर्दशासंज्ञाःपुनरपींद्रवज्रयाह ॥ भ्रष्टस्येति । तुंगात्परमोच्चाद्भ्रष्टस्यच्युतस्यावरोहिसंज्ञा । अवरोहिणीनाम्नीदशाज्ञेया । दशापरमोच्चभागादारभ्ययावत्परमनीचभागादि अत्रांतरेयद्राशिषट्कंतत्रावस्थितेनग्रहेणयादत्तादशांतर्दशावासावरोहिणिसंज्ञाभवति । यस्मात्परमोच्चाद्भ्रष्टःप्रत्यहमधोवतरतीति विकल्प्यते । यावत्परमनीचमिति । अवरोहिसंज्ञादशाऽधमफलाभवति । यस्माद्वक्ष्यति । संज्ञानुरूपाणिफलान्यथैषामिति । मध्याभवेत्सासुहृदुच्चभागा इति । सैवावरोहिणी । यत्रतत्रराशौव्यवस्थितेनसुहृद्भागेनमित्रांशकस्थेनदत्तादशामध्यानाम्न्येवभवति । एवंयत्रतत्रराशौअर्थादेवस्वांशकस्थेनदशामध्यैव । एवंयत्रतत्रराशौस्वोच्चनवांशकस्थेनदशामध्यैव । आरोहिणीति । निम्नान्नीचात्परिच्युतस्यचलितस्यग्रहस्यारोहिणीनाम्नीदशाभवति । परमनीचांतर्भागादारभ्ययावत्परमोच्चभागादिरत्रांतरेयद्राशिषट्कं तत्रावस्थितेनग्रहेण यादत्तादशांतर्दशावासारोहिणीनाम्नीदशाभवति । यस्मात्परमनीचा द्भ्रष्टःप्रत्यहंतावदारोहतीतिग्रहःपरिकल्प्यते । यावत्परमोच्चमिति । आरोहिणीश्रेष्ठफलाभवति । नीचारिभांशइति । सैवारोहिणी । यत्रतत्रराशौस्वनीचराश्यंशोपगतेनदत्ताधमानाम्नीदशाभवति । एवंयत्रतत्रराशावरिभांशकस्थेन शत्रुनवांशकस्थेनदत्ताधमैवदशाभवति । पूर्वं शत्रुनवांशकस्थेनदत्तानिष्टफले-

त्युक्तमधुनासैवाधमेति । तत्किमेतदित्यत्रोच्यते । अवरोहिणिशत्रुनवांशकस्थेनदत्तापिअनिष्टफलाज्ञेया । आरोहिण्यधमा । अनयोःकःफलभेदः । अत्रोच्यते । अनिष्टफलाफलमशुभंप्रयच्छति । अधमाशुभमेवाल्पमिति । एवमवरोहिणीसंज्ञायदाधमसंज्ञाभवति तदासैवानिष्टफलसंज्ञांलभते । आरोहिणीयदामध्यसंज्ञाभवति तदासैवपूर्णेतिसंज्ञाज्ञेया । अत्रचभगवान्गार्गिः ॥ उच्चनीचांतरस्थस्यदशास्यादवरोहिणी । तस्यामल्पमवाप्नोतिफलंक्लेशाच्छुभं नरः ॥ मित्रोच्चात्मांशकस्थस्यमध्यामध्यफलातुसा । नीचोच्चमध्यगस्योक्ताश्रेष्ठाचारोहिणीदशा ॥ सैवाधमाख्याभवतिनीचराश्यंशगस्यतु । अवरोहिणी चेदधमाभवेत्कष्टफलातदा ॥ आरोहिणीमध्यफलासंपूर्णापरिकीर्त्तितेति॥ ६ ॥

**नीचारिभांशेसमवस्थितस्यशस्तेगृहेमिश्रफलाप्रदिष्टा ॥**
**संज्ञानुरूपाणिफलान्यथैषांदशासुवक्ष्यामियथोपयोगम् ॥७॥**

अथदशांतर्दशासंज्ञाःपुनरप्युपजातिकयाह ॥ नीचेति । शस्तानिगृहाणि स्वोच्चमूलत्रिकोणात्मक्षेत्रमित्रक्षेत्राणि तेष्ववस्थितेननीचराश्यंशकेरिभागे शत्रुनवांशकेसमवस्थितेनवाग्रहेणदत्तायादशांतर्दशावासामिश्रफलानाम्न्येव । मिश्रफलाशुभमशुभंचफलंप्रयच्छति । व्याधिसमेतमर्थागममेवमादिशेत् । अर्थादेवाशस्तराशिगेनअशस्ताअशस्ताःशत्रुनीचराशयः तत्स्थेनस्वोच्चमित्रमूलत्रिकोणात्मवर्गोत्तमनवांशकस्थेनापिदत्ता मिश्रफलैवभवति । संज्ञानुरूपाणिस्वनामसदृशानिफलानिस्वांतर्दशासुचज्ञेयानि । तद्यथा । संपूर्णात्यंतश्रेष्ठफलप्रदा पूर्णाश्रेष्ठफलदा अधमाशुभाल्पफलदा रिक्तार्थापहारिणी अनिष्टफलदात्यंतमशुभकारिणीमिश्रफलाशुभमशुभंचफलंप्रयच्छति । अथैषां दशास्थितिः । अथशब्दआनंतर्ये । एषामादित्यपूर्वाणांग्रहाणांदशासुयथोपयोगमुत्तरत्रवक्ष्यामि । यथायेनैवप्रकारेणैवयुज्यते । तथातत्कथयिष्यामि । कस्यां तर्दशायांकिंफलमुपयुज्यतइति ॥ ७ ॥

**उभयेधममध्यपूजिताद्रेष्काणैश्चरभेषुचोत्क्रमात् ॥**
**अशुभेष्टसमाःस्थिरेक्रमाद्धोरायाःपरिकल्पितादशा ॥ ८ ॥**

अथलग्नदशायां शुभाशुभज्ञानंवैतालीयेनाह॥उभयेति।उभयेद्विस्वभावेराशौ लग्नगतेद्रेष्काणक्रमेणाधममध्यपूजितादशाज्ञेयाः । प्रथमद्रेष्काणेजातस्याधमाऽशोभनानिष्टफला । द्वितीयेद्रेष्काणेमध्यमामिश्रफला । तृतीयेद्रेष्काणेपूजिता श्रेष्ठफला । चरभेचरराशावुत्क्रमेणवैपरीत्येनतेनप्रथमद्रेष्काणेजातस्यपूजिता द्वितीयेमध्यमा तृतीयेधमानिष्टफला । अशुभेष्टसमाः स्थिरेक्रमादिति ।

स्थिरेस्थिरराशौप्रथमद्रेष्काणेशुभा। द्वितीयेद्रेष्काणेइष्टाश्रेष्ठा । तृतीयेद्रेष्काणे समामध्यफला। एवंहोरायाः लग्नस्यदशाः परिकल्पिताउक्ताइति ॥ ८ ॥

एकंद्वौनवविंशतिर्धृतिकृतीपंचाशदेषांक्रमाच्चंद्रारेंदुजशुक्रजीवदिनकृद्दैवाकरीणांसमाः॥स्वैःस्वैःपुष्टफलानिसर्गजनितैःपक्तिर्दशायाःक्रमादंतेलग्नदशाशुभेतियवनानेच्छंतिकेचित्तथा ॥ ९ ॥

अथनैसर्गिकाणांग्रहाणांदशाकालंशार्दूलविक्रीडितेनाह ॥ एकमिति । एकाद्याःसमाः एकादीनिवर्षाणिचंद्रादीनांयथाभिहितानिनैसर्गिकाणि। तद्यथा। जन्मसमयादारभ्यैकाः समाः संवत्सराः। एकश्चंद्रस्य ततःपरंद्वावारस्यांगारकस्य। एवंत्रयः। ततःपरंनवेंदुजस्यबुधस्य । एवंद्वादश। ततः परंविंशतिः शुक्रस्य। एवंद्वात्रिंशत्। ततः परंधृतयोष्टादशजीवस्यगुरोः। एवंपंचाशत्। ततःपरंकृतिसंख्याविंशतिः दिनकृतः सूर्यस्य । एवंसप्ततिः। ततः परंपंचाशत् दैवाकरेःसौरस्य । एवंविंशत्यधिकंवर्षशतम् १२० एतेषुनिसर्गदशाधिपेषुग्रहेषुवलवत्सूपचयस्थितेषुचतद्दशासुशोभनानि दशाफलानिभवंति। हीनबलेष्वनुपचयस्थेष्वशोभनानि । एतच्चसर्वदाचिंत्यंयतोनिसर्गदशास्वितिसंवादइति । तथाचयवनेश्वरः ॥ स्तन्योपभोगः शशिनोवयः स्वंभौमस्यविद्याद्दशनानुजन्म। बौधंतुशिक्षापदकालमाहुरामैथुनेच्छाकुलितप्रवृत्ति ॥ शौक्रंयुवत्वंविधिपूर्वदृष्टमामध्यमाद्देवगुरोर्वदंति । रवेर्वयोर्द्धात्परमन्यदस्मात्सौरेर्जराद्दुर्भगकालमाहुरिति॥नैसर्गिकस्यदशाकालस्यप्रयोजनमाह॥ स्वैस्वैरिति । तत्रयस्यग्रहस्यसंबंधिनीपूर्वविधिनाकृतादशांतर्दशावासायदिनैसर्गिकसमाभिः निसर्गकथितवर्षैः स्वैः स्वैः आत्मीयैः युज्यते स्वदशाकालेनसमकालंभवति तदायावत्कालंतस्यदशायुक्ताभवति । निसर्गवर्षसमयंयदिप्राप्नोतीत्यर्थः । कालद्वयस्यैक्यमुद्वहाति । तदायावत्कालं तस्यसंबंधिनीदशांतर्दशाभवति । तस्याः पुष्टफलापक्तिः भवति । तस्याः पुष्टापरिपूर्णफलापक्तिः पाकोभवति । क्रमात्प्रतिपाद्यायावद्वर्ततेतावच्छुभफलेत्यर्थः। अत्रकेचिद्वदंति। पूर्वविधिनाजाताशुभातदाशुभफलमत्यर्थंप्रयच्छत्यन्यथाशुभातदाशुभमत्यर्थमिति। एतच्चायुक्तम्। यस्माद्यवनेश्वरः ॥ श्रेष्ठादशास्वे वयसिग्रहस्येति । तथाचसत्यः। एकाब्दिकः शशी द्व्यब्दिकः कुजो द्वादशाब्दिकः सौम्यः । द्वात्रिंशद्भृगुपुत्रोगुरुस्तुकथितः शतस्यार्द्धम् ५० सप्तत्यब्दः सूर्योविंशत्यधिकः शनैश्चरोब्दशतः । वयसोंतराणिचैषांस्वदशानैसर्गिकः कालः । स्वंस्वं वयसः सदृशंग्रहः समासाद्यदेहिनांकालम्। रक्षणपोषणचेष्टास्वभावदाः स्युर्यथासंख्यम् ॥ अथ

लग्नदशानैसर्गिककालंपुराणयवनमतेनाह॥अंतेलग्नदशेति । विंशत्यधिकाद्व-र्षशताद्ध्र्वंयदिकस्यचिदायुषः कालोभवति । तदासकालः सर्वएवल-ग्नस्यनैसर्गिकोभवति। तस्मिन्कालेपुराणयवनानांमतेनलग्नदशाशोभनाभवति। विंशत्यधिकाद्वर्षशताद्धूर्ध्वमित्येतत्कुतोवगम्यते।उच्यते।तदर्वाक्कालस्यान्यग्रहप-रिगृहीतत्वात् लग्नस्यानवकाशादेव । अथान्यः कश्चिदाह । यथाननुविंशत्य-धिकाद्वर्षशतादधिकंयस्यायुर्नास्ति । किंतस्यलग्ननैसर्गिकोदशाकालोनास्ति । उच्यते । नास्त्येवनकेवलंयावद्वर्षसप्ततेरभ्यधिकंयस्यायुर्नास्तितस्यशनैश्चरसं-बंधीनैसर्गिकोदशाकालोनास्ति । यस्यपंचाशतोधिकंनास्तितस्यादित्यस्यकि-मपिनास्ति । एवमन्येषामपियोज्यम् । ननुविंशत्यधिकंवर्षशतंपरमायुरतऊर्ध्वं जीविताभावात्कोलग्नस्यनैसर्गिकोदशाकालः । उच्यते । पूर्वमेवव्याख्या-तम् । यथाविंशत्यधिकंवर्षशतंपरमायुः । त्रैराशिकार्थमश्वादीनामायुर्ज्ञाना-र्थंप्रदर्शितम् । ततः तावत्प्रमाणादायुषः परंसंभवतीति । तथाच यदामीनलग्नेबलवतिमीनांशकांतेचकश्चिज्जातोभवति सर्वेचग्रहाः यत्रतत्र राशौमीनांशकावस्थिताभवंति । केचिदुच्चगताः । केचिच्चवक्रितास्तदामीनल-ग्नोद्वादशवर्षाणिददाति । सएवबलयुतस्तदान्यानिद्वादशवर्षाणिग्रहश्चैकैको मीनांशकांतस्थत्वाद्वादशवर्षाणिददाति । तानिचवक्रोच्चस्थत्वात्त्रिगुणानिषट्-त्रिंशद्भवंति । आदित्यवर्ज्यम् । आदित्यस्यमेषमध्यमांशकस्थितस्यसप्तविंशति-वर्षाणिभवंति । एवंचंद्रादीनांषण्णांशतद्वयंषोडशाधिकंभवति । आदित्यस्यसप्त-विंशतिः । लग्नस्यचतुर्विंशतिः एवमेकीकृतंशतद्वयंसप्तषष्ट्यधिकंभवति । नन्वे-तावत्प्रमाणंकालंकश्चिज्जीवमानोनदृश्यते योगस्यातिदुर्लभत्वात् । उच्यते । कश्चित्दृश्यतएवजंत्वादिकः । नेच्छंति केचित्तथेति । तांलग्नदशामंतेकेचि-दाचार्याः श्रुतकीर्तिप्रभृतयः तथातेनैवप्रकारेणशुभमितिनेच्छंति । नोवांछं-तीत्यर्थः । यस्मादबलत्वेलग्नस्यवयोंतेतदृशाभवति साशुभा । आचार्येणलग्न-दशायांशुभाशुभत्वंबलवशान्नोक्तम् द्रेष्काणवशादुक्तम्। उभयेधम मध्यमपूजिता इति । यस्माद्बलहीनस्यापिलग्नस्यवयोंतेदशाद्रेष्काणवशाच्छुभाभवतितस्मा-द्येआचार्याअंतेलग्नदशांनेच्छंति । तेनिष्कारणमेवनेच्छंति । ननुकिमागमग्रं-थानांकारणेन । उच्यते । यएवाचार्याअंतेलग्नदशांनेच्छंति। तएवागमांस्त्यक्त्वा यथादर्शितकारणमुपन्यस्यनेच्छंति।तेनकारणेनदोषउक्तः । तथाचश्रुतकीर्तिः॥ अंतेलग्नदशाशुभेतियवनानैतद्बहूनांमतं तस्मिन्हीनबलेयतोंत्यसमयेसास्याद-तोनेष्यते । एतच्छ्रुतकीर्तिनाकारणमुपन्यस्तंतच्चदृष्टमतेनैसर्गिकेलग्नदशाकालें-तर्दशाशुभैवेत्यवगंतव्यम् ॥ ९ ॥

पाकस्वामिनिलग्नगेसुहृदिवावर्गेस्थसौम्येपिवाप्रारब्धाशुभदाद-
शात्रिदशषड्लाभेषुवापाकपे॥ मित्रोच्चोपचयस्त्रिकोणमदनेपाके-
श्वरस्यस्थितश्चंद्रःसत्फलबोधनानिकुरुतेपापानिचातोन्यथा १०॥

अथदशांतर्दशाशुभाशुभज्ञानंशार्दूलविक्रीडितेनाह ॥ पाकस्वामिनीति । सौरसावनचांद्रनाक्षत्राणिचत्वारिमानानि । तत्रसौरमानं रविभगणभोगः । यावताकालेनार्कोंशमेकंभुंक्तेतत्सौरंदिनम्। यावताकालेनराशिद्वादशकंभुंक्तेतत्सौरंवर्षम् । तच्चपंचषष्ट्यधिकैस्त्रिभिःशतैः दिनानांघटिकापंचदशकेनसार्द्धेन भवति । सावनमुदयादुदयः अर्कोदयात्पुनरेवार्कोदयः सावनमहोरात्रम् । तच्चषष्टिघटिकमहोरात्रम् । अहोरात्रैस्त्रिंशन्मासः । मासाद्वादशवर्षम् । एवंषष्ट्यधिकैस्त्रिभिःशतैः दिनानांसावनंवर्षंचांद्रंतिथिभोगः । तच्चस्वमानेनषष्ट्यधिकंशतत्रयंभवति सावनेनमीयमानंशतत्रयंचतुःपंचाशदधिकंदिनानांतच्चवर्षंभवति । एवंसौरसावनचांद्राणित्रीणिमानानि प्रत्येकंस्वमानेनषष्ठ्यधिकंशतत्रयंभवति । नाक्षत्रं चंद्रनक्षत्रभोगः । तच्चदिनानांसप्तविंशत्यामासोभवति । शतत्रयेणचतुर्विंशत्यधिकेन दिनानांवर्षमुक्तम् ॥ रव्यंशभोगोहोरात्रः सौरश्चांद्रमसस्तिथिः । चंद्रनक्षत्रभोगस्तुनाक्षत्रः परिकीर्तितः ॥ ससावनोग्रहर्क्षाणामुदयादुदयावधि । नाक्षत्रमानेमासःस्यात्सप्तविंशतिवासराः ॥ शेषमानेषुनिर्दिष्टोमासस्त्रिंशद्दिनात्मकइति ॥ तस्मात्सावनमानेनायुर्दायगणनाकार्या । यस्माच्छोध्यक्षेपविशुद्धमायुःकर्तव्यम् । तच्चसावनमानम् । सौरमानेनसंक्रांत्यवधिकोमासः । सावनस्त्रिंशद्रात्रः। चांद्रोमावास्यांतिकः । नाक्षत्रोरेवत्यंतिकः । सौरमधिमासयुतंचांद्रंभवति । चांद्रमूनरात्रोनंसावनंभवति । चांद्रशब्देननाक्षत्रम्।उक्तंच।युगवर्षमासपिंडंरविमानंसाधिमासकंचांद्रम् । अवमविहीनंसावनमैंदवमब्दान्वितंवर्षमिति। एवंशोध्यक्षेपविशुद्धंसावनमानेनायुर्दायविधिः । तथाचमयूरचित्रकेभगवान्गार्गिः । आयुर्दायविभागश्चप्रायश्चित्तक्रियास्तथा। सावनेनैवकर्तव्याःसत्राणामप्युपासनम् । नन्वर्कोदयादारभ्यार्कोदयंयावदहोरात्रं तत्पुलिशतंत्रेसौरमहोरात्रंपठ्यते । वसुसप्तरूपनवमुनिनगतिथयः शतगुणाश्चसौरेणेति । एतच्चपुलिशएवजानाति। यस्मात्पुलिशतंत्रंवर्जयित्वा सर्वसिद्धांतेषुतंत्रेषुसौरमानेनरविभगणभोगः । सौरमानमधिमासयुक्तंचांद्रंभवति । चांद्रमवमरात्रोनंसावनंभवति एवंशोध्यक्षेपविशुद्धंसावनमानंसर्वसंहितासुचार्कोदयादारभ्यार्कोदयंयावदहोरात्रंतत्सावनमहोरात्रमितिसंज्ञा । तथाचभगवान्पराशरः।सावनमहोरात्रम् । गार्गिश्च । सावनेनस्मृतोमासस्त्रिंशदुष्णकरोदयः॥तथाचश्रीभट्टब्रह्मगुप्तः ॥ सावनमुदया-

द्वुदयइति । एवंपुरुषस्यजन्मसमयेसावनमहर्गणंकृत्वातस्मात्तिथिनक्षत्रच्छेदंता-त्कालिकंग्रहलग्नादिकंकृत्वातथादशांतर्दशाःकर्तव्याः । ततआगामिदशाफलंव-क्तव्यम् । तत्रप्रथमजन्मनि अहर्गणंतात्कालिकंकृत्वा ततस्तत्रांतर्दशाकालं वर्षादिकंदिनीकृत्ययोजयेद्वर्षाणि द्वादशभिःसंगुण्यतेपुमासान्संयोज्यत्रिंश-तापुनःसंगुण्यतेपुदिनानिक्षिपेत् । एवंकृतेदशाकालोदिनरूपोभवति । तच्चता-त्कालिकेजन्माहर्गणेसविकलेसविकलंसंयोज्याहर्गणोभवति । तत्राद्योयद्घटि-कादिः कालोभवति । तस्यातीतार्द्धरात्रात्परतोगणनाकार्या । तस्मादिष्ट-दिनमानमानयेदनेनाचार्यसूत्रेण । द्युगणोधोभवगुणितोद्विनवरसाप्तावमाधि-कश्चांद्रः । चांद्रोधरर्तुवेदानागाप्ताअधिमासदिनैर्हीनाइति । एतत्खंडखाद्यकर-णेनैवभवति । कोसौरविद्युगणइत्याह । शाकोगवसुशरोनोर्कगुणश्चैत्रादि-माससंयुक्तः।त्रिंशद्गुणस्तिथियुतइति । अस्यषष्ट्यधिकेनशतत्रयेणभागमपहृत्या-वाप्तं करणाब्दाः । शेषास्त्रिंशद्भक्ताश्चैत्रसिताद्यामासाः । शेषावर्तमानमासेसि-ताद्यास्तिथयः । करणाब्देष्वगवसुशरान्संयोज्यातीतः शककालोभवति । तस्मिञ्छाकेतस्मिन्मासेतस्मिन्दिनेसोहर्गणइति । तत्रैवदशांप्रवेशः पुनरप्य-न्यमंतर्दशाकालंदिनीकृत्यतस्मिन्योजयेत् । एवंयावंत्योंतर्दशा भवंतितावंत्यो-नेनैवप्रकारेणयोजनीयाः । ततोग्रहान्लग्नंचगणयेत् अथवान्येनप्रकारेण कालानयनम् । आदित्येक्रियमाणेयावंतोगतभगणाभवंति । तावंतःकरणप्रारं-भादारभ्यगताब्दाः तेषुकरणपरिणतशककालंसंयोज्येष्टशककालोभवति वर्तमानेवर्षेयावंतोराशयः स्फुटार्केणभवंनितावंतोमासाः सूर्यभोगातीताः । शुक्लपक्षंकृष्णपक्षंवातिथिनक्षत्रंचंद्रार्काभ्यांज्ञायतएव पाकस्वामिनित्यादि । यस्य ग्रहस्यांतर्दशाप्रवेशः सपाकस्वामी । तावच्चासौपाकस्वामीयावत्तस्यांतर्दशा । सचपाकस्वाम्यंतर्दशाप्रवेशकालेलग्नगोयदिभवति तदातस्यसंबंधिन्यंतर्दशा प्रारब्धाशुभदाशोभनफलदाभवति । अथवातात्कालंपाकस्वामिनोयत्सुहृन्मित्रं तस्मिन्नपिदशाप्रवेशकालेलग्नगेशोभनादशावक्तव्या । अथवास्यदशापतेः पूर्वं व्याख्यातोयोवर्गः तस्मिन्नपिलग्नगेशोभना । अथवान्यस्मिन्सौम्येशुभग्रहेत-त्काललग्नगेदशाप्रारब्धाशोभनैव । अथवापाकपेदशाधिपतौग्रहेतात्कालिकल-ग्नात्रिदशषड्लाभेषु तृतीयषड्दशमैकादशस्थानानामन्यतमस्थेशोभनैवदशा वक्तव्या । यद्यप्यत्रसामान्येनोक्तंप्रारब्धाशुभदादशातथापि शत्र्वधिशत्रुद-शायांप्राप्तानिष्टफलप्रदा । अधिमित्रोपिमित्रस्यदशांप्राप्नोतिशोभनः॥समःसम-दशामेत्ययथोक्तफलदोहिसः ॥ एतदपिचिंतनीयम् । अनेनप्रकारेणयदिशुभफ-लदांतर्दशाभवति तदाशुभैव अन्यथाऽशुभैव ॥ अथशुभफलायामंतर्दशायांकि-मप्यनवरतमेव सर्वकालंशुभफलावाप्तिर्भवति । किंवाकस्मिंश्चित्कस्मिंश्चिद्दि-

वसेएवमशुभायामंतर्दशायामशुभफलावाप्तिरित्युभयत्रसंदेहव्युदासार्थमाह ॥ मित्रोच्चोपचयेत्यादि।पाकेश्वरस्यदशापतेःप्रतिराशौसंचरतः तत्कालेयोग्रहोमित्रंतत्क्षेत्रस्थितश्चंद्रमायदाभवति तदासत्फलबोधनानिकुरुते शुभफलानिप्रकटीकरोति । अत्रयस्मिन्नहनियस्मिन्गृहेचारवशाच्चंद्रमाभवतितस्यगृहस्ययोधिपतिर्भवति । सचेत्तस्मिन्नहनिपाकपतेस्तात्कालिकंमित्रंभवतितदाचंद्रमाःपाकपतेर्मित्रक्षेत्रस्थोज्ञेयः । तथापाकपतेः स्वोच्चस्वराशिस्थः सत्फलबोधनानि कुरुते। नकेवलंयावत्पाकपतेरुपचयस्थानगतोपित्रिषडेकादशदशमस्थानानामन्यतमस्थानस्थस्त्रिकोणगोपिनवपंचमस्थानगतोपितथामदनस्थः सप्तमेच स्थितः। एतेषुनिर्दिष्टस्थानेष्वन्यतमस्थानस्थश्चंद्रमाः शुभफलायांदशायांसत्फलबोधनानिकुरुते । नज्ञायतेतेषांफलानामित्यत्रोच्यते । मित्रोच्चोपचयत्रिकोणमदनेस्मिन्स्थानेपाकेश्वरश्चंद्रमाः स्थितः सराशिः जन्मनियोभावआसीत्तदुद्भूतंसत्फलंबोधयति । विशेषेणतथादशापठितमिति । अतोस्मादुक्तप्रकारादन्यथापाकपतेस्तत्कालंशत्रुगृहेनीचराशौवादशापतिनासहैकराशौस्थितस्तथा द्वितीयचतुर्थाष्टमद्वादशस्थानानामन्यतमस्थानस्थोभवतितदाशुभफलायांदशायांपापानिफलानिप्रकटीकरोति । सचराशिर्योभावआसीत्तदुद्भूतंफलंबोधयति ।विशेषेणदशापठितमिति। अनिष्टमप्यष्टकवर्गोद्भूतं चमिश्रदशायांमित्रोच्चोपचयादिपुसत्फलबोधनानिकुरुते । शत्रुनीचादिपुअशुभफलानामिति । तथा चभगवान्गार्गिः । यद्राशिसंस्थःशीतांशुःशुभकृत्परिकीर्तितः । सराशिर्जन्मकालेतुयोभावस्तत्कृतंचतत् ॥ शरीरादिकृतंसौख्यंवक्तव्यंबलयोगतः । अनिष्टराशिसंस्थस्तुतद्भावानामशोभनइति ॥ १० ॥

प्रारब्धाहिमगौदशास्वगृहगेमानार्थसौख्यावहाकौजेदूषयतिस्त्रियंबुधगृहेविद्यासुहृद्वित्तदा ॥ दुर्गारण्यपथालयेकृषिकरीसिंहेसितर्क्षेन्नदाकुस्त्रीदामृगकुंभयोर्गुरुगृहेमानार्थसौख्यावहा ॥ ११ ॥

अथांतर्दशाकालेचंद्राक्रांतराशिवशेनशुभज्ञानंशार्दूलविक्रीडितेनाह ॥ प्रारब्धाहिमगाविति । यस्यतस्यग्रहस्यांतर्दशाप्रवेशसमयेहिमगौचंद्रेस्वगृहगेआत्मीयक्षेत्रस्थेकर्कटगेप्रारब्धाप्रविष्टातदासौख्यार्थमानावहाभवतीति । सौख्यंसुखभावः । अर्थोधनंमानंपूजामावहतिकरोति । कौजेभौमक्षेत्रेमेषवृश्चिकयोरन्यतमेव्यवस्थितेचंद्रेप्रवृत्तांतर्दशास्त्रियंदूषयति । परपुरुषकृतंस्त्रीदोषमुत्पादयति । बुधगृहे मिथुनकन्ययोरन्यतमस्थेचंद्रेप्रवृत्तांतर्दशाविद्यासुहृद्वित्तदा । विद्याशास्त्रानुरतिःसुहृदोमित्राणि वित्तंधनंददाति । सिंहस्थेचंद्रेदुर्गेध्वरण्येपुपथिचमार्गे आलयेचगृहसमीपेएतेपुस्थलेपुकृषिकरोति । सितर्क्षेशुक्रराशौवृषतुल-

योरन्यतमस्थेचंद्रेन्नदा मिष्टभोज्यप्रदाभवति । मृगकुंभयोर्मकरघटयोरन्यतमस्थेचंद्रेप्रवृत्तांतर्दशाकुस्त्रीदा कुत्सितांस्त्रियंददाति । गुरुगृहेजीवक्षेत्रेधन्विमीनयोरन्यतमस्थेचंद्रेप्रवृत्तांतर्दशामानार्थसौख्यावहा मानंपूजा अर्थोधनं सौख्यंसुखभावः । एतान्यावहतिददाति । एवंशुभदशाशुभकालप्रवृत्ताशुभतराभवति । एवंशुभाशुभकालप्रवृत्तामध्या । अशुभाशुभकालप्रवृत्तामध्या । अशुभाशुभकालप्रवृत्ता अशुभतरा । मध्याशुभकालप्रवृत्ताशोभना । मध्या अशुभकालप्रवृत्ताअशोभना । एवंशुभाशुभत्वकरणानियान्युक्तानितानिविख्यातांतर्दशानां शुभाशुभं व्यामिश्रफलत्वंपरिकल्पनीयमिति ॥ ११ ॥

सौर्यांस्वन्नखदंतचर्मकनकक्रौर्याध्वभूपाहवैस्तैक्ष्ण्यंधैर्यमजस्रमुद्यमरतिःख्यातिःप्रतापोन्नतिः॥भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवाव्यापदस्त्यागीपापरतिःस्वभृत्यकलहोहृत्क्रोडपीडामयाः ॥१२॥

अथार्कदशायांशुभाशुभफलप्रदर्शनंशार्दूलविक्रीडितेनाह ॥ सौर्यामिति । सूर्यस्येयंदशासौरीतस्यांदशायामंतर्दशायांवानखदंतचर्मकनकक्रौर्याध्वभूपाहवैःकारणभूतैःस्वंधनंप्राप्नोति । नखंसुगंधिद्रव्यंप्राणिकरजंवादंतोहस्तिदंतादिः चर्मव्याघ्रादीनां कनकंसुवर्णं क्रौर्यंक्रूरता अध्वामार्गः भूपोराजा आहवःसंग्रामः एतैर्धनंप्राप्नोति । तैक्ष्ण्यमुग्रस्वभावता धैर्यंशुभाशुभफलप्राप्तौहर्षविषादैरनभिभवः अजस्रमनवरतमुद्यमरतिःउद्योगपरत्वं ख्यातिः कीर्तिः प्रतापोन्नतिः प्रतापेनशौर्येणोन्नतिः शत्रूणामन्यशत्रुनिग्रहजनिताभीतिः । एतान्यादित्यशुभदशायांपुरुषस्यभवंति । अथाशुभदशायांभार्यापुत्रेति । भार्याजायापुत्राःसुताः धनंवित्तमरिःशत्रुःशस्त्रमायुधादि हुतभुगग्निः भूपोराजा एभ्यउद्भूताउत्पन्नाव्यापदोविशेषेणापदोभवंति । त्यागीत्यागशीलताभवति । शुभदशायांशुभस्थाने त्यागी । अशुभदशाचाशुभत्वादशुभस्थानेत्यागीभवति । पापरतिःपापासक्तश्चभवतिस्वभृत्यकलहः आत्मीयैर्भृत्यैःसहकलहोभवति । हृत्क्रोडपीडने भवतः । हृत् हृदयं क्रोडमुदरं हृदयोदरपीडा । आमयाःरोगाश्चास्यभवंति । मिश्रायामुभयमपि । इति सूर्यदशांतर्दशाफलम् ॥ १२ ॥

इंदोःप्राप्यदशांफलानिलभतेमंत्रद्विजात्युद्भवानीक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः॥ निद्रालस्यमृदुद्विजामररतिःस्त्रीजन्मक्षेधाविताकीर्त्यर्थोपचयक्षयौचबलिभिर्वैरंस्वपक्षेणच॥ १३॥

अथचंद्रदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह । इंदोरिति । इंदोश्चंद्रमसोदशांवयोवस्थांप्राप्यलब्ध्वा मंत्रद्विजात्युद्भवानिफलानिलभते

मंत्रःशैववैष्णवादिश्चाणक्यविहितोवावैदिकोवा । द्विजातयोब्राह्मणाः । एभ्य उद्भूतानिउत्पन्नानि नकेवलंयावदिक्षुविकाराद्गुडादिकात्क्षीरविकाराद्दध्यादिकाद्वस्त्रेभ्योंबरेभ्यःकुसुमेभ्यःपुष्पेभ्यःक्रीडायाःक्रीडाभ्यःतिलेभ्यः अन्नाच्छ्रमाच्चव्यायामात् । एतैःशुभदशायांशुभानिफलानि प्राप्नोति । अथाऽशुभायामशुभदशायांनिद्रालस्यमृदुद्विजामररतिरिति । निद्रायामालस्येचरतिरासक्तिर्भवति । मृदुद्विजामररतिर्भवति । मृदुःक्षमावान्द्विजानांब्राह्मणानाममराणांदेवानांचाराधनेरतिरासक्तिर्भवति । स्त्रीजन्मकन्याप्रसूतिः मेधाविताबुद्धिवृद्धिः कीर्तिः यशः अर्थानांधनानामुपचयक्षयौ । शुभदशायामुपचयःप्राप्तिरशुभायांक्षयःनाशः अशुभायांबलवद्भिर्वीर्यवद्भिः स्वपक्षेणात्मीयबंधुवर्गेणचसहवैरंभवति । मिश्रायामुभयमपि । इतिचंद्रदशांतर्दशाफलम् ॥ १३ ॥

भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनंप्रद्वेषःसुतमित्रदार- सहजैर्विद्वद्गुरुद्वेष्टृता ॥ तृष्णासृग्ज्वरपित्तभंगजनितारोगाः पर स्त्रीकृताःप्रीतिःपापरतैरधर्मनिरतिः पारुष्यतैक्ष्ण्यानिच ॥१४॥

अथभौमदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह । भौमेति । भौमस्यक्षितिजस्यदशायांकैर्धनंभवति । अरिविमर्देनेनशत्रुप्रमथनेन । भूपोराजा सहजाः भ्रातरः क्षितिःभूः आविकजैःऊर्णाविकारसंभूतैः आजैश्छागसंभूतैः एतैःअरिविमर्दादिभिःधनंप्राप्नोति । एतच्छुभदशायाम् । अथाशुभायांदशायां सुताःपुत्रामित्राणिसुहृदः दाराःकलत्रं सहजाःभ्रातरः । एतैःसहप्रद्वेषः वैरम् । विद्वद्भिःपंडितैःगुरुभिःगौरवसहितैश्चसहद्वेष्टृताअप्रीतिः । तृष्णातृट्असृग्रुधिरं ज्वरःप्रसिद्धोरोगः पित्तंधातुप्रसिद्धम् भंगःअवयवादेः स्फोटनम् । एतैःजनिताउत्पादितारोगाभवंति परस्त्रीणामिष्टतावाल्लभ्यम् ।अन्ये । रोगाःपरस्त्रीकृताइतिपठंति । परस्त्रीकृतारोगाः अन्यस्त्रीप्रसंगेनप्रहारादिकाः अतिप्रसंगाद्धातुक्षयकृतावा । अथवातत्कृतमूलकर्मोद्भवाभवंति । तथापापरतैः अघसक्तैः सहप्रीतिर्भवति । अधर्मेनिरतिः आसक्तिर्भवति । पारुष्यंवचनपरुषता कर्कशता तैक्ष्ण्यमुग्रस्वभावता । मिश्रायामुभयमपि । इतिभौमदशांतर्दशाफलम् ॥ १४ ॥

बौध्यांदौत्यसुहृद्गुरुद्विजधनंविद्वत्प्रशंसायशोयुक्तिद्रव्यसुव र्णवेसरमहीसौभाग्यसौख्याप्तयः॥ हास्योपासनकौशलंमतिच योधर्मक्रियासिद्धयः पारुष्यंश्रमबंधमानसशुचः पीडाचधा तुत्रयात् ॥ १५ ॥

अथबुधदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह ॥ बौध्यामिति । बुधस्येयंदशाबौधीतस्यांदौत्येन दूतत्वेन सुहृद्ध्योमित्रेभ्यः गुरुभ्यःपूजार्हेभ्यः द्विजेभ्योब्राह्मणेभ्यः धनंप्राप्नोति । विद्वद्भ्यःपंडितेभ्यः प्रशंसास्तुतिः यशश्चकीर्तिर्भवति । युक्तिद्रव्यं रीतिकांस्यादि । सुवर्णंकनकम् । वेसरःअश्वविशेषः । महीभूः । सौभाग्यंसर्वजनवाल्लभ्यम् । सौख्यंसुखभावः । एषामात्तयोलाभाभवंति । हास्यंपरोपहासः उपासनासेवा अनयोःकौशलंतज्ज्ञता । मतिचयः बुद्धिवृद्धिः । धर्मक्रियासिद्धयः धर्मयुक्तानांक्रियाणांसिद्धयोभवंति । एतच्छुभदशायाम् ॥ अथाशुभदशायांपारुष्यमित्यादि । पारुष्यंपरुषवचनता श्रमःखेदः बंधःबंधनं मानसशुचः शोकश्चित्तदौस्थ्यमेतेभवंति । धातुत्रयात्पीडा वातपित्तश्लेष्मणांत्रयाणांदोषाणांप्रकोपात्पीडाव्याधिश्चजायतेमिश्रायामुभयमपि ॥ इतिबुधदशांतर्दशाफलम् ॥ १५ ॥

जैव्यांमानगुणोदयोमतिचयः कांतिप्रतापोन्नतिर्माहात्म्योद्यममंत्रनीतिनृपतिस्वाध्यायमंत्रैर्धनम् ॥ हेमाश्वात्मजकुंजरांबरचयः प्रीतिश्चसद्भूमिपैः सूक्ष्म्योहागहनाश्रमः श्रवणरुग्वैरंविधर्माश्रितैः ॥ १६ ॥

अथजीवदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह ॥ जैव्यामिति । जीवस्येयंदशाजैवीतस्यांजैव्यां मानगुणोदयः मानःपूजा गुणाविद्याशौर्यादयः । एषामुदयःप्रादुर्भावः । मतिचयःबुद्धिविवृद्धिः । कांतिःकमनीयता । प्रतापोन्नतिःप्रतापेनपुरुषार्थेनउन्नतिः । प्रभावः शत्रूणांभीतिः । माहात्म्यं परोपकारशीलता । केचिद्गर्वमाहुः । उद्यमः उत्थानशीलता । मंत्रैर्वैदिकैरन्यैर्वा नीतिनृपतिस्वाध्यायमंत्रैर्धनम् । नीत्याचाणक्योक्तयान्येननीतिशास्त्रेणवा । नृपतीराजातदाराधनेनस्वाध्यायेनपाठेन । मंत्रेण मंत्रजाप्येन । एतैः धनंवित्तंप्राप्नोति । हेमसुवर्णम् अश्वस्तुरगः । आत्मजाः पुत्राः कुंजरः हस्ती । अंबराणिवस्त्राणि । एषांचयोबाहुल्यम् । सद्भूमिपैः गुणवद्भिः नृपैः सहप्रीतिः स्नेहंप्राप्नोति । एतच्छुभदशायाम् ॥ अथाशुभायां सूक्ष्म्योहेत्यादि । सूक्ष्म्यंवस्तुगहनात्मकं चोहयतस्तर्कयतः श्रमःखेदोभवति । यत्सूक्ष्ममतिखेदसहंगहनंगूढम् तदूहयतइत्यर्थः । श्रवणरुक्कर्णरोगः वैरंविधर्माश्रितैः धर्मबाह्यैः पुरुषैः सहवैरम् । मिश्रायामुभयमपि । इति गुरोर्दशांतर्दशाफलम् ॥ १६ ॥

**शौक्र्यांगीतरतिप्रमोदसुरभिद्रव्यान्नपानांबरस्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः ॥ कौशल्यंक्रयविक्रयेकृषिनिधिप्राप्तिर्धनस्यागमोवृंदोर्वीशनिषादधर्मरहितैर्वैरंशुचःस्नेहतः ॥१७॥**

अथशुक्रदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह ॥ शौक्र्यामिति । शुक्रस्येयंदशाशौक्रीतस्यांशौक्र्याम्।गीतरतेःगीतासक्तेःप्रमोदस्यहर्षस्यसुरभिद्रव्याणांसुगंधद्रव्याणामन्नस्यभोजनस्यपानस्यासवस्यांबराणांवस्त्राणांस्त्रीणांयोषितां रत्नानांमणीनांद्युतेः कान्तेः मन्मथोपकरणानांकामोपभोग्यानांशय्यादीनांविज्ञानस्य योगशास्त्रस्येष्टानांप्रियाणां मित्राणांसुहृदामागमालब्धयोभवंति । कुशलः शिक्षितः कुशलस्यभावः कौशल्यं कुशलः श्रेयोवाकौशल्यमभीष्टक्रियासुश्रेष्ठत्वम् । क्रयविक्रयेक्रयोयदिच्छतिविक्रेतुंतत्क्रयः विक्रयोयदिच्छति विक्रेतुंतद्विक्रयः । कृषिः कर्षणम् । निधिःनिधानं परैर्यद्वित्तंभूमावधःस्थाप्यते सनिधिस्तत्प्राप्तिर्लाभः । एतेभवंतिएतच्छुभदशायाम्॥ अथाऽशुभदशायांवृंदोर्वीशेति । वृंदेनबहुभिःसहउर्वीशेनराज्ञानिषादानामन्यजीविनांप्राणिघातिनां धर्मरहितैः पापासक्तैः एतैःसहवैरं प्राप्नोति । शुचःस्नेहतः स्नेहाच्छुचः शोकाभवंति । यत्रस्नेहस्तदुद्भवाच्छोकान्प्राप्नोति । मिश्रायामुभयमपि । इतिशुक्रदशांतर्दशाफलमिति ॥ १७ ॥

**सौरींप्राप्यखरोष्ट्रपक्षिमहिषीवृद्धांगनावाप्तयःश्रेणीग्रामपुराधिकारजनितापूजाकुधान्यागमः॥श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितंद्राश्रमान्भृत्यापत्यकलत्रभर्त्सनमपिप्राप्नोतिचव्यंगताम्१८**

अथशनैश्चरदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह ॥ सौरीमिति । सौरींशनैश्चरदशांप्राप्य खराःगर्दभाः उष्ट्राः करभाः पक्षिणः श्येनादयः महिषीप्रसिद्धा वृद्धांगनावृद्धास्त्री । एषामाप्तयः लाभाभवंति । बहुसमानजातीयानांसंघःश्रेणीतस्याअधिकारेनियुज्यते । ग्रामेपुरेवाश्रेणीग्रामपुराधिकारजनितां तदुत्पन्नांपूजांमानतांप्राप्नोति । कुधान्यानांकोद्रवादीनामागमः लाभःएतच्छुभदशायाम् ॥अथाशुभदशायां श्लेष्मेर्ष्येति । श्लेष्मणाकफेन।ईर्ष्ययामत्सरत्वेन । अनिलेनवायुना । कोपेनक्रोधेन । मोहेनचित्तभ्रमेण । मलिनतयामलीमसत्वेन। व्यापत्तिःविपत् तंद्रानिद्रालस्ययोरंतरेवर्त्तते।तस्यालक्षणम्॥ हृदये व्याकुलीभावोवाचश्चेंद्रियगौरवम् । मनोबुद्ध्यप्रसादश्चतंद्रायालक्षणं विदुः । श्रमः खेद एतान्प्राप्नोति । भृत्येभ्यःकर्मकरेभ्यः । अपत्येभ्यः पुत्रदुहितृभ्यः । कलत्रेभ्योभार्याभ्यः भर्त्सनं तर्जनंप्राप्नोति।व्यंगतामंगच्छेदं व्याधिनातदारणंवा । मिश्रायामुभयमपि । इतिशनिदशांतर्दशाफलम् ॥ १८ ॥

दशासुशस्तासुशुभानिकुर्वंत्यनिष्टसंज्ञास्वशुभानिचैवम् ॥
मिश्रासुमिश्राणिदशाफलानिहोराफलंलग्नपतेःसमानम् ॥ १९ ॥

अथैकस्मिन्वृत्तेदशासुशुभान्यशुभानिचफलान्युक्तानि तेषांविषयविभागंलग्न-दशाफलंचोपजातिकयाह॥ दशास्विति। शुभाशुभंव्यामिश्रत्वंदशासुपूर्वमेवोक्तम् तथाजन्मकालेउपचयराशिस्थानिर्मलमूर्तयः । स्पष्टगतयश्चयेग्रहास्तेषामपि दशाः शुभाः । येचोपचयस्थाहतारूक्षाः स्वल्पमूर्तयस्तेषामपिदशाअशु-भाः । तथाचयवनेश्वरः ॥ निशाकरादित्यविलग्नभानांतत्कालयोगादधिकंबलं यः । बिभर्तितस्यादिदशेष्यतेसाशेषास्ततः शेषबलक्रमेण ॥ वयोधिकोयः प्रथमोदितोवाग्रहः सपूर्वपठितोदशेशः । बलाधिकश्चेद्यदिकेंद्रसंस्थः पूर्वं सशेषास्तुयथाप्रदिष्टाः॥श्रेष्ठादशास्वेवयसिग्रहस्यस्वोच्चश्रिताकालबलाश्रिताच। मूलत्रिकोणात्स्वगृहाचमध्यामित्राश्रिताजन्मगृहाश्रितावा ॥ नीचारिभांशोप-गताजिताद्वाग्रहात्परिध्वस्तविवर्णरूक्षात् । जन्मेशशत्रोर्निधनारिभेशाद्यापठ्यते साबहुदोषदास्यात् ॥ एवंशस्तासुशोभनासुदशासुग्रहाः शुभान्येवफलानिकु-र्वंति । दशाफलवृत्ते यानिशुभान्यशुभान्यभिहितानितान्येवभवंति । नेतराणि अनिष्टसंज्ञास्वशुभदशासुअशुभान्यनिष्टानिएवभवंति । मिश्रासुदशासुमिश्रा-ण्येवदशाफलानिभवंति । एतच्चप्रतिसूत्रमस्माभिश्चव्याख्यातम्।तथाचसत्यः॥ जन्मन्युपचयभवनेपुसंस्थिताः सव्यगाः सुमूर्तिधराः । श्रेष्ठंफलंविदध्युर्ग्र-हाः क्रमात्स्वांदशांप्राप्य ॥ अन्यैर्निहितारूक्षाल्पमूर्तयोह्यपचयर्क्षसंस्थाश्च । स्वदशाभिहितंनेष्टंग्रहाः प्रयच्छंतिलोकेपु ॥ होराफलंलग्नपतेः लग्नाधिप-स्यसमानंतुल्यंवक्तव्यम्। यथामेषलग्नजातस्यभौमदशाफलंवृषलग्नजातस्यशुक्र-दशाफलम् । एवमन्येष्वपिवक्तव्यम्।किंतुद्रेष्काणवशाच्छुभायांलग्नदशायांशुभ-फलमशुभायामशुभम्। मिश्रायामुभयमपि । अथयेपूर्वंदशारिष्टाउक्तास्तेषामि-मेभंगाः प्रोक्ताः । तथाचसारावल्याम् । प्रवेशेबलवान्खेटः शुभैर्वासन्नि-रीक्षितः। सौम्याधिमित्रवर्गस्थोमृत्युकृन्नभवेत्तदा॥अंतर्दशाधिनाथस्यविबलस्य दशायदा । विबलास्यात्तदाभंगोनबाध्यातस्यचध्रुवम् ॥ युद्धेचविजयीतस्मि न्ग्रहयोगेशुभोयदि । दशायांनभवेत्कष्टंस्वोच्चादिषुचसंस्थिते ॥ इति ॥ १९ ॥

संज्ञाध्यायेयस्ययद्द्रव्यमुक्तंकर्माजीवोयश्चयस्योपदिष्टः ॥
भावस्थानालोकयोगोद्भवंचतत्तत्सर्वंतस्ययोज्यंदशायाम् ॥ २० ॥

अथान्येषामपिफलानांदशास्वतिदेशार्थंशालिन्याह । संज्ञाध्यायइति । यस्यग्रहस्यसंज्ञाध्यायेयद्द्रव्यंताम्रंस्यान्मणिहेमेत्यादिनाग्रंथेनोक्तंकथितंतस्यतद्-

व्यस्यशुभदशायांप्राप्तिः योज्या । अशुभदशायांहानिः । तथा यश्चकर्माजीवोयस्यग्रहोपदिष्टोजातकेभिहितः । अर्थाप्तिःपितृपितृपत्नीरित्यादि । तस्य ग्रहदत्तस्यकर्माजीवस्यतदंतर्दशायामेवाप्तिर्भवति । भावफलंवक्ष्यति । शूरःस्तब्धइत्यादि । तथाप्रथितश्चतुरोटनइत्यादि । तथामेषेस्वस्तिमिरनयनइत्यादि । आलोकनफलंदृष्टिफलम् । चंद्रेभूपबुधौइत्यादि । योगोद्भवंनाभसयोगान्मुक्त्वा सर्वयोगेषुयोगकर्तृभ्योग्रहेभ्योमध्याद्योबलीयान्सस्वदशायामेवफलंददाति । नाभसयोगाः सकलदशास्वपिफलप्रदाः । वक्ष्यतिच । इतिनिगदितायोगाः सार्द्धंफलैरिहनाभसा नियतफलदाश्चेत्याद्येतेसमस्तदशास्वपीति ॥ एवमादियद्युक्तंतत्सर्वंनिरवशेषम् । तस्यग्रहस्यदशायांयोज्यमिति ॥ २० ॥

छायांमहाभूतकृतांचसर्वेभिव्यंजयंतिस्वदशामवाप्य ॥ कंब्वग्निवाय्वंबरजान्गुणांश्चनासास्यदृक्त्वक्छ्रवणानुमेयान् ॥ २१ ॥

अथयस्यजातस्यजातकमप्यगणितंतस्यशरीरच्छायांदृष्ट्वाग्रहदशाज्ञानमिदं वज्रयाह ॥ छायांमहाभूतकृतामिति । पूर्वमुक्तं शिखिभूखपयोमरुद्गणानांवशिनोभूमिसुतादयः क्रमेणेति । तत्रादित्यचंद्रौवन्ह्यंबुप्रसिद्धावेव । यःकश्चिद्ग्रहः स्वदशामात्मीयदशामवाप्यमहाभूतकृतांछायांमभिव्यंजयति प्रकटीकरोति । छायाशब्देनशरीरशोभाभिधीयते । शरीरकांतिरित्यर्थः । तथाचसच्छायोयं विच्छायोयंवर्ततइत्यभिधीयते । एवमात्मीयदशायांपृथिव्यादिमहाभूतकृतां शरीरच्छायांव्यंजयतिप्रकटीकरोति । साचकंब्वग्निवाय्वंबरजान्गुणान्कुः पृथिवी अंबुवरुणः अग्निर्हुताशनः वायुः अनिलः अंबरमाकाशमेभ्यो जातोत्पन्नासाछायातद्गुणान्करोति । तांश्चयथासंख्यंनासास्यदृक्त्वक्छ्रवणानुमेयान् पार्थिवंगुणंगंधमभिव्यंजयति । नासानुमेयंघ्राणेनोपलभ्यते । अथाप्यंगुणंरसमभिव्यंजयति । तच्चास्यानुमेयम् । आस्यशब्देनेहजिह्वाज्ञेया । तयारसस्योपलब्धेः आस्यग्रहणंचात्रवृत्तानुरोधात्कृतम् । आग्नेयीआग्नेयंगुणंरूपमभिव्यंजयति । दृष्ट्यानुमेयम् । वायवी वायव्यंस्पर्शगुणमभिव्यंजयति । त्वगनुमेयंस्पर्शेनोपलभ्यते । नाभसी नाभसंगुणंशब्दमभिव्यंजयति । श्रवणानुमेयंकर्णोपलभ्यम् । एतदुक्तंभवति । यदाशुभगंधः पुरुषोभवति तदास्यबुधकृतापार्थिवीच्छायाज्ञेया । यदामिष्टरसभोजीभवतितदास्यचंद्रशुक्रकृता छायाज्ञेया । यदातीवरूपवान्सुकांतः पुरुषोभवति तदासूर्यभौमकृता आग्नेयीछायाज्ञेया । यदास्पर्शेनमृदुर्भवति तदाशनैश्चरकृतावायवीछाया ज्ञेया । यदास्यवचनंकर्णयोः सुखकरंभवतितदाजीवकृतानाभसीछायाज्ञेया । छायाविशेषलक्षणमाचार्येण संहितायामभिहितम् । तथाच । छायाशुभाशुभफ-

लानिनिवेदयंतीलक्ष्यामनुष्यपशुपक्षिषुलक्षणज्ञैः । तेजोगुणान्बहिरपिप्रविकाशयंतीदीपप्रभास्फटिकरत्नघटस्थितेव । स्निग्धद्विजत्वङ्नखरोमकेशाछाया सुगंधाचमहीसमुत्था । तुष्टयर्थलाभाभ्युदयान्करोति धर्मस्यचाहन्यहनिप्रवृद्धिम् ॥ स्निग्धासिताचहरितानयनाभिरामासौभाग्यमार्दवसुखाभ्युदयान्करोति।सर्वार्थसिद्धिजननीजननीवचाप्याछायाफलंतनुभृतांशुभमाददाति॥चंडाधृष्यापद्महेमाग्निवर्णायुक्तंतेजोविक्रमैः सप्रतापैः । आग्नेयीतिप्राणिनांस्याज्जयायक्षिप्रंसिद्धिंवांछितार्थस्यधत्ते ॥ मलिनपरुषकृष्णापापगंधानिलोत्थाजनयति वधबंधंव्याध्यनर्थार्थनाशम् । स्फटिकसदृशरूपाभाग्ययुक्तात्युदारानिधिरिव गगनोत्थाश्रेयसांस्वच्छवर्णा ॥ २१ ॥

शुभफलददशायांतादृगेवांतरात्मावहुजनयतिपुंसांसौख्यमर्थागमंच ॥ कथितफलविपाकैस्तर्कयेद्वर्त्तमानांपरिणमति फलोक्तिः स्वप्नचिंतास्ववीर्यैः ॥ २२ ॥

अत्रचवायव्यांछायांवर्जयित्वासर्वास्वेवच्छायासु शुभमशुभंफलमुक्तंतत्कथम्। शुभफलेयमशुभफलेयमितियद्दशाज्ज्ञायते तज्ज्ञानार्थमंतरात्मनः स्वरूपंमालिन्याह ॥ शुभफलमिति । शुभफलंददातियः सशुभफलदः शुभफलदस्य ग्रहस्ययादशातस्यामंतरात्मास्वदेहस्थः परमात्माचित्स्वरूपः तादृगेव शुभोभवति । पुरुषस्यतस्यचच्छायादर्शितग्रहदशाकालेबहुविधमनेकप्रकारंसौख्यंसुखभावमर्थागमंधनलाभंचजनयत्युत्पादयति । अर्थादेवाशुभदशायांपुरुषस्यांतरात्माप्यशुभोभवति । तत्रछायादर्शितग्रहजातातादृगेवफलदा।साचासौख्यमनर्थागमंचबहुप्रकारंजनयति । मिश्रायांमिश्रंच । यात्रायांचवक्ष्यति । निमित्तानुचरंसूक्ष्मंदेहेंद्रियमहत्तरम्।तेजोह्येतच्छरीरस्थंत्रिकालफलविन्नृणाम्। प्रीतयेनमनोनार्थेनासिद्धावभिनंदति । तस्मात्सर्वात्मनायातुरनुमेयंयथामनः ॥ शुभाशुभानिसर्वाणिनिमित्तानिस्युरेकतः । एकतश्चमनःशुद्धिस्तद्धिशुद्धिर्जयावहाइति।।कथितफलविपाकैरिति। ग्रहाणांदशासुयानिफलानि शुभान्यशुभानिवाकथितान्युक्तानितानियः पुरुषोभुंक्ते । तस्यपुरुषस्यतद्ग्रहदशावर्ततेइति ज्ञेयम् । एतदुक्तंभवति । यादृशंफलंशुभमशुभंवापुरुषस्योपलभ्यते । तच्चयस्य ग्रहस्यदशायांपठितम्।सातस्यदशानरस्यवर्ततइतिज्ञेयम्।एवंवर्तमानांदशांतर्कयेल्लक्षयेदित्यर्थः।एवंछायावशेनांतरात्मवशेनफलपाक्तिवशेनवागणितस्यजातकस्यवर्तमानां दशांवदेत्।अथसौरदशायामशुभायांव्यंगत्वमुक्तंनचशुभायाम्।अशुभायामप्यनेकेषांव्यंगत्वंदृष्टम्। शुक्रदशायांशुभायांनिधिप्राप्तिरुक्तानचसापिदृष्टा तदर्थमाह । परिणमतिफलोक्तिरिति । अवीर्यैः बलहीनैः ग्रहैः फलानि

यानिशुभान्यशुभानिवादत्तानितत्फलोक्तिः फलप्राप्तिः स्वप्नेस्वप्नावस्थायांप-रिणमत्यनुभूयते । चिंतायांमनोरथेनवेति । केचिच्छुभफलददशायांतादृगेवांत-राख्याइतिपठंति । पठित्वैवंव्याचक्षते । यथाशुभायांदशायामंतराख्यां-तर्दशाशुभायदिभवति । तदाबहुजनयतिपुंसांसौख्यमर्थागममिति । अर्था-देवाशुभायांदशायामशुभांतर्दशा असौख्यमनार्थागमंचबहुजनयति । अनेनव्याख्यानेनशुभायामशुभायांचशुभाशुभानिभवंति मिश्रफलंप्रयच्छंति। न-चैतदिष्यते । यस्मादुक्तम्। एकर्क्षगोर्द्धमपहृत्यददातितुस्वमिति ।अत्रदशापतेः फलमपहृत्यांतर्दशापतिरेवस्वंफलंददातीतिज्ञेयम् । अन्यथापहृत्येतिनिरर्थकं स्यादिति । तस्मात्पूर्वपाठःश्रेयान् द्वितीयःप्रमादपाठः । प्रथमपाठेनविनाछा-यांशुभाशुभत्वमनुमातुंनशक्यतइति ॥ २२ ॥

एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यते तत् ॥ नान्योग्रहःसदृशमन्यफलंहिनस्तिस्वांस्वांदशामुपग-ताः स्वफलप्रदाःस्युः ॥ २३ ॥

## ॥ इतिदशांतर्दशाध्यायोष्टमः ॥ ८ ॥

अथैकग्रहदत्तयोःफलयोःसदृशयोर्नाशोभवति भिन्नदत्तानांबहूनामपिप-क्तिरेवभवतीत्येतद्वसंततिलकेनाह॥ एकग्रहस्येति । सर्वाण्येवफलानि नाभसव-र्ज्यंस्वदशायांग्रहःप्रयच्छतीत्युक्तम्। तत्रैकेनग्रहेणयदासदृशंविरुद्धंफलद्वयंदत्तंभ-वति । तस्मिन्सदृशेतुल्येद्वयोःफलविरोधेसतिनाशोभवति।तस्यफलद्वयस्यवदे-द्ब्रूयात् । कीदृशंतद्विरुद्धमित्यत्रोच्यते।यथा कश्चिद्ग्रहःकयापियुक्त्यादशफलादि-नासुवर्णदोभवति सएवान्ययायुक्त्याअष्टवर्गफलयोगफलदृष्टिफलभावफला-नामन्यतमेनसुवर्णापहारीभवति । तदाफलद्वयेपिसुवर्णसंबंधोस्तीतिसादृश्यं स्वर्णदानापहारिणाविति विरोधः । एवमेकस्यग्रहस्यसदृशफलयोः विरोधे नाशंवदेत् । नसुवर्णलाभोनचापहानिरिति । यदधिकंपरिपच्यते । ततएके-नापिग्रहेणफलद्वयंदत्तमन्यरूपंतयोर्मध्याद्यदधिकंतत्परिपच्यतेभवति । यथा कश्चिद्ग्रहोनिर्दिष्टप्रकारद्वयेनसुवर्णदः सएवप्रकारेणैकेनसुवर्णापहारी तदाद्वयो-रधिकत्वात्तद्दानस्यसुवर्णंददात्येव । नापहरति । अथवाप्रकारद्वयेनसुवर्णापहा-री।प्रकारेणैकेनसुवर्णदः।तदापहरणस्याधिकत्वादपहरत्येव।अथवासुवर्णापहारी रूप्यदश्च।तथापिद्वेअसदृशेअसदृशत्वादधिकंपरिपच्यते । सुवर्णापहारीरूप्यद-श्चभवतिइतिकेचित् । नान्योग्रहइति । अन्येनग्रहेणदत्तंसदृशंविरोध्यपिफलंना-न्योग्रहोपिहिनस्त्यपहरति । यथाकश्चिद्ग्रहःसुवर्णदोभवत्यन्यश्चसुवर्णापहारी ।

तदातत्रसुवर्णदः स्वदशायांसुवर्णंददाति । स्वदशायांसुवर्णापहारीचापहरति । अनेनैतदुक्तंभवति । यथैकग्रहस्यसदृशफलयोः विरोधेसमग्रजन्मांतरेपिफलनाशंवदेत् । अन्यत्रविरुद्धयोरपिफलयोः नाशंनवदेत् । यतःसुवर्णदोग्रहः स्वामात्मीयांदशामुपगतःप्राप्तः सुवर्णलाभंकरोति । सुवर्णापहारीस्वदशामुपगतः प्राप्तःसुवर्णमपहरति । एतदष्टकवर्गफलंविनाशयतस्तत्रैकस्यग्रहस्यफलसदृशयोरपितुल्यसंख्ययोःफलयोर्नाशोभविष्यति । यथाभविष्यति तथातत्रैवप्रतिपादयिष्यामइति ॥ २३ ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौदशांतर्दशाध्यायोष्टमः ॥ ८ ॥

स्वादर्कःप्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगोवक्रात्स्वादिव तद्वदेवरविजाच्छुक्रात्स्मरांत्यारिषु ॥ जीवाद्धर्मसुतायशत्रुषुदशत्र्यायारिगःशीतगोरेष्वेवांत्यतपःसुतेषुचबुधाल्लग्नात्सबंध्वंत्यगः ॥ १ ॥

अथाष्टकवर्गाध्यायोव्याख्यायते । तत्रांतर्दशाफलमिति । पूर्वमेवोक्तंतत्प्रदर्श्याधुनास्थिरस्याष्टकवर्गफलस्यावसरः । लग्नाष्टमाः सर्वेएवग्रहास्तेभ्यः सकाशादेकैकस्यग्रहस्यचारवशाद्राशौविचरतः शुभाशुभंफलमष्टकवर्गेनिरूप्यते । तत्रादावेवार्काष्टकवर्गंशार्दूलविक्रीडितेनाह ॥ स्वादर्कइति । यत्रराशौ जन्मसमयेपुरुषस्यादित्यः स्थितः सएवतस्यस्वस्थानमुच्यते । एवमन्येषामपिग्रहाणांज्ञेयम् । योयत्रव्यवस्थितः सएवतस्यस्वस्थानंतस्मात्स्वादर्कः प्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगः प्रथमैकादशचतुर्थाष्टमद्वितीयदशमनवमसप्तमेषु १ । ११।४।८।२।१० । ९ । ७ एतेषांस्थानानांसंज्ञाःप्रागेवव्याख्याताः । अतःपुनर्नोच्यंते । एषामंकन्यासएवव्याख्यानमितिसर्वत्रज्ञेयम् । एतेषुस्थानेषुगतः स्वात्स्थानादर्कः सूर्यः शुभः इष्टफलदः अर्थादेवान्यस्थानेष्वशुभअनिष्टफलदः । यतोवक्ष्यति । इतिनिगदितमिष्टंनेष्टमन्यदित्येवंसर्वत्रज्ञेयम् । वक्रात्स्वादिव वक्रादंगारकात्स्वादात्मीयस्थानादिवशुभः । येष्वेवस्वस्थानात्तेष्वेवांगारकात् १ । ११ । ४ । ८ । २ । १० । ९ । ७ एतेष्वर्कोभौमाच्छुभः । तद्वदेवरविजात् । रविजात्सूर्यपुत्रात्तद्वदेवयेष्वेवस्थानेषुस्वाच्छुभस्तेष्वेवसौरात् १ । ११ । ४ । ८ । २ । १० । ९ । ७ एतेषुसौरादर्कः शुभइति सर्वत्रानुवर्तते।शुक्रात्स्मरांत्यारिषुसएवार्कः । स्मरांत्यारिषुसप्तमद्वादशषष्ठेषुशुक्राच्छुभः ७ । १२ । ६ । जीवाद्धर्मसुतायशत्रुषु जीवाद्बृहस्पतिस्थानात् धर्मसुतायशत्रुषु नवमपंचमैकादशषष्ठेषुशुभः ९ । ५ । ११ । ६ दशत्र्यायारिगःशीतगोः

शीतगोश्चंद्राद्दशम्यायारिगः दशमतृतीयैकादशषष्ठगःशुभः १० । ३ । ११ । ६ एतेष्वेवांत्यतपःसुतेषुचज्ञ्बुधाच्छुभः । एष्वेवप्रागुक्तेषुचंद्रस्थानेषुदशम्याया-रिषुचशब्दात्तथांत्यतपःसुतेषुद्वादशनवपंचमेषुज्ञ्बुधाच्छुभः १० । ३ । ११ । ६ । १२ । ९ । ५ लग्नात्सबंध्वंत्यगः सहशब्देनप्रागुक्तानिचंद्रस्थानान्यनुकृष्यंते तेनांत्यतपःसुतस्थानानीति सर्वत्रपरिभाषा तैनैतेषुचंद्रस्थानेषुदशम्यायारिपुसबंध्वंत्येषुचतुर्थद्वादशसहितेषुगतोलग्नादुदयाच्छुभः १० । ३ । ११ । ६ । ४ ।१२। तथाचसत्यः ॥ स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभत्रिकोणानिहित्वेष्टः ३ । ६ । १२ । ५ एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १ । ११ । ४ । ८ । २ । १० । ९ । ७ सौरस्यतुसहजारिसुतांत्यसंज्ञानिहित्वेष्टइत्यनुवर्तते ३ । ६ । ५ । १२ । एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १ । ११ । ४ । ८ । २ । १० ।९ । ७ । चंद्राद्दशमैकादशतृतीयषष्ठोपगः शुभःसूर्यः १० । ११ । ३ । ६ जीवात्त्रिकोणयोः षष्ठस्तथैकादशश्चेष्टः ९ । ५ । ६ । ११ प्रथमद्वितीयसप्तमचतुर्थनैधनगतान्विनाराशीन्सौम्यादिष्टःसूर्यः १ । २ । ७ । ४ । ८ । एतानिवर्जयित्वा तान्येववराहमिहिरप्रदर्शितानिस्थानानिजातानि १० । ३ । ११ । ६ । १२ । ९ । ५ कुजस्तुसदृशोर्कपुत्रेण १ । ११ । ४ । ८ । २ । १० । ९ । ७ दशमैकादशषष्ठतृतीयगोंत्यश्चतुर्थगोलग्नात् १० । ११ । ६ । ३ । १२ । ४ शुक्रस्थानाद्रविः षट्सप्तमद्वादशेषु भवतीष्टः ६ । ७ । १२ । तथाचसूक्ष्मजातके । केंद्रायाष्टद्विनवस्वर्कः स्वादार्किभौमयोश्चशुभः । षट्सप्तांत्येषुसितात्षडायधीधर्मगोजीवात् ॥ उपचयगोर्कश्चंद्रादुपचयनवमांत्यधीयुतःसौम्यात् । लग्नादुपचयबंधुव्ययस्थितःशोभनःप्रोक्तः ॥ इतिआदित्याष्टकवर्गः ॥ १ ॥

लग्नात्षट्त्रिदशायगः सधनधीधर्मेषुचाराच्छशीस्वात्सास्ता
दिषुसाष्टसप्तसुखेः षट्त्र्यायधीस्थोयमात्॥धीत्र्यायाष्टमकंट
केषुशशिजाज्जीवाद्व्ययायाष्टगःकेंद्रस्थश्चसितात्तुधर्मसुखधी
त्र्यायास्पदानंगगः ॥ २ ॥

अथचंद्राष्टकवर्गंशार्दूलविक्रीडितेनाह ॥ लग्नात्षडिति । लग्नात्षट्त्रिदशायगः शशीचंद्रः लग्नादुदयात्षट्त्रिदशायगः षष्ठतृतीयदशमैकादशेषुस्थानेषुशुभः ६ । ३ । १० । ११ सधनधीधर्मेषुचाराच्छशी । सहशब्देनप्रागुक्तान्येवस्थानान्यनुक्षिप्यंते । शशीचंद्रः आराद्भौमादेष्वेवषट्त्रिदशायेषुधनधीधर्मसहितेषुद्वितीयपंचमनवमयुक्तेषुशुभः ६ । ३ । १० । ११ । २ । ५ । ९ स्वात्सास्तादिषुआत्मीयस्थानादेष्वेवषट्त्रिदशायेषुसास्तादिषुसप्तमप्रथमसहितेषु

शुभःशशी ६।३।१०।११।७।१ साष्टसप्तसुरवेरादित्यादेष्वेवस्थानेषु साष्टसप्तसु अष्टमसप्तमसंयुक्तेषु ६।३।१०।११।८। ७ शुभःषट्त्र्यायधीस्थोयमात् यमात्सौरात् षट्त्र्यायधीस्थः षष्ठतृतीयैकादशपंचमस्थानस्थः शुभः ६।३।११।५ धीत्र्यायाष्टमकंटकेपुशशिजात्। शशिजाद्बुधाद्बुधस्थानाद्धीत्र्यायाष्टमकंटकेषुपंचमतृतीयैकादशाष्टमकेंद्रेषुशुभःशशी।५।३।११।८।१।४।७। १०। जीवाद्व्ययायाष्टगः केंद्रस्थश्च। जीवाद्गुरुस्थानाद्व्ययायाष्टगः केंद्रस्थश्च द्वादशैकादशाष्टमकेंद्रस्थश्चशुभश्चंद्रः १२।११।८।१।४।७।१० सितात्तुधर्मसुखधीत्र्यायास्पदानंगगः। सिताच्छुक्राद्धर्मसुखधीत्र्यायास्पदानंगगेषु नवमचतुर्थपंचमतृतीयैकादशदशमसप्तमेषुशुभः ९।४।५।३।११।१०।७। तथाचसत्यः। षष्ठैकादशसप्तमतृतीयदशमादिसंस्थितश्चंद्रः। स्वादिष्टः ६।११।७।३।१०।१ सौरस्यतुसहजारिसुतायसंस्थितश्च शुभः ३।६।५।११॥ रिपुनिधनसहजसप्तमदशमैकादशसंस्थितः सूर्यात्। ६।८।३।७।१०।११। लग्नात्तृतीयदशमारिलाभसंस्थितः शुभश्चंद्रः ३।१०।६।११॥ भ्रातृसुतकर्मधनलाभधर्मरिपुराशिगः कुजादिष्टः ३।५।१०।२।११।९।६। जीवात्तृतीयषष्ठद्विनवमसुतवर्जितेष्विष्टः ३।६।२ ९।५॥ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १२।११।८।१।४।७।१० प्रथमद्वितीयषष्ठाष्टमांत्यवर्जेपुभार्गवादिष्टः १।२ ६।८।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि ३।४।५।७।९।१०।११ षष्ठधनपंचमनवमपश्चिमवर्ज्येपुबुधात्प्रशस्तश्च। ६।२।५।९।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।३।४।७।८।१०।११॥ तथाचसूक्ष्मजातके। शश्युपचयेपुलग्नात्साद्यसुनिः स्वात्कुजात्सनवधीस्थः। सूर्यात्साष्टस्मरगस्त्रिषडायसुतेषुसूर्यसुतात्॥ ज्ञात्केंद्रत्रिसुतायाष्टमगोगुरोर्व्ययभवाष्टकेंद्रेषु। त्रिचतुःसुतनवदशसप्तमायगश्चंद्रमाः शुभः शुक्रात्॥ इतिचंद्राष्टकवर्गः॥ २॥

वक्रस्तूपचयेष्विनात्सतनयेष्वाद्याधिकेपूदयाच्चंद्राद्दिग्विफलेषुकेंद्रनिधनप्राप्त्यर्थगः स्वाच्छुभः॥ धर्मायाष्टमकेंद्रगोर्कतनयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्षड्व्ययलाभमृत्युषुगुरोःकर्मांत्यलाभारिषु॥ ३॥

अथभौमाष्टकवर्गंशार्दूलविक्रीडितेनाह॥ वक्रस्तूपचयेष्विनादिति। वक्रोंगारकः। इनादादित्यादुपचयेपुत्रिषडेकादशदशमेषुसतनयेषुपंचमस्थानसहितेषुशुभः ३।६।११।१०।५ आद्याधिकेषूदयाद्वक्रः शुभः। उदयाल्ल-

मादेष्वेवोपचयेष्वाद्याधिकेषुप्रथमस्थानयुक्तेषुशुभः ३ । ६ । ११ । १० । १ चंद्राद्दिग्विफलेषुचंद्रस्थानादेष्वेवोपचयेषुदिग्विफलेषुदशमस्थानफलवर्जितेषु तेनदशमस्थानेनशुभंनाप्यशुभंफलंकरोतीत्यर्थः । ३ । ६ । ११ एतेषुशुभः । केंद्रनिधनप्राप्त्यर्थगः स्वाच्छुभः स्वादात्मीयस्थानात्केंद्रनिधनप्राप्त्यर्थगः केंद्राष्टमैकादशद्वितीयगः शुभः १ । ४ । ७ । १० । ८ । ११ । २ धर्मायाष्टमकेंद्रगोर्कतनयात् सौराद्धर्मायाष्टमकेंद्रगः नवमैकादशाष्टमकेंद्रगतः शुभः । ९ । ११ । ८ । १ । ४ । ७ । १० ज्ञात्षट्त्रिधीलाभगः ज्ञाद्बुधात्षट्त्रिधीलाभगः षष्ठतृतीयपंचमैकादशगतः शुभः ६ । ३ । ५ । ११ । शुक्रात् षड्व्ययलाभमृत्युषु शुक्रस्थानात् षष्ठद्वादशैकादशाष्टमेषुशुभः ६ । १२ । ११ । ८ गुरोः कर्मांत्यलाभारिषुगुरोः जीवाद्दशमद्वादशैकादशषष्ठेषुशुभः १० । १२ । ११ । ६ ॥ तथाचसत्यः।द्वादशपंचमनवमतृतीयषष्ठान्विनाकुजस्त्विष्टः।स्वस्थानात् १२।५। ९ । ३ । ६ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानि जातानि । १ । ४ । ७ । १० । ८ । ११ । २ सौरस्यतुनवमाभ्यधिकेषुअनर्थेषुएष्वेवद्वितीयस्थानंविनानवमाभ्यधिकेषु ११ । ८ । ९ । १ । ४ । ७ । १० भौमस्तृतीयपंचमदशमैकादशरिपुस्थितः सूर्यात्। इष्ट ३ । ५।१० । ११ । ६ श्चंद्रान्मध्यमदशमषष्ठसहजलाभेषु १० । ३ । ६ । ११॥दशमैकादशषष्ठांत्यगः कुजो भूमिजः पूजितोगुरुस्थानात्१० । ११ । ६ । १२। षष्ठैकादशपंचमतृतीयगःशुभःसौम्यात्। ६ । ११ । ५ । ३॥अंत्यायाष्टमषष्ठगःकुजः पूजितःशुक्रात् १२ । ११ । ८ । ६। प्रथमैकादशदशरिपुसहजोपगतश्चहोरायाः १।११ । १० । ६ । ३ ॥ तथाचस्वल्पजातके। भौमःस्वादायस्वाष्टकेंद्रगरुव्यायषट्सुतेषुबुधात् । जीवाद्दशायशत्रुव्ययेष्विनादुपचयसुतेषु ॥ उदयादुपचयतनुपुत्रिषडायेष्विदुतः समोदशमः । चंद्रस्थानादुपचयेषुदशमवर्जितेषुशुभः ॥ दशमेशुभोपिनभवति ३ । ६ । ११ भृगुतोंत्यषडष्टायेषु १२ । ६ । ८ । ११॥ असितात्केंद्रायनववसुषु १ । ४ । ७। १०। ११ । ९ । ८ इति भौमाष्टकवर्गः ॥ ३ ॥

द्व्याद्यायाष्टतपःसुखेषुभृगुजात्सत्र्यात्मजेष्विदुजः साज्ञास्तेषुयमारयोर्व्ययरिपुप्राप्त्यष्टगोवाक्पतेः॥धर्मायारिसुतव्ययेषु सवितुः स्वात्साद्यकर्मत्रिगःषट्स्वायाष्टसुखास्पदेषुहिमगोः साद्येषुलग्नाच्छुभः ॥ ४ ॥

अथबुधस्याष्टकवर्गंशार्दूलविक्रीडितेनाह ॥द्व्याद्यायाष्टतपइति । इंदुजोबुधः भृगुजाच्छुक्रात् द्व्याद्यायाष्टतपःसुखेषु द्वितीयप्रथमैकादशाष्टमनवमचतुर्थेषुसत्र्यात्मजेषुतृतीयपंचमयुक्तेषुशुभः २ । १ । ११ । ८ । ९ । ४ । ३ । ५

साज्ञास्तेपुयमारयोः । एष्वेवद्व्याद्यायाष्टतपःसुखेपुसाज्ञास्तेपु दशमसप्तमस-हितेपुयमारयोः शनैश्चरांगारकयोःयमात् २ । १ । ११ । ८ । ९ ।४। १० । ७ आराच्चशुभः २ । १ । ११ । ८ । ९ । ४ । १० । ७ व्ययरिपुप्रास्यषष्टगोवा-क्पतेः । वाक्पतेःजीवात् द्वादशषष्ठैकादशाष्टमगतःशुभः १२ । ६ । ११ । ८ धर्मायारिसुतव्ययेषुसवितुः सूर्यान्नवमैकादशमषष्ठपंचमद्वादशेषुशुभः ९ । ११ । ६ । ५ । १२ स्वात्साद्यकर्मत्रिगः । स्वादात्मीयस्थानादेष्वेवधर्मादिपुस्था-नेपुसाद्यकर्मत्रिकेपु प्रथमदशमतृतीयसहितेपुगतःशुभः ९ । ११ । ६ । ५ । १२ । १ । १० । ३ षट्स्वायाष्टसुखास्पदेपुहिमगोश्चंद्रात् षष्ठद्वितीयैका-दशाष्टमचतुर्थदशमेषुशुभः ६ । २ । ११ । ८ । ४ । १० । साद्येपुलग्नाच्छुभः एष्वेवषष्ठादिपुस्थानेपुसाद्येपुप्रथमस्थानसहितेपुलग्नाच्छुभः ६ । २ । ११ । ८ । ।४।१० । १ ॥ तथाचसत्यः । स्वात्स्थानाच्छशितनयोद्वितीयसप्तमचतुर्थनिध-नानि।हित्वेष्टः २ । ७ । ४ । ८ एतानिवर्जयित्वातान्येववराहमिहिरपठितानि स्थानानिजातानि १ । ३ । ५ । ६ । ९ । १० । ११ । १२ सूर्यस्यतुलाभारि-सुतांत्यनवमस्थः । ११ । ६ । ५ । १२ । ९ ॥सुतसहजषष्ठपश्चिमवर्जितेपुमंड-लेपुबुधस्त्विष्टः । सौराराभ्यांस्थानादविकल्पाच्छास्त्रनियमेन ५।३। ६ । १२ ॥ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १। ११ । ४। २ । ८ । ९ । १० । ७ लग्नाच्छुक्रोयेपुप्रशस्यतेतेपुचंद्रजस्तस्य । येपुस्थानेषु लग्नाच्छुक्रःशुभस्तेष्वेवस्थानेपुशुक्रस्थानाद्बुधःशुभोभवति ॥ शुक्राष्टकवर्गः पठ्यते।लग्नादिष्टःशुक्रोरिपुसप्तमदशमपश्चिमान्हित्वा ६ । ७ । १० । १२॥एता-निस्थानानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि१।२।३।४। ५ । ८ । ९ । ११ एतेपुस्थानेपुशुक्रस्थानाच्छुभोबुधः । अंत्योपांत्याष्टमशत्रुभे-पुजीवाद्बुधःश्रेष्ठः १२ । ११ । ८ । ६ । दशमस्वलाभषष्ठाष्टमेपुचंद्राद्बुधश्चतुर्थेच १० । २ । ११ । ६ । ८ । ४ । लग्नाच्चेष्टोद्यूनांत्यनवमसुतसहजवर्ज्येषु ७ । १२ । ९ । ५ । ३ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजा-तानि २ । ६ । १० । ११ । ८ । ४ । १ एतेपुलग्नाच्छुभः । तथाचस्वल्पजा-तके । सौम्योंत्यषण्नवायात्मजेष्विना १२ । ६ । ९ । ११ । ५ त्स्वात्त्रि-तनु ३ । १ दशयुतेपु १० । चंद्राद्विरिपुदशायाष्टसुखगतः २ । ६ । १० । ११ । ८।४।१ साद्दिपुविलग्नात् । प्रथमसुखायद्विनिधनधर्मेपु १ । ४ । ११ । २ । ८ । ९ सितात्रिधीसमेतेपु ३ । ५। साशास्मरेषु १० । ७ । सौरारयोर्व्ययायरिपुवसु-पु १२ । ११ । ६ । ८ गुरोः । इतिबुधस्याष्टकवर्गः ॥ ४ ॥

दिक्स्वाद्याष्टमदायवंधुषुकुजात्स्वात्सत्रिकेष्वंगिराः सूर्या-त्सत्रिनवेषुधीस्वनवदिग्लाभारिगोभार्गवात् ॥ जायायार्थन-

**वात्मजेषुहिमगोर्मंदात्रिषड्धीव्ययेदिग्धीषट्स्वसुखायपूर्वन-वगोज्ञात्सस्मरश्चोदयात् ॥ ६ ॥**

अथजीवस्याष्टकवर्गंशार्दूलविक्रीडितेनाह । दिगिति । दिक्स्वाद्याष्टमदायबंधुषुकुजादंगिराइति । अंगिराजीवः कुजादंगारकाद्दशमद्वितीयप्रथमाष्टमसप्तमैकादशचतुर्थेषुशुभः १० । २ । १ । ८ । ७ । ११ । ४ स्वात्सत्रिकेष्वंगिराः स्वादात्मीयस्थानादंगिराः गुरुः पूर्वोक्तेषुदिक्स्वाद्यादिषुसत्रिकेषुतृतीयस्थानसहितेषुशुभः १० । २ । १।८।७।११।४।३ सूर्यात्सत्रिनवेषु गुरुःशुभः । सूर्यादादित्यादेष्वेवस्थानेषुप्राशुक्तेषुसतपस्तृतीयेषु तृतीयनवमस्थानाधिकेषुशुभः १० । २ । १ । ८ । ७ । ११ । ४ । ३ । ९ धीस्वनवदिग्लाभारिगो भार्गवात् । भार्गवाच्छुक्रात्पंचमद्वितीयनवमदशमैकादशषष्ठेषुशुभः ५ । २ । ९ । १० । ११ । ६ जायायार्थनवात्मजेषुहिमगोः । हिमगोश्चंद्रात्सप्तमैकादशद्वितीयनवमपंचमेषुशुभः ७ । ११ । २ । ९ । ५ मंदात्रिषड्धीव्यये मंदात्सौरात्तृतीयषष्ठपंचमद्वादशेषुशुभः । ३ । ६ । ५ । १२ दिग्धीषट्स्वसुखायपूर्वनवगोज्ञाद्गुरुः ज्ञाद्बुधाद्दशमपंचमषष्ठद्वितीयचतुर्थैकादशप्रथमनवमेषुशुभः १० । ५ । ६ । २ । ४ । ११ । १ । ९ सस्मरश्चोदयात् । उदयाल्लग्नादेष्वेवस्थानेषुसस्मरेषुसप्तमस्थानसहितेषुशुभः १०।५।६।२ । ४ । ११ । १ । ९ । ७॥तथाचसत्यः । येषुबुधस्यशशांकस्तेषुगुरुः पुष्कलस्वकात्स्थानात्।चंद्राष्टकवर्गःपठ्यते । षष्ठधननवमपश्चिमवर्ज्यंषुबुधात्प्रशस्तश्च ६ । २ । ९ । १२॥ एतानिस्थानानिवर्जयित्वाजातानि १ । ३ । ४ । ५ । ७ । ८ । १० । ११ अत्रपंचमद्वितीययोः स्थानयोः वराहमिहिरेणसहभेदः । अत्रचवराहमिहिरेणयवनेश्वरमतमंगीकृत्यद्वितीयस्थानस्यशुभत्वमंगीकृतम् । तथाचयवनेश्वरः । स्वस्थानतः स्थानसुतार्थमानप्राप्तिंद्वितीयेचगुरुः करोति । एवंद्वितीयेच शुभः विवाददैन्याध्वगदस्त्रिकोणेतस्मात्पंचमेनशुभः । एष्वेवार्कादिष्टोनवमाभ्यधिकेषुभवने १ । ३ । ४ । ५ । ७ ।८।९ । १० । ११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणयवनेश्वरमतमंगीकृतम् । तथाचयवनेश्वरः । स्थानेरवेर्बुद्धिसुहृद्धनार्तिंकरोति जीवोधनदोद्वितीये । एवंद्वितीयेशुभत्वाद्वराहमिहिरेणांगीकृतम् । रुग्राजपीडाध्वकृदिद्रसूरिःस्यात्पंचमेतस्मात्पंचमे नशुभः। आत्मसदृशेषु सहजभवनंविनाकुजाच्चगुरुरिष्टः १ । ४ । ५ । ७ । १० । ११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणसहभेदः । अत्रापियवनेश्वरः । गुरुः कुजस्थानगतोरिहंताद्वितीयगस्तुद्यतिहर्षदाता । तस्माद्वराहमिहिरेणद्वितीयस्थानमंगीकृतम् । जामित्रगोव्याध्यरिशोककारी । एवंसप्तमस्थानंनांगीकृतम् । द्वादशरिपुपंचमतृतीयसंज्ञे

शुभः सौरात् १२ । ६। ५ । ३ दशमैकादशनवमद्वितीयषट्पंचमेषुभृगोः । जीवइष्टः १० । ११ । ९ । २ । ६ । ५ चंद्राज्जामित्रनवमसुतलाभकोशर्क्षेषुगुरुः शुभः ७ । ९ । ५ । ११ । २ । प्रथमद्वितीयपंचमचतुर्थधर्मारिलाभदशमस्थः सौम्याद्गुरुरिष्टः १ । २ । ५ । ४ । ९ । ६ । ११ । १० जीवोलग्नादेवमिष्टः सजामित्रः १ । २ । ५ । ४ । ९ । ६ । ११ । १० । ७ ॥ तथाचस्वल्पजातके ॥ जीवोभौमाद्व्यायाष्टकेंद्रगोऽ २ । ११ । ८ । १ । ४ । ७ । १० कोत्सधर्मसहजेषु २ । ११ । ८ । १ । ४ । ७ । १० । ९ । ३ स्वात्सत्रिकेषु २ । ११ । ८ । १ । ४ । ७ । १० । ३ शुक्रान्नवदशलाभस्वधीरिपुषु ९ । १० । ११ । २ । ५ । ६ शशिनः स्मरत्रिकोणार्थलाभग ७ । ९ । ५ । २ । ११ त्रिरिपुधीव्ययेषुयमात् ३ । ६ । ५ । १२ नवदिक्सुखाद्यधीस्वायशत्रुषुज्ञा ९ । १० । ४ । १ । ५ । २ । ११ । ६ त्सकामगोलग्नात् ९ । १० । ४ । १ । ५ । २ । ११ । ६ । ७ इतिजीवाष्टकवर्गः ॥ ५ ॥

लग्नादा सुतलाभरंध्रनवगः सांत्यः शशांकात्सितः स्वात्साज्ञेषुसुखत्रिधीनवदशच्छिद्रातिगः सूर्यजात् ॥ रंध्रायव्ययगोरवेर्नवदशप्राप्त्यष्टधीस्थोगुरोर्ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषट्पुत्रायसांत्यः कुजात् ॥ ६ ॥

अथशुक्रस्याष्टकवर्गंशार्दूलविक्रीडितेनाह ॥ लग्नादिति । सितः शुक्रः लग्नादासुतलाभरंध्रनवगः शुभः लग्नात्प्रभृतिसुतस्थानंपंचमं यावत्तथालाभरंध्रनवगः सितः शुभः । तेषुप्रथमद्वितीयतृतीयचतुर्थपंचमैकादशाष्टनवमेषुलग्नाच्छुक्रः शुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ सांत्यः शशांकात्सितः । शशांकाचंद्रादेष्वेवस्थानेषुसांत्येषुसव्ययेषुद्वादशस्थानाधिकेषुशुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ । १२ । स्वात्साज्ञेषुस्वादात्मीयस्थानादेष्वेवस्थानेषुसाज्ञेषुदशमस्थानाधिकेषुशुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ । १० सुखत्रिधीनवदशच्छिद्रातिगः सूर्यजात् सौराच्चतुर्थतृतीयपंचमनवमदशमाष्टमैकादशेषुशुभः ४ । ३ । ५ । ९ । १० । ८ । ११ रंध्रायव्ययगोरवेः रवेरादित्यादष्टमैकादशद्वादशेषुशुभः ८ । ११ । १२ नवदशप्राप्त्यष्टधीस्थो गुरोः जीवान्नवमदशमैकादशाष्टमपंचमेषुशुभः ९ । १० । ११ । ८ । ५ ज्ञाद्धीत्र्यायनवारिगः । ज्ञाद्बुधात्पंचमतृतीयैकादशनवमषष्ठेषुशुभः ५ । ३ । ११ । ९ । ६ त्रिनवषट्पुत्रायसांत्यः कुजात् । कुजाद्भौमात्तृतीयनवमषष्ठपंचमैकादशेषुसांत्येषुअंत्येनद्वादशेनसहितेषुस्थानेषुशुक्रः शुभः ३ । ९ । ६ । ५ । ११ । १२ ॥ तथाचसत्यः । स्वस्थानाद्भृगुतनयः षट्सप्तमपाश्चिमेत-

रेष्विष्टः ६ । ७ । १२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १ । २ । ३ । ४ । ५ । ८ । ९ । १० । ११ रिपुपत्निकर्मवर्ज्येषु सितश्चंद्रात्तुपुष्कलोनॄणाम् ६ । ७ । १० एतानिवर्जयित्वातान्येववराहमिहिरपठितानिजातानि १ । २ । ३ । ४ । ५ । ९ । ८ । ११ । १२ । अंत्योपांत्याष्टमगः सूर्यादिष्टस्तुभार्गवः कथितः १२ । ११ । ८ । भौमादंत्योपांत्यतृतीयनवमसुतशत्रुगश्चैवम् । १२ । ११ । ३ । ९ । ५ । ६ दशमैकादशनिधनत्रिकोणसंस्थोभृगुर्जीवात् । १० । ११ । ८ । ५ । ९ सौम्यात्सुतधर्मलाभसहजारिसंज्ञेषु । ५ । ९ । ११ । ३ । ६ लग्नादिष्टः शुक्रोरिपुसप्तमदशमपश्चिमान्हित्वा । ६ । ७ । १० । १२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि । १ । २ । ३ । ४ । ५ । ८ । ९ । ११ आद्यद्वितीयरिपुसप्तमांत्यवर्ज्येषुसौराच्च । १ । २ । ६ । ७ । १२ एतानिवर्जयित्वा तान्येववराहमिहिरपठितानिस्थानानिजातानि । ३ । ४ । ५ । ८ । ९ । १० । ११ । तथाचस्वल्पजातके । शुक्रोलग्नादासुतनवाष्टलाभेषु १ । २ । ३ । ४ । ५ । ९ । ८ । ११ सव्ययश्चंद्रात् । स्वात्साज्ञिपुरविसुतात्रिधीसुखात्तिनवकर्मरंध्रेषु । वस्वंत्यायेष्वर्कान्नवदिग्लाभाष्टधीस्थितोजीवात् । ज्ञात्रिसुतनवायारिष्वायसुतापोक्लिमेषुकुजात् ॥ इतिशुक्राष्टकवर्गः ॥ ६ ॥

मंदःस्वात्रिसुतायशत्रुषुशुभः साज्ञांत्यगोभूमिजात्केंद्रायाष्टधनेष्विनादुपचयेष्वाद्येसुखेचोदयात्॥धर्मायारिदशांत्यमृत्युषुबुधाच्चंद्रात्रिषड्लाभगः षष्ठायांत्यगतः सितात्सुरगुरोः प्राप्त्यंत्यधीशत्रुषु ॥ ७ ॥

अथसौरस्याष्टकवर्गंशार्दूलविक्रीडितेनाह ॥ मंदःस्वात्रिसुतायशत्रुषुशुभइति । मंदः सौरः स्वादात्मीयस्थानात्तृतीयपंचमैकादशषष्ठस्थानेषुशुभः।साज्ञांत्यगोभूमिजात् । भूमिजाद्भौमादेष्वेवप्रागुक्तेषुसाज्ञांत्येषुगतःदशमद्वादशसहितेषुशुभः । ३।५।११।६।१०।१२ केंद्रायाष्टधनेष्विनात् इनात्सूर्यात्केंद्रैकादशाष्टमद्वितीयेषु शुभः १ । ४ । ७ । १० । ११।८ । २ उपचयेष्वाद्येसुखेचोदयात् उदयाल्लग्नात्तृतीयषष्ठदशमैकादशप्रथमचतुर्थेषुशुभः । ३ । ६ । १० । ११ । १ । ४ धर्मायारिदशांत्यमृत्युषुबुधात् । बुधाद्बुधस्थानान्नवमैकादशषष्ठदशमद्वादशाष्टमेषुशुभः ९ । ११ । ६ । १० । १२ । ८ चंद्रात्रिषड्लाभगः । चंद्रस्थानात्तृतीयषष्ठैकादशेषुशुभः । ३ । ६ । ११ षष्ठांत्यायगतः सितात् शुक्रस्थानात् षष्ठद्वादशैकादशेषुशुभः ६ । १२ । ११ । सुरगुरोःप्राप्त्यंत्यधीशत्रुषु सुरगुरोः जीवादेकादशद्वादशपंचमषष्ठेषुशुभः ११ । १२ । ५ । ६ । तथाचसत्यः । एकादश-

पंचमषष्ठगोर्कजः स्वाच्छुभस्तृतीयेच । ११ । ५ । ६ । ३ । स्थानान्निशाकरस्यतुपंचमवर्ज्येष्वथैष्वेव ११ । ३ । ६ येष्वात्मनोरविस्तेषुभास्करिस्तादृशो रविस्थानात् । आदित्याष्टकवर्गेपठ्यते । स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभत्रिकोणानि । हित्वेष्टः । ३ । ६ । १२ । ५ । ९ एतानिहित्वाजातानि । १ । २ । ४ । ७ । ९ । १० । ११ । ८ अत्रवराहमिहिरादभ्यधिकंनवमंस्थानंतच्च यवनेश्वरविरोधित्वाद्वराहमिहिरेणनोक्तम्।तथाचयवनेश्वरः । पापप्रवृत्तिनवमे विधत्तइति । जीवादिष्टः । षट्पंचमपश्चिमैकादशस्थश्च । ६ । ५ । १२ । ११ भ्रातृसुतविजयलाभांत्यकर्मगःपुष्कलोनृणाम् । भौमस्थानात्सौरिः । ३ । ५ । ६ । ११ । १२ । १० षष्ठांत्योपांत्यगः शुक्रात् । ६ । १२ । ११ दशमैकादशषष्ठाष्टमांत्यनवमोर्कजः सौम्यात् । १० । ११ । ६ । ८ । १२ । ९ स्थानादिष्टोलग्नाच्छुभस्तुलग्नाद्यथासूर्यः । आदित्याष्टकवर्गेपठ्यते । दशमैकादशषष्ठतृतीयगोलग्नगश्चतुर्थगश्चलग्नात्। १० । ११ । ६ । ३ । १ ।४तथाचस्वल्पजातके । स्वात्सौरस्त्रिसुतायारिगः । ३ । ५ । ११ । ६ कुजादंत्यकर्मसहितेषु । ३ । ५ । ११ । ६ । १२ । १० स्वायाष्टकेंद्रगोर्का । २ । ११ । ८ । १ । ४ । ७ । १० च्छुक्रात्षष्ठांत्यलाभेषु । ६ । १२ । ११ त्रिषडायगः शशांका । ३ । ६ । ११ द्धुदयात्ससुखाद्यकर्मगो । ३ । ६ । ११ । ४ । १ । १० थगुरोः । सुतषड्व्ययायगो ५ । ६ । १२ । ११ ज्ञाद्व्ययायारिपुदिङ्नवाष्टस्थः । १२ । ११ ६ । १० । ९ । ८ इतिसौरस्याष्टकवर्गः ॥ ७ ॥

इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादधिकफलविपाकंजन्मभात्तत्रदद्युः । उपचयगृहमित्रस्वोच्चगैःपुष्टमिष्टंत्वपचयगृहनीचारातिगैर्नेष्टसंपत् ॥ ८ ॥ इत्यष्टकवर्गः ॥

अथाष्टकवर्गफलनिरूपणार्थमालिन्याह॥इतिनिगदितमिति।इत्यनेनोक्तेनप्रकारेणयन्निगदितमुक्तंतदिष्टंनेष्टमन्यत्।यदन्यंनिगदितंतत्सर्वमनिष्टमशोभनम् । एतदुक्तंभवति । स्वादर्कःप्रथमायबंधुनिधनइत्यनेनपाठेनयान्युक्तानिस्थानानितेषांश्रेष्ठंफलम् । विशेषादधिकफलविपाकमेवमिष्टानिष्टयोः फलयोः विशेषात्संशोधनादधिकमिष्यते। तत्फलविपाकंभवति । एतज्जन्मभात् जन्मकालेयत्रस्थानेग्रहाः स्थिताः तस्मात्स्थानाच्छुभाशुभानिफलानिप्रयच्छंति नतथा तत्कालाक्रांतराशितः। एतदुक्तंभवति । यानिशुभस्थानान्याचार्येणपठितानि । तानिबिंदूपलक्षितानिकार्याणि । यान्यशुभानितानिरेखोपलक्षितानि कार्याणि। तदिष्टानिष्टयोः विशेषमंतरंकृत्वाऽवशिष्टस्यफलस्यपक्तिरिति । यत्रबिंद्वष्टकं जातंतत्रशुभफलंसंपूर्णम् । यत्रचषड्बिंदवस्तत्रपादोनफलम्।यत्रचबिंदुचतुष्टयं

तत्रार्द्धफलम्।यत्रबिंदूद्वौतत्रपादफलम्।अशुभफलस्यैवंरेखाभिः कल्पनाकार्या॥ तत्रचानिमिषपरमांशके विलग्नइत्यत्रप्रयोगे जातस्यांगारकस्याष्टकवर्गउदाह्रियते।तत्राचार्यपठितानिस्थानानिबिंदूपलक्षितानिकार्याणि। अपठितानिअशुभानिस्थानानिरेखोपलक्षितानिकार्याणि।तद्यथा ग्रहसंस्था मीनलग्नगतः शुक्रः। मेषेद्वितीयस्थानस्थोर्कः। तृतीयेवृषेचंद्रबुधौ पंचमस्थानेकर्कटस्थोजीवः। अष्टमेतुलायांशनैश्वरः। एकादशेमकरस्थोभौमः। अनयाग्रहसंस्थयाप्रदर्श्यतेन्यासः वक्रस्तूपचयेष्विनात्सतनयेष्वाद्याधिकेषूदयाच्चंद्राद्दिग्विफलेषुकेंद्रनिधनप्राप्त्यर्थगः स्वाच्छुभः। धर्मायाष्टमकेंद्रगोर्कतनयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्षड्व्ययलाभमृत्युषुगुरोः कर्मांत्यलाभारिषु ॥ अष्टकुंडलिकान्यासः। अथशुभाशुभफलविशेषः क्रियते। तत्रमेषेरेखापंचकंबिंदुत्रयंचजातं रेखात्रयंबिंदुत्रयंचापास्यद्वेरेखेजाते। तस्मादेवंविधेयोगेजातस्यसदैवचारवशान्मेषस्थोंगारकोष्टभागद्वयेनाशुभः। वृषेरेखापंचकं बिंदुत्रयंजातम्।रेखात्रयंबिंदुत्रयंचापास्यद्वेरेखेजातेतस्माद्वृषस्थोभौमोष्टभागद्वयेनाशुभोभवति। मिथुनेरेखापंचकं बिंदुत्रयंचजातम्। रेखात्रयंबिंदुत्रयंचापास्यद्वेरेखेजाते। तस्मिन्मिथुनस्थोभौमोष्टभागद्वयेनाशुभः। कर्कटेबिंदुचतुष्टयंरेखाचतुष्टयंचजातम्। तत्रनकिंचिदवशिष्यते। तेनतत्स्थानंनशुभंनाप्यशुभम्।समत्वान्मध्यमः। सिंहेबिंदुपंचकंरेखात्रयंचजातं। रेखात्रयंबिंदुत्रयंचापास्यबिंदुद्वयंजातं तस्मात्तस्यसदैवसिंहस्थोभौमोष्टभागद्वयेनशुभोभवति। कन्यायांरेखाषट्कंबिंदुद्वयंचजातम्। बिंदुद्वयंरेखाद्वयंचापास्यरेखाचतुष्टयंजातम्। तस्मात्कन्यास्थोभौमोष्टभागचतुष्टयेनाशुभः। तुलायां रेखात्रयंबिंदुपंचकंचजातं तत्ररेखात्रयं बिंदुत्रयंचापास्यबिंदुद्वयंजातम्। तेनतुलास्थोभौमोष्टभागद्वयेनसदैवशुभः। वृश्चिकेरेखासप्तकमेकोबिंदुः जातः तत्रबिंदुंरेखांचापास्यरेखाषट्कंजातं तस्माद्वृश्चिकस्थोभौमोष्टभागषट्केनाशुभः। धनुषिरेखाषट्कंबिंदुद्वयंचजातम् तत्ररेखाद्वयंबिंदुद्वयंचापास्यरेखाचतुष्टयंचजातं एवमष्टभागचतुष्टयेनधन्विस्थोभौमोसदैवाशुभः।मकरेरेखात्रयंबिंदुपंचकंचजातं तत्ररेखात्रयंबिंदुत्रयंचापास्यबिंदुद्वयंजातं।तेनमकरस्थोभौमोष्टभागद्वयेनशुभः। कुंभेरेखाचतुष्टयंबिंदुत्रयंचजातम्। अत्रचंद्रस्थानात् दशमस्थानम् भौमस्य समत्वादष्टमोबिंदुर्नजातस्तस्माद्रेखात्रयंबिंदुत्रयंचापास्य एकारेखाजाता तस्मात्कुंभस्थोष्टमभागेनैकेनाशुभः। मीनेरेखापंचकंबिंदुत्रयंचजातम्। रेखात्रयं

बिंदुत्रयंचापास्यरेखाद्वयंचजातम् । तस्मान्मीनस्थोभौमोष्टभागद्वयेनाशुभः । आस्यतोशुद्धौस्थापना । एवंशुभाशुभान्येकीकृत्याष्टौफलानिभवंति । तेषांसंशोधनंकृत्वायदवशिष्यतेतदादेश्यम् । यत्ररेखाचतुष्टयंबिंदुचतुष्टयंचभवति । तत्रसमं मध्यस्थोग्रहोभवति । यत्ररेखाष्टकंतत्रातीवाऽशुभः । यत्रबिंद्वष्टकंतत्रातीवशुभः । एवंजन्मकालाक्रांतराशिवशेनसर्वग्रहाणामष्टकवर्गःकार्यः । तथाचबादरायणः । एकेनयःशुभःस्यात्षड्भिःस्थानैः सपापदोभवति । यस्तुचतुर्भिर्नेष्टः सर्वफलेकल्पनाप्येवम् । ननुपूर्वमुक्तम् एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेतत् । इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादितिपुनरुक्तम् । उच्यते । नैतत्पुनरुक्तम् । अष्टकवर्गेविनायदुक्तमेकग्रहस्यसदृशफलयोर्विरोधइति । तत्रसदृशयोः फलयोर्विरोधेनाशोविज्ञेयः । यथासएवग्रहः कयापियुक्त्यासुवर्णदोभवति । सएवयुक्त्यंतरेणसुवर्णापहारीतदानसुवर्णदोभवति । नसुवर्णापहारीचेति । यदधिकंपरिपच्यतेतत्रतत्रापि । यदिकारणद्वयेनसुवर्णापहारीभवति । कारणेनैकेनसुवर्णदस्तथापिसुवर्णापहारीभवति । नसुवर्णदः । अथकारणद्वयेनसुवर्णदः कारणेनैकेनसुवर्णापहारी । तथापिकारणद्वयस्याधिक्यात्सुवर्णदएव । एवंतत्रसदृशेफलयोर्विरोधेनाशंवदेन्नासदृशयोः । इहतुपुनः असदृशेपिफलयोर्विरोधेनाशएवेति । तद्यथा । बादरायणयवनेश्वरादिभिरष्टकवर्गेभिहितम् । अस्यग्रहस्यस्थानादयंग्रहःस्वस्मिन्स्थानेतिष्ठमानइमानिशुभान्यशुभानिफलानिप्रयच्छतीति । तत्रासदृशान्यपियदितानिफलानिभवंतितथापितेषांशुभाशुभविरोधादेवनाशंवदेत् । विशेषादधिकफलविपाकंजन्मभात्तत्रदद्युरिति । यथाकश्चिद्ग्रहः केनचित्कारणेनसुवर्णदोभवत्यपरेणरूप्यापहारीच । तथाप्यसदृशयोरपिफलयोर्विरोधेदानहरणात्मकेनशुभोनाप्यशुभइतिकल्पनीयः । एवंस्थानाष्टकाद्यत्रस्थानेबहुभिः शुभोभवत्यल्पेनाशुभः तत्रशुभाशुभफलविशेषंकृत्वाशुभमेकंकल्पनीयम् । अनेनैवप्रकारेणस्थानसंज्ञामात्रेणस्थानशुभाशुभत्वमेवोक्तंनपृथक्फलनिर्देशोयवनेश्वरादिवत् । यद्येवंचाष्टकवर्गप्रधानंतत्संहितायांगोचरफलेचंद्रस्थानात् । किमितिपृथक्फलनिर्देशोवराहमिहिरेणकृतः । जन्मन्यायासदोर्कइत्येवमादि । अत्रोच्यते । तस्मादष्टकवर्गफलविशेषाद्यदतिरिच्यते । तदेववक्तव्यमिति । तदेवपूर्वप्रत्ययनार्थमतिप्रसिद्धत्वाद्गोचरस्यान्यमतमेवांगीकृत्वोक्तम् । तथाच यात्रायांतेनैवोक्तम् । यस्यगोचरफलप्रमाणतातस्यवेधफलमिष्यतेनवा । प्रायशोनबहुसंमतंत्विदंस्थूलमार्गफलदोहिगोचरइति । यवनेश्वरेणापिपृथक्पृथक्फलनिर्देशंकृत्वैतदेवाष्टकवर्गमंगीकृतम् । तथाचतद्वाक्यम् । फलाष्टवर्गेशुभपापलक्षेसमानकल्पावफलौप्रदिष्टौ । ज्यायांस्तुयस्तस्यफलंविधार्ययात्राविधानेचसमुद्भवेच । पृथक्फलनिर्देशंकृत्वाबादरायणोप्यष्टकवर्गमेवाह । कष्टश्रेष्ठेतुल्यसं-

ख्येफलेचेत्स्यातांनाशःफलयोस्तत्रवाच्यः । वाच्यापक्तियोतिरिक्तस्तयोः स्यात्थानेस्थानेकल्पनेयंप्रदिष्टा । उपचयगृहमित्रस्वोच्चगैः पुष्टमिष्टमिति । लग्नाच्चंद्राद्वायान्युपचयस्थानानितथामित्रक्षेत्राणिस्वोच्चंच । एतानिशुभस्थानानि शुभस्थानोपलक्षणानि । उपलक्षणत्वात्स्वक्षेत्रंमूलत्रिकोणंचगृह्यते । तत्र-लग्नाच्चंद्राद्वोपचयतोग्रहः स्वक्षेत्रस्थः स्वोच्चस्थोमित्रक्षेत्रस्थोमूलत्रिकोण-स्थश्चयदाशुभंफलंप्रयच्छति।तदातीवपुष्टंफलंप्रयच्छति । अत्रचश्रीदेवकीर्तिः । लग्नादुपचयसंस्थश्चंद्राद्वास्वगृहमूलतुंगस्थः । मित्रक्षेत्रगतोवाफलमतिशयितः शुभंदद्यात् ॥ लग्नाच्चंद्राद्वायान्यपचयस्थानानि । तथाशत्रुक्षेत्रनीचानिचतान्य-शुभानि । तेषुस्थितोग्रहोयदाशुभफलंप्रयच्छति।तदप्यतिनिकृष्टमिति । अर्थादे-वशुभगृहस्थःशुभंफलंप्रयच्छति। अशुभगृहस्थश्चशुभमल्पम्।किमेवंविधेषुस्थानेषु ग्रहस्यजन्मकालेस्थितिरन्वेष्या । किंवाचारवशात्फलकल्पनेति । उच्यते । ज-न्मकालिकमेवतत् । तत्रांतर्दर्शनतः।तथाचदेवकीर्तिः। अपचयराशौनीचेशत्रुक्षे-त्रेचजन्मकालेस्यात् । यस्तुसदद्यात्पापंफलमतिशयितोयथाकालम्॥यवनेश्वर-श्च । यस्तुस्वनीचारिगृहोपगोन्यैर्जितोरिदृष्टोल्पतनुर्विवर्णः । सूतावभूज्जन्मपतौ बलस्थेसजन्मगोवंध्यफलोनिरुक्तः । ईषत्सुहृत्स्वोच्चभृदिष्टदृष्टोमित्रर्क्षजन्मोप-चयेबलीयान्।योजातकेभूत्सतुजन्मसंस्थोदद्याच्छुभंनत्वशुभोप्यनिष्टम्॥तथाच सत्यः । जन्मन्युपचयभवनेएकोग्रहोह्युपचयेषुपुष्टफलः । अपचयभवनोपेताः पीडास्थानेह्यपचयाय ॥ फलकालेतुपुनश्चंद्रवर्ज्यमन्योग्रहोबलवानेवशुभमशुभं वापुष्टंफलंप्रयच्छतीति । चंद्रःशुभोपिबलरहितः पापफलोभवति । अत्रचश्रीदेवकीर्तिः । पुष्टमपुष्टंस्वफलंदद्यात्सबलोबलेनहीनस्तु । ग्रहइ-वसर्वश्चंद्रः कष्टफलोबलविहीनश्च ॥ तथाचसत्यः । स्नेहवपुरंशुबलैर्विवर्जितः शत्रुभेरिसंदृष्टः।ग्रहइवफलमनुदद्याच्चंद्रस्तुयदीदृशःकष्टः॥वराहमिहिरोप्यबलानां ग्रहाणांफलदाने असमर्थानांयात्रायामाह । नीचस्थाग्रहविजितारव्यभिभूता विरश्मयोहस्वाः । भुजगाइवमंत्रहताभवंतिकार्याक्षमालग्ने । यात्रायांयवनेश्व-रोपि । स्ववर्गसंस्थाबलिनोविशेषाद्ग्रहायथोद्दिष्टफलप्रदाःस्युः । नीचेजिताश्चा-रिगृहेल्पवीर्यास्तेघ्नंत्यनिष्टेष्टफलप्रवृत्तिम्।तत्रशास्त्रेषुयानिवाक्यान्युच्चादिसंस्था-नांशुभाशुभफलप्रवृत्तिप्रदर्शकानिनीचारिस्थानामशुभफलप्रदर्शकानितानिज-न्मसमयेज्ञेयानि । यानिचशुभानामशुभानांवाफलानिग्रहवशेनैवपुष्टिप्रदर्शका-नि तानि चारवशात्फलदानकालेग्रहस्यज्ञेयानीति ॥ ८ ॥

॥ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतावष्टकवर्गाध्यायोनवमःसमाप्तः ॥ ९ ॥

अथ कर्माजीवाध्यायोव्याख्यायते॥ अर्थाप्तिःपितृपितृपत्नि शत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः ॥ होरेंद्वोर्दशमगतै र्विकल्पनीयाभेंद्वर्कास्पदपतिगांशनाथवृत्त्या ॥ १ ॥

अथातःकर्माजीवाध्यायोव्याख्यायते।अनेनपुरुषेणकथंधनमर्जयितव्यमित्यध्यायेस्मिन्निरूप्यते । अत्रचप्रकारद्वयेनधनदाताग्रहोभवति।लग्नाच्चंद्रभाच्चयोदशमस्थोग्रहः सधनदाताभवति । अथलग्नचंद्रयोर्दशमस्थानेशून्येभवतस्तदालग्नचंद्रादित्यानां येयेदशमराशयस्तेषांयेऽधिपतयस्तेयेपुनर्वांशकेपुपुरुषस्यजन्मकालेस्थितास्तेषांनवांशकानांयेग्रहाअधिपतयस्तेग्रहाः धनदातारोभवंति । किंतुलग्नाच्चंद्राच्चयेदशमाग्रहाः तेअनेनप्रकारेणधनदातारोभवंति । किंतुभेंद्वर्कास्पदपतिगांशनाथाअनेनप्रकारेणेति। तत्रादावेवलग्नाच्चंद्राच्चदशमस्थोग्रहोयेनप्रकारेणधनंददाति तथाभेंद्वर्कास्पदपतिगांशनाथायेनप्रकारेणधनप्रदास्तत्प्रकारद्वयप्रदर्शनंप्रहर्षिण्याह ॥ अर्थाप्तिरिति । होरेंद्वोः लग्नचंद्रयोः दिवाकराद्यैः सूर्याद्यैः ग्रहैः दशमगतैः दशमस्थानाश्रितैः पित्रादिभ्योर्थाप्तिः धनप्राप्तिः विकल्पनीयाविचिंत्या । तत्रपुरुषस्यजन्मसमयेलग्नाच्चंद्राद्वायद्यादित्योदशमस्थोभवतितदापितृतोर्थाप्तिर्भवति । एवंचंद्रेलग्नाद्दशमगतेपितृपत्नितः मातुः सकाशात् । भौमेलग्नचंद्रयोर्दशमेसतिशत्रुतः रिपुतः। बुधेमित्रात् सुहृत्तः । गुरौभ्रातृतःसहजात् । शुक्रेस्त्रीतः योषितः । सौरेभृतकजनात्कर्मकरात् सेवकादित्यर्थः । अथकश्चिल्लग्नादशमेभवत्यपरश्चंद्रात्तदास्वस्यांस्वस्यामंतर्दशायांद्वावपिस्वाभिहितफलप्रदौभवतः । नकेवलम्।यावच्चंद्राल्लग्नाच्चबहवोपियदि दशमस्थाभवंति । तदासर्वएवस्वस्यांस्वस्यामंतर्दशायांस्वस्वप्रकारेणधनप्रदा भवंति । अथलग्नाच्चंद्राद्वानकश्चिद्दशमोभवति । तदाकोर्थप्रदोभवति । अतउक्तम् ।भेंद्वर्कास्पदपतिगांशनाथवृत्त्या।भंलग्नम्। इंदुश्चंद्रः। अर्कः आदित्यः । भंचेंदुश्चार्कश्चभेंद्वर्काः तेभ्यः प्रत्येकस्यास्पदाख्योयोराशिः दशमइत्यर्थः । तस्ययोधिपतिः ग्रहःसः यस्मिन्नवांशकेगतः स्थितस्तस्ययोनाथः स्वामीतस्ययावक्ष्यमाणावृत्तिः तयावृत्त्यातस्यधनप्रदोभवति । एवंलग्नाच्चंद्रादर्कादपिवक्तव्यम्। केचिदेवंव्याचक्षते।यथालग्नाच्चंद्राच्चयदादशमस्थाग्रहाभवंति तदालग्नचंद्रयोर्योबलवांस्तस्ययोदशमः सएवार्थप्रदोभवति । भेंद्वर्काणांयो बलीतस्यास्पदपतिगांशनाथवृत्त्याएकएवार्थप्रदोभवतीति ।तदयुक्तम् । यस्माद्त्रबलग्रहणंनास्तितस्मादेवंज्ञायते सर्वेभ्यएवभवति । पुरुषस्यबहुप्रकारधनागमदर्शनादिति । तथाचभगवान्मार्गिः। उदयाच्छशिनोवापियेग्रहादशमस्थिताः । तेसर्वेर्थप्रदाज्ञेयाःस्वदशासुयथोदिताः । लग्नार्कारात्रिनाथेभ्योदशमा-

धिपतिर्ग्रहः । यस्मिन्नवांशेतत्कालंवर्ततेतस्ययः पतिः । तद्वृत्त्याप्रवदेद्वित्तंजातस्यबहवोयदा । भवंतिवित्तदास्तेपिस्वदशासुविनिश्चितमिति ॥ १ ॥

**अर्कांशेतृणकनकोर्णभेषजाद्यैश्चंद्रांशेकृषिजलजांगनाश्रयाच्च ॥ धात्वग्निप्रहरणसाहसैःकुजांशेसौम्यांशेलिपिगणितादिकाव्यशिल्पैः ॥ २ ॥**

भेंद्वर्कास्पदपतिगांशनाथवृत्त्याइतियदुक्तमधुनातांवृत्तिप्रहर्षिणीद्वयेनाह । अर्कांशइति । भेंद्वर्कास्पदपतिगांशनाथोर्कः यदाभवति तदातृणैः सुगंधैः कनकेनसुवर्णेनच ऊर्णयाआविकलोम्ना भेषजेनऔषधेन । आदिशब्दाद्भिषक्क्रियियारोगिणांपरिचर्ययाचधनमाप्नोति । अथचंद्रांशोभवति । तदाकृष्याकर्षणेनजलजैः शंखमुक्ताप्रवालादिभिः अंगनाभिःस्त्रीभिः । जलजानांक्रयविक्रयैः । अंगनानांसमाश्रयणैरेतैः धनमाप्नोति । अथकुजांशोभौमनवांशोयदाभवति । तदाधातुभिः मृत्तिकादिभिःपक्वाभिःसुवर्णरूप्यताम्रादीनि भवंति । ताभिःप्राप्नोति । अथवाधातुभिःमनःशिलाहरितालहिंगुलकांजनप्रभृतिभिः अग्निनाग्निक्रिययाप्रहरणैः खड्गचक्रकुंतचापतोमराद्यैःसाहसैः असमीक्षितकार्यकरणैरथवास्वबलक्रियारंभैः धनमाप्नोति । अथसौम्यांशोबुधनवांशकोयदाभवति । तदालिपिगणितादिकाव्यशिल्पैः धनमाप्नोति । लिप्यक्षरविन्यासेनगणितेनआदिग्रहणाद्व्याख्यानेन यंत्रादिप्रयोगैः काव्यक्रियया शिल्पैः चित्रपुस्तकपत्रच्छेदबाणमाल्यरचनागंधयुक्तिप्रभृतिभिः धनमाप्नोति॥ २ ॥

**जीवांशेद्विजविबुधाकरादिधर्मैः काव्यांशेमणिरजतादिगोमहिष्यैः॥सौरांशेश्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः ॥ ३ ॥**

अथजीवांशेद्वितीयप्रहर्षिण्याह । जीवांशइति । जीवांशेद्विजविबुधाकरादिधर्मैरिति । अथजीवांशकोयदाभवति । तदाद्विजेभ्योब्राह्मणेभ्यः विबुधेभ्योदेवेभ्यः पंडितेभ्योवा । आकरेभ्यःसुवर्णादीनांलवणादीनां अंजनादीनांगजादीनांचसमुत्पत्तिस्थानेभ्यः । आदिग्रहणात्क्रियावादेन । धर्मैः यज्ञदानोपवासतीर्थगुरुसेवनादिभिः धनमाप्नोति । अथशुक्रनवांशकोयदाभवति । तदामणिभिः वज्रमरकतपद्मरागेंद्रनीलप्रभृतिभिः । रजतेनरूप्येण । आदिग्रहणात्सर्वैर्लोहैः गोभिः । तथामहिषकर्मणिमहिषेभ्योवासाधुः महिष्यः श्रेष्ठमहिष्यैः । धनमाप्नोति । अथसौरांशकोयदाभवति । तदाश्रमेण

अध्वगमनादिकेनवधेनचवध्यघातितया । अथवास्वशरीरताडनाद्येन । भारवाहनेननीचशिल्पैः स्वकुलानुचितैः कर्मभिःधनमाप्नोति । एवंजातककालवशात्पुरुषस्यधनागमंज्ञात्वा कालानुकालंकर्मेशचारवशात् कर्मसिद्धिमाह ॥ कर्मेशाध्युषितनवांशकर्मसिद्धिः । कर्मणिईशः कर्मेशः लग्नाद्दशमराशिः तदधिपः कर्मेशः । सचारवशाद्यस्मिन्नवांशकेअध्युषितोभवति । व्यवस्थितोभवतितस्ययःस्वामीतस्ययानिकर्माणि। अर्कांशेतृणकनकोर्णभेषजाद्यैरित्यादीनि । तत्समानानांसिद्धिर्भवति । तानिप्रारब्धानिसिध्यतीति । अत्रकेचित्कर्मेशाध्युषितसमानकर्मसिद्धिरितिपठंति । अत्रचनवांशग्रहणंनास्तिप्रकृतत्वात्प्रागनुवृत्तेः । नवांशकोव्याख्यायते । तथाचभगवान्गार्गिः । लग्नकर्माधिपोयस्मिन्नवांशेवर्ततेग्रहः । चारक्रमेणतत्तुल्यांकर्मणांसिद्धिमादिशेत् । ज्ञातजातकस्येदंक्रियाश्रयंकर्मकर्मेशाध्युषितनवांशकपतिकर्मणांयथादर्शितानांप्रारब्धानांकालानुकालंसिद्धिर्वक्तव्यानान्येषामिति ॥ ३ ॥

मित्रारिस्वगृहगतैर्ग्रहैस्ततोर्थंतुंगस्थेबलिनिचभास्करेस्ववीर्यात् ॥ आयस्थैरुदयधनाश्रितैश्चसौम्यैः संचिंत्यंबलसहितैरनेकधास्वम् ॥ ४ ॥

## ॥ इतिकर्माजीवाध्यायः ॥

अथधनागमज्ञानंप्रहर्षिण्याह । मित्रारिस्वगृहगतैरिति । चंद्रलग्नयोः ये दशमगाग्रहास्तदभावेचयेभेंद्वर्कास्पदपतिगांशनाथाः तेचयदिजन्मकालेमित्रगृहस्थिताभवंति तदास्वांतर्दशाकालेमित्रगृहेस्थिताभवंति । ततस्तस्मादेवमित्रात् मित्रतः धनप्रदाभवंति । अथारिगृहस्थाः शत्रुगृहगाभवंति । तदारितएव । अथस्वगृहस्थास्तदास्वगृहादेवधनप्रदाभवंति तुंगस्थे बलिनीति । यस्यपूर्वविधिनाभास्करः सूर्योधनप्रदोज्ञातः । तस्मिंस्तुंगस्थेउच्चगेमेषप्राप्तेतद्बलिन्यन्यैर्बलैः कालबलाद्यैर्युक्तैस्तदासपुरुषः स्ववीर्याद्धनमर्जयति । स्वविक्रमार्जितधनोभवतीत्यर्थः । आयस्थैरिति । सौम्यैः शुभग्रहैः जन्मन्यायसंस्थैरेकादशस्थानगतैः उदयधनाश्रितैश्चलग्नगैः द्वितीयस्थानगतैर्वातैश्चबलसहितैः वीर्यवद्भिः जातः अनेकधाबहुभिः प्रकारैः स्वंधनंप्राप्नोतीति । संचिंत्यंनिश्चयः कार्यो येनयेनप्रकारेणधनार्जनमाकांक्षते तेनतेनप्रकारेणायत्नादवाप्नोतीत्यर्थः । तथाचभगवान्गार्गिः । धनदाजन्मसमये मित्रारिस्वगृहोपगाः । यस्यतस्यधनंदद्युर्मित्रारिस्वगृहोद्भवम् ॥ धनदोभास्क-

शीयस्यतुंगेबलसमन्वितः । भवेज्जन्मनियस्यस्याद्वित्तमात्मोद्यमार्जितम्।लाभा-
र्थलग्नगैः सौम्यैर्येनयेनैवकर्मणा । धनार्जनंप्रार्थयतेतेनायत्नात्समश्नुतइति ॥४॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौकर्माजीवाध्यायोदशमः ॥ १० ॥

अथ राजयोगाध्यायः ॥ प्राहुर्यवनाः स्वतुंगगैः क्रूरैः क्रूरमतिर्महीपतिः ॥ क्रूरैस्तुनजीवशर्मणः पक्षेक्षित्यधिपःप्रजायते ॥ १ ॥

अथातोराजयोगाध्यायोव्याख्यायते । तत्रादावेवयवनानांजीवशर्मणश्चमतंवैतालीयेनाह ॥ त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंतिराजानः॥इतिसर्वजातकेषुप्रसिद्धम् । तत्रैतावद्यवनानांमतभेदः । यस्यजन्मसमयेक्रूरैः पापग्रहैः स्वतुंगगैः स्वोच्चस्थैर्जातोमहीपतीराजाभवति । किंतु क्रूरमतिः पापबुद्धिरिति प्राहुः कथयंति । अर्थादेवसौम्यैरुच्चगतैः महीपतिर्धर्मात्मा चभवति । मिश्रैरुच्चगतैर्मिश्रस्वभावोराजाइति ।एषएवार्थोमणित्थेनाभिहितः। तथाचतद्वाक्यम् । पापैः पापमतिः स्वोच्चगतैर्धर्मवांस्तथासौम्यैः। व्यामिश्रैर्मिश्रमतिः पृथ्वीशोजायतेमनुजः ॥ क्रूरैस्त्विति । जीवशर्मणः पक्षेतन्मतेक्रूरैस्तूच्चगतैः क्षित्यधिपो न राजाप्रजायते। किंतुराज्ञातुल्योधनवान्भवति । तथाचतद्वाक्यम् । पापैरुच्चगतैर्जातानभवंति नृपानराः। किंतुवित्तान्वितास्तेस्युः क्रोधिनः कलहप्रियाइति । वराहमिहिरस्ययवनेश्वरमतमभिप्रेतम् । यतस्तेनसामान्येनैवस्वल्पजातकेभिहितम्।त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंतिराजानः। पंचादिभिरन्यकुलोद्भवाश्चतद्वत्त्रिकोणगतैरिति ॥ १ ॥

वक्रार्कजार्कगुरुभिः सकलैस्त्रिभिश्चस्वोच्चेषुषोडशनृपाः कथितैकलग्ने ॥ द्वेकाश्रितेषुचतथैकतमेविलग्नेस्वक्षेत्रगेशशिनिषोडशभूमिपाःस्युः ॥ २ ॥

अथद्वात्रिंशद्राजयोगान्वसंततिलकेनाह॥वक्रार्कजाइति। वक्रोंगारकः । अर्कजः सौरः । अर्कः सूर्यः गुरुर्जीवः एतैः वक्रार्कजार्कगुरुभिः भौमशनिसूर्यजीवैः सकलैः सर्वैश्चतुर्भिरपिस्वोच्चेषुस्थितैः कथितैकलग्नेएषांकथितग्रहाणांचतुर्णांमध्यादेकैकस्मिँल्लग्नगतेचत्वारोराजयोगाभवंति । तथात्रिभिश्च एषामेवमध्यात्त्रिभिः स्वोच्चगतैः तेषुमध्यादेकैकस्मिन् लग्नगे कथितैकलग्नेद्वादशराजयोगाभवंति । एवंषोडशद्व्येकाश्रितेष्विति । एतेषांमध्याद्वाभ्यामुच्चगताभ्यामनयोर्मध्यादेकस्मिँल्लग्नगतेशशिनिचंद्रेस्वक्षेत्रगेकर्कटस्थेतेषामेवव-
क्रार्कजार्कगुरूणांमध्याद्द्वद्वयेस्वोच्चाश्रितेतदेकतमेविलग्नगेद्वादशराजयोगाभ-

वंति । एकाश्रितेषुच तेषामेवमध्यादेकस्मिन्नुचाश्रितेतास्मिन्नेवविलग्नगेस्वक्षेत्रगते चंद्रमसिचत्वारोराजयोगाभवंति । एवंषोडश श्लोकपूर्वोक्तैः सहद्वात्रिंशत् । तद्यथा । मेषेर्कः कर्कटेजीवः तुलेसौरः मकरेकुजः शेषायथेष्टम् । ईदृश्यांग्रहसंस्थायांमेषलग्नगतेएकोयोगः १ कर्कटेद्वितीयः २ तुलेतृतीयः ३ मकरेचतुर्थः ४ एवंवक्रार्कजार्कगुरुभिः सकलैः स्वोच्चेषु तदेकतमेलग्नेचत्वारोराजयोगाः। अथत्रिभिः तद्यथा। मेषेर्कः कर्कटेजीवः तुले सौरः शेषायथेष्टम् । ईदृश्यामपिग्रहसंस्थायांमेषलग्नेएकोयोगः । कर्कटेद्वितीयः तुलेतृतीयः । पूर्वैः सहसप्त ७ । अथमेषेर्कः कर्कटेजीवः मकरेभौमः शेषायथेष्टम् । ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः । कर्कटेद्वितीयः मकरेतृतीयः । पूर्वैः सहदश १० । अथमेषेर्कः तुलेसौरः मकरेभौमः शेषायथेष्टम् । ईदृश्यां चग्रहसंस्थायांमेषलग्नेएकः तुलेद्वितीयः । मकरेतृतीयः ३ एवंत्रयोदश १३ । अथकर्कटेजीवः । तुलेसौरः।मकरेभौमः । शेषायथेष्टम् । ईदृश्यांचग्रहसंस्थायां कर्कटेएकः।तुलेद्वितीयः । मकरेतृतीयः३एवंषोडशराजयोगाः१६चतुर्भिः।त्रिभिः स्वोच्चगतैः । तदेकतमेविलग्नेइतिगतम् । द्व्येकाश्रितेष्वित्यादियोगेषुयावत्कर्कटे चंद्रमानभवति तावद्योगाएवनभवंति । तद्यथा । द्व्याश्रितेषुग्रहेषुस्वक्षेत्रगते चचंद्रेद्वादशराजयोगाव्याख्यायंते । तद्यथा । मेषेर्कःकर्कटेचंद्रजीवौशेषायथेष्टम् । ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः।कर्कटेद्वितीयः२ । अथमेषेर्कः । कर्कटेचंद्रः । तुलेसौरः । शेषायथेष्टम् । तदामेषेतृतीयः ३ तुलेचतुर्थः ४ । अथमेषेर्कः । कर्कटेचंद्रः मकरेभौमः शेषायथेष्टम् । तदामेषेपंचमः ५ मकरेषष्ठः ६ अथकर्कटेचंद्रजीवौ । तुलेसौरः । शेषायथेष्टम् । तदाकर्कटेसप्तमः ७ तुलेऽष्टमः ८ । अथकर्कटस्थौचंद्रजीवौ । मकरेभौमः । शेषायथेष्टम् । तदाकर्कटेनवमः ९ मकरेदशमः१०।अथतुलेसौरः । मकरेभौमः । कर्कटेचंद्रः । शेषायथेष्टम् । तदातुलेएकादश ११ मकरेद्वादश १२ द्व्याश्रितेष्वितिगतम् । अथैकाश्रितेषुकर्कटस्थेचंद्रेमेषस्थेर्केमेषलग्नेएकः १ कर्कलग्नेतद्गतयोश्चंद्रजीवयोः द्वितीयः २ कर्कटस्थेचंद्रेतुलास्थेसौरेतस्मिन्नेवलग्नेतृतीयः ३ कर्कटस्थेचंद्रेमकरस्थेभौमेतस्मिन्नेवलग्नेचतुर्थः ४ एवंपूर्वैर्द्वादशभिःसहषोडश । श्लोकपूर्वोक्तैः षोडशभिः सहद्वात्रिंशद्राजयोगा३२व्याख्याताः ॥ २ ॥

**वर्गोत्तमगतेलग्नेचंद्रेवाचन्द्रवर्जितैः॥ चतुराद्यैर्ग्रहैर्दृष्टेनृपाद्वाविंशतिःस्मृताः ॥ ३ ॥**

अथचतुश्चत्वारिंशद्राजयोगानुष्टुभाह॥ वर्गोत्तमगतेलग्नइति । लग्नेजन्मकालिकेलग्नेवर्गोत्तमगतेस्वनवांशकस्थइत्यर्थः । तस्मिंश्चंद्रवर्जितैरन्यग्रहैश्चतु-

राद्यैः दृष्टेचतुर्भिःपंचभिः षड्भिर्वावलोकितेद्वाविंशतिराजयोगाः स्मृताः उक्ताः। अत्रलग्नेचंद्रेणदृश्यमानेनयोगभंगः किंतुपश्यतांमध्येनगण्यते। सतुपश्यतुमावापश्यतु अन्यैश्चतुरादिभिर्ग्रहैर्दृष्टेराजयोगोभवति । एवंवर्गोत्तमगतेलग्नेद्वाविंशतियोगाः २२ एवंचंद्रेवर्गोत्तमांशस्थेचतुराद्यैर्ग्रहैः दृष्टेद्वाविंशतियोगाभवंति । एवंचतुश्चत्वारिंशत् ४४ अत्रलग्नेचंद्रेवाचतुर्भिर्दृश्यमानेपंचदश १५ विकल्पाभवंति।पंचभिःदृश्यमाने६षड्विकल्पाभवंति।षड्भिरेकः१ एवंद्वाविंशतिः २२ तद्यथा । लग्नेचंद्रेवारविभौमबुधगुरुभिःदृश्यमानेएको योगः। रविभौमबुधसितैःद्वितीयः २ रविभौमबुधसौरैः तृतीयः ३ रविभौमजीवसितैश्चतुर्थः ४ रविभौमजीवसौरैःपंचमः ५ रविभौमशुक्रसौरैःषष्ठः ६ रविबुधजीवशुक्रैःसप्तमः ७ रविबुधजीवसौरैरष्टमः ८ रविबुधशुक्रसौरैर्नवमः९ रविजीवशुक्रसौरैर्दशमः १० भौमबुधजीवशुक्रैरेकादशः ११ भौमबुधजीवसौरैर्द्वादशः १२ भौमबुधशुक्रसौरैस्त्रयोदशः १३ भौमजीवशुक्रसौरैश्चतुर्दशः१४ बुधजीवशुक्रसौरैःपंचदशः १५ एवंचतुर्भिरपिविकल्पैःपंचदश । अथपंचविकल्पाः। रविभौमबुधजीवशुक्रैरेकः १ रविभौमबुधजीवसौरैर्द्वितीयः २ रविभौमबुधशुक्रसौरैस्तृतीयः ३ रविभौमजीवशुक्रसौरैश्चतुर्थः ४ रविबुधजीवशुक्रसौरैःपंचमः ५ भौमबुधजीवशुक्रसौरैःषष्ठः ६ एवंपंचविकल्पैःषट् । पूर्वोक्तैः पंचदशभिःसहैकविंशतिः २१ रविभौमबुधजीवशुक्रसौरैःषड्भिरेकः१एवंद्वाविंशतिः २२ लग्नाच्चंद्राच्चैवमेवंचतुश्चत्वारिंशत् ४४ परमार्थेनैतद्योगद्वयमेव। तद्यथा। वर्गोत्तमगतेचंद्रेचतुराद्यैर्दृष्टेएकः। लग्नेद्वितीयः। संख्याप्रदर्शनंगणितप्रदर्शनार्थम् । अत्रैवचंद्रमसोयदिराशौराशौवर्गोत्तमावस्थितिंनिरूप्यगणितंक्रियते तदैतेषामेवयोगानांचतुःषष्ट्यधिकंशतद्वयंसंभवति । एवंप्रत्येकस्मिन् लग्नेवर्गोत्तमस्थेचतुःषष्ट्यधिकमेवयोगशतद्वयम् । एवंचंद्रलग्नयोर्योगानामेकीकृतानांपंचशतान्यष्टाविंशत्यधिकानिभवंति। तथाचमांडव्यः। विलग्नभवनंगतेवलयुतेचवर्गोत्तमे चतुःप्रभृतिभिर्ग्रहैः शशिनिवासमालोकिते ॥ ससंभवति पार्थिवः खलुकृपाणपाणीरणेकदाचिदपिवीक्षतेरिपुजनोन यस्याननम् ॥ ३ ॥

यमेकुंभेर्केजेगविशशिनितैरेवतनुगैर्नृयुक्सिंहालिस्थैः शशिजगुरुवक्रैर्नृपतयः॥ यमेंदूतुंगेंगेसवितृशशिजौषष्ठभवनेतुलाजेंदुक्षेत्रैः ससितकुजजीवैश्चनरपौ ॥ ४ ॥

अथशिखरिण्यापंचयोगानाह । यमेइति । यमेसौरेकुंभस्थेअर्केसूर्येऽजेमेषस्थे सति । शशिनिचंद्रेगविवृषस्थितेतैरेवतनुगैः तेषांग्रहाणामेकतमेतनुगेलग्न-

स्थेनकेवलं यावच्छशिजगुरुवक्रैः बुधजीवभौमैः नृयुक्सिंहालिस्थैः मिथुनहरिवृश्चिकस्थैः जातानृपतयोराजानोभवंति। चकारोत्रलुप्तोद्रष्टव्यः। तत्रैतज्जातम्। सौरः कुंभे। रविर्मेषे। चंद्रोवृषे। बुधोमिथुने। जीवः सिंहे। भौमोवृश्चिके। ईदृश्यांग्रहसंस्थायांकुंभलग्नेएकोयोगः १। मेषेद्वितीयः २ वृषेतृतीयः। यमेंदूइति। सौरचंद्रौ तुंगेउच्चेनकेवलंयावदंगेतनौलग्नेइत्यर्थः। सवितृशशिजौमूर्यबुधौषष्ठभवने कन्यायां तुलाजेंदुक्षेत्रैः तुलाप्रसिद्धः। अजोमेषः। इंदुक्षेत्रंकर्कटः एतैः। यथासंख्यंससितकुजजीवैः शुक्रभौमगुरुयुक्तैः नरपौद्वौराजयोगाविति। तत्रैतज्जातम्। तुलेसौरः। वृषेचंद्रः। कन्यायामर्कबुधौ। तुलेशुक्रः। मेषभौमः। कर्कटेजीवः। ईदृश्यां ग्रहसंस्थायांतुलालग्नेएकोयोगः १ वृषेद्वितीयः २ पूर्वैस्त्रिभिः सहजपंच ५। अत्रषष्ठभवनेषष्ठराशौलग्नात्केचिदिच्छंति। एतदयुक्तम्। यस्मात्तुलस्थेशुक्रेमीनस्थस्यार्कस्यासंभवः। तथाचबादरायणः। तुललग्नेसितसौरौमेषेभौमोगुरुः कुलीरगतः। कन्यायांरविशशिजौजातोनृपतिर्वृषेसचंद्रेवा ॥ ४ ॥

**कुजेतुंगेर्केंद्वोर्द्धनुषियमलग्नेचकुपतिः पतिर्भूमेश्चान्यः क्षितिसुतविलग्नेसशशिनि ॥ सचंद्रे सौरेस्तेसुरपतिगुरौचापधरगे स्वतुंगस्थेभानावुदयमुपयातेक्षितिपतिः ॥ ५ ॥**

अथान्यद्राजयोगत्रयंशिखरिण्याह ॥ कुजेतुंगेऽर्केंद्वोरिति। कुजेभौमेतुंगस्थे उच्चस्थेमकरगतेइत्यर्थः। अर्केंद्वोः सूर्यशशिनोः धनुषिचापेस्थितयोः। यमलग्नेयत्रतत्रराशौलग्नेशनैश्चरेलग्नगतेमकरस्थइत्यर्थः। एवंविधेयोगेजातः कुपतिः भूमीशः नृपतीराजाभवति। यमलग्नेइति। मकरकुंभयोः अन्यतमेलग्नेइतिव्याख्यातम्। यमस्यलग्नेयमलग्नइति। कैश्चित्यत्रतत्रराशावस्थितेसौरेलग्नगेइतिव्याख्यातम्। तच्चायुक्तम्। यस्माद्बादरायणः। लग्नेसौरस्तुंगेभौमश्चंद्रादित्यौचापंप्राप्ताविति। अस्माकंप्रथमाव्याख्यासाध्वीप्रतिभाति। यस्मान्मांडव्यः। आदित्यश्चनिशाकरश्चभवतोवागीशराशौयदासार्द्धंभास्करिणास्ववीर्यसहितः प्राप्तोमृगेमंगलः। प्राप्नोतिप्रभवंतदाससुकृतीक्ष्मापालचूडामणिस्त्रस्यंतिप्रतिपंथिनोरणमुखेयस्मात्कृतांतादिव॥ पतिर्भूमेश्चान्यइति। अस्मिन्नेवयोगेक्षितिसुतविलग्नेभौमेसशशिनिचंद्रयुक्तेलग्नगेक्षितिसुतोंगारकः। तस्मिन्स्वोच्चस्थेशशिनाचंद्रमसायुक्तेर्केधनुर्धरस्थेराजयोगः। तत्रैतज्जातंमकरलग्नेचंद्रांगारकयुतेधनुर्धरगतेऽर्केऽन्योद्वितीयोभूमेः पतिर्भवति राजाइत्यर्थः। अत्रचबादरायणः। भानुश्चापेसेंदुर्भौमस्तुंगप्राप्तोलग्नेवास्यात्। सचंद्रेसौरेस्तइति। सौरेशनैश्चरेसचंद्रेशशियुक्तेतथाभूतेस्तेसप्तमस्थानगते तथासुरपतिगुरौ

चतुर्विकल्पाः । भौमबुधजीवशुक्राः । भौमबुधजीवसौराः । भौमजीवशुक्रसौराः । भौमबुधशुक्रसौराः । बुधजीवशुक्रसौराः । एवंचतुर्विकल्पाःपंच ५। अथ पंचविकल्पाः । भौमबुधजीवशुक्रसौराः । एवंपंचविकल्पएकः १ । एवमेकत्रिंशत् ३१ सुनफायोगाःउत्पादिताः । अनेनैवप्रकारेणद्वादशस्थैः अनफाभेदाः एकत्रिंशत्।अथदुरुधुराविकल्पाः।एषांलोष्टकप्रस्ताराभावात्स्वबुद्धयेच्छाविकल्पैः क्रमशोभिनीयेति।न्यायेनव्युत्पत्तिः । एकोद्वितीये।द्वितीयोद्वादशे। एकोद्वादशे। द्वितीयो द्वितीये। तद्यथा । भौमबुधौ १ बुधभौमौ २ भौमजीवौ ३ जीवभौमौ ४ भौमशुक्रौ ५ शुक्रभौमौ ६ भौमसौरौ ७ सौरभौमौ ८ बुधजीवौ ९ जीवबुधौ १० बुधशुक्रौ ११ शुक्रबुधौ १२ बुधसौरौ १३ सौरबुधौ १४ जीवशुक्रौ १५ शुक्रजीवौ १६ जीवसौरौ १७ सौरजीवौ १८ शुक्रसौरौ १९ सौरशुक्रौ २० अथैकोद्वितीये । द्वादशेद्वौ । द्वितीयेद्वौ । द्वादशेचैकः । तद्यथा । भौमःबुधजीवौ १ बुधःजीवभौमौ २ जीवःशुक्रबुधौ ३ बुधःशुक्रभौमौ ४ भौमः बुधसौरौ५ बुधःसौरभौमौ६भौमःजीवशुक्रौ७जीवःशुक्रभौमौ८भौमः जीवसौरौ ९भौमःसौरभौमौ१० भौमःशुक्रसौरौ११शुक्रःसौरभौमौ १२ बुधःभौमजीवौ१३ जीवःभौमबुधौ १४ बुधःभौमशुक्रौ .१५ भौमःशुक्रबुधौ १६ बुधःभौमसौरौ १७ भौमःसौरबुधौ १८ बुधःजीवशुक्रौ १९ जीवःशुक्रबुधौ २० बुधःजीवसौरौ २१ जीवःसौरबुधौ २२ बुधःशुक्रसौरौ २३ शुक्रःसौरबुधौ २४ जीवःभौमबुधौ २५ भौमःबुधजीवौ २६ जीवःभौमशुक्रौ २७ भौमःशुक्रजीवौ २८ जीवःभौमसौरौ २९ भौमःसौरजीवौ ३० जीवःबुधशुक्रौ ३१ बुधःशुक्रजीवौ ३२ जीवःबुधसौरौ ३३ बुधःसौरजीवौ ३४ जीवःशुक्रसौरौ ३५ शुक्रःसौरजीवौ ३६ शुक्रःभौमबुधौ ३७ भौमःबुधशुक्रौ ३८ शुक्रःभौमजीवौ ३९ भौमःजीवशुक्रौ ४० शुक्रःभौमसौरौ ४१ भौमःसौरशुक्रौ ४२ शुक्रःबुधजीवौ ४३ बुधःजीवशुक्रौ ४४ शुक्रःबुधसौरौ ४५ बुधःसौरशुक्रौ ४६ शुक्रः जीवसौरौ ४७ जीवःसौरशुक्रौ ४८ सौरःभौमबुधौ ४९ भौमःबुधसौरौ ५० सौरःभौमजीवौ ५१ भौमः जीवसौरौ ५२ सौरः भौमशुक्रौ ५३ भौमःशुक्रसौरौ ५४ सौरः बुधजीवौ ५५ बुधः जीवसौरौ ५६ सौरः बुधशुक्रौ ५७ बुधः शुक्रसौरौ ५८ सौरः जीवशुक्रौ ५९ जीवः शुक्रसौरौ ६० एवमेकत्रजाताः ८० । अथैकोद्वितीये । द्वादशेत्रयः । तद्यथा । भौमः बुधजीवशुक्राः १ बुधजीवशुक्राः भौमः २ भौमः बुधजीवसौराः ३ बुधजीवसौराः भौमः ४ भौमः बुधशुक्रसौराः ५ बुधशुक्रसौराः भौमः ६ भौमः जीवशुक्रसौराः ७ जीवशुक्रसौराः भौमः ८ बुधः भौमजीवशुक्राः ९ भौमजीवशुक्राः बुधः १० बुधः भौमजीवसौराः ११ भौमजीवसौराः बुधः १२

बुधः भौमशुक्रसौराः १३ भौमशुक्रसौराः बुधः १४ बुधः जीवशुक्रसौराः १५ जीवशुक्रसौराः बुधः १६ जीवः भौमबुधशुक्राः १७ भौमबुधशुक्राः जीवः १८ जीवः भौमबुधसौराः १९ भौमबुधसौराः जीवः २० एवमेकत्र १०० । जीवः भौमशुक्रसौराः १ भौमशुक्रसौराः जीवः २ जीवः बुधशुक्रसौराः ३ बुधशुक्रसौराः जीवः ४ शुक्रः भौमबुधजीवाः ५ भौमबुधजीवाः शुक्रः ६ शुक्रः भौमबुधसौराः ७ भौमबुधसौराः शुक्रः ८ शुक्रः भौमजीवसौराः ९ भौमजीवसौराः शुक्रः १० शुक्रः बुधजीवसौराः ११ बुधजीवशुक्राः सौरः १२ सौरः भौमबुधजीवाः १३ भौमबुधजीवाः सौरः १४ सौरः भौमबुधशुक्राः १५ भौमबुधशुक्राः सौरः १६ सौरः भौमजीवशुक्राः १७ भौमजीवशुक्राः सौरः १८ सौरः बुधजीवशुक्राः १९ बुधजीवशुक्राः सौरः २० एवमेकत्र १२० । अथद्वितीयएकोद्वादशेचत्वारः । चत्वारोद्वितीयेद्वादशेचैकः । तद्यथा । भौमः बुधजीवशुक्रसौराः १ बुधजीवशुक्रसौराः भौमः २ बुधः भौमजीवशुक्रसौराः ३ भौमजीवशुक्रसौराः बुधः ४ जीवः भौमबुधशुक्रसौराः ५ भौमबुधशुक्रसौराः जीवः ६ शुक्रः भौमबुधजीवसौराः ७ भौमबुधजीवसौराः शुक्रः ८ सौरः भौमबुधजीवशुक्राः ९ भौमबुधजीवशुक्राः सौरः १० एवमेकत्र १३० । अथद्वौद्वादशेद्वावेवद्वितीये ।तद्यथा। भौमबुधौजीवशुक्रौ१ जीवशुक्रौभौमबुधौ २ भौमबुधौजीवसौरौ३ जीवसौरौभौमबुधौ४भौमबुधौशुक्रसौरौ५शुक्रसौरौ भौमबुधौ ६ भौमजीवौशुक्रबुधौ ७ शुक्रबुधौभौमजीवौ ८ भौमजीवौ बुधसौरौ ९ बुधसौरौभौमजीवौ १० भौमजीवौशुक्रसौरौ ११ शुक्रसौरौभौमजीवौ १२ भौमशुक्रौबुधजीवौ१३बुधजीवौभौमशुक्रौ १४ भौमशुक्रौबुधसौरौ१५ बुधसौरौ भौमशुक्रौ १६ भौमशुक्रौजीवसौरौ १७ जीवसौरौभौमशुक्रौ १८ बुधजीवौभौमसौरौ १९ भौमसौरौबुधजीवौ २० एवमेकत्र १५० । भौमसौरौ बुधशुक्रौ१ बुधशुक्रौभौमसौरौ २ भौमसौरौजीवशुक्रौ ३ जीवशुक्रौभौमसौरौ ४ बुधजीवौशुक्रसौरौ ५ शुक्रसौरौबुधजीवौ ६ बुधशुक्रौ जीवसौरौ ७ जीवसौरौबुधशुक्रौ ८ जीवशुक्रौबुधसौरौ ९ बुधसौरौजीवशुक्रौ १० एवमेकत्र १६० । द्वौद्वितीयेत्रयोद्वादशेद्वादशेद्वौत्रयोद्वितीयेच । तद्यथा । भौमबुधौ जीवशुक्रसौराः १ जीवशुक्रसौराः भौमबुधौ २ भौमजीवौ बुधशुक्रसौराः ३ बुधशुक्रसौराः भौमजीवौ ४ भौमशुक्रौ बुधजीवसौराः ५ बुधजीवसौराः भौमशुक्रौ ६ भौमसौरौबुधजीवशुक्राः ७ बुधजीवशुक्राः भौमसौरौ ८ बुधजीवौभौमशुक्रसौराः ९ भौमशुक्रसौराः

बुधजीवौ १० एवमेकत्र १७० । बुधशुक्रौभौमजीवसौराः १ भौमजीवसौराः बुधशुक्रौ २ बुधसौरौभौमजीवशुक्राः ३ भौमजीवशुक्राः बुधसौरौ ४ जीवशुक्रौभौमबुधसौराः ५ भौमबुधसौराः जीवशुक्रौ ६ जीवसौरौभौमबुधशुक्राः ७ भौमबुधशुक्राः जीवसौरौ ८ शुक्रसौरौभौमबुधजीवाः ९ भौमबुधजीवाः शुक्रसौरौ १० एवमेकत्र १८० । एवंदुरुधुरायोगभेदः । शतमशीत्यधिकंप्रदर्शितम् ॥ ४ ॥

स्वयमधिगतवित्तः पार्थिवस्तत्समोवाभवतिहिसुनफायांधीधनख्यातिमांश्च ॥ प्रभुरगदशरीरःशीलवान्ख्यातकीर्तिर्विषयसुखसुवेषोनिर्वृतश्चानफायाम् ॥ ५ ॥

अथसुनफानफयोर्योगजातस्यस्वरूपविज्ञानंमालिन्याह । स्वयमिति । स्वयमात्मनाधिगतमर्जितंवित्तंयेनस्वबाह्वर्जितधनः पार्थिवोराजाभवति । तत्समोवा । यदिराजानभवतितदाराजतुल्यः धीधनख्यातिमान् । बुद्धिवित्तकीर्तिभिर्युक्तः । एवंविधः सुनफायांयोगेजातोभवति । प्रभुरिति । प्रभुरप्रतिहताज्ञः । अगदशरीरो नीरुजदेहः अविद्यमानागदारोगायस्य । शीलवान् दमविनयादिभिर्गुणैर्युक्तः । ख्यातकीर्तिः प्रथितयशाः जनविदितसद्गुणः । विषयसुखः शब्दस्पर्शरूपरसगंधाविषयाः तत्सुखैर्युक्तः । ननुकिंविषयव्यतिरिक्तसुखमस्ति । उच्यते । अस्ति । यद्योगिनांमनः । सुखंसुवेषः अनुलेपनालंकारमाल्यसद्वस्त्रधारणशीलः निर्वृतः मनोदुःखविनिर्मुक्तः एवंविधोऽनफायांयोगेजातोभवति ॥ ५ ॥

उत्पन्नभोगसुखभुग्धनवाहनाढ्यस्त्यागान्वितोदुरुधुराप्रभवः सुभृत्यः॥केमद्रुमेमलिनदुःखितनीचनिःस्वाःप्रेष्याः खलाश्च नृपतेरपिवंशजाताः ॥ ६ ॥

अथदुरुधुराकेमद्रुमयोगेजातयोः स्वरूपंवसंततिलकेनाह ॥ उत्पन्नभोगसुखभुगिति । यत्रतत्रयथातथोत्पन्नैर्भोगैः सुखानिभुंक्ते । धनेनवित्तेनवाहनैरश्वादिभिराढ्यः त्यागान्वितोदाता सुभृत्यः शोभनभृत्यः । एवंविधोदुरुधुराप्रभवोदुरुधुरायोगेजातोभवति । केमद्रुमइति । मलिनः मलिनवासाः । स्नानालसश्चदुःखितः शरीराद्यैः मानसाद्यैः दुःखैरन्वितः । नीचः स्वकुलानुचिताधमकर्मकरः । निःस्वःदरिद्रः । प्रेष्यः दासकर्मकरः । खलः दुर्जनस्वभावः । एषामुक्तार्थानामन्यतमेनयुक्तोयदिनृपतेः राज्ञोपिवंशेकु-

लेजातः । तथाप्येवंविधः केमद्रुमजातोभवति । केचिदत्रबहुवचनंपठंति । केमद्रुमेमलिनदुःखितनीचनिःस्वाः प्रेष्याःखलाश्चनृपतेरपिवंशजाताः ॥ तथापिनकश्चिद्दोषः ॥ ६ ॥

उत्साहशौर्यधनसाहसवान्महीजःसौम्यःपटुःसुवचनोनिपुणःकलासु ॥ जीवोर्थधर्मसुखभाङ्नृपपूजितश्चकामीभृगुर्बहुधनोविषयोपभोक्ता ॥ ७ ॥

एवंतावत्सुनफानफादिषुसामान्येनफलमभिधायेदानींग्रहवशाद्विशेषफलंवसंततिलकेनाह ॥ उत्साहवान्बलीनित्योद्यमशीलः । शौर्यवान्रणप्रियः । धनवान्वित्तान्वितः । साहसवानसमीक्षितकार्यकरः । यद्यत्कार्यंयदाकालेत्वविचार्यकरोतियः ससाहासिकः । एवंविधोमहीजोंगारकोयदियोगकर्ताभवति । तदा जातोभवति । पटुःदक्षः । सुवचनः शोभनवाक् । कलासुनिपुणः गीतवाद्यनृत्यचित्रपुस्तककर्मादिषुसूक्ष्मदृष्टिः । यदिसौम्योबुधोयोगकरः तदैवंविधोजातोभवति । अर्थभाक् धनानांभाजनः । धर्मभाक् धर्मक्रियास्वनुरतः । सुखभाक् नित्यसुखितः । नृपपूजितः राज्ञांमान्यः । यदिजीवोबृहस्पतिः योगकरः । तदैवंविधोजातोभवति । कामी कामुकः स्त्रीलोलः । बहुधनः प्रभूतार्थः । विषयोपभोक्ता विषयाणामिंद्रियार्थानामुपभोक्ता उपभोगशीलः तत्सुखान्वितः । यदिभृगुः शुक्रोयोगकरस्तदैवंविधोजातोभवति ॥ ७ ॥

परविभवपरिच्छदोपभोक्तारवितनयोबहुकार्यकृद्गणेशः ॥ अशुभकृदुडुपोऽह्निदृश्यमूर्तिर्गलिततनुश्चशुभोऽन्यथान्यदूह्यम् ॥ ८ ॥

अथशनैश्चरेयोगकर्तरिपुरुषस्यस्वरूपंचंद्रमसिचदृश्यादृश्येजातस्यस्वरूपज्ञानंपुष्पिताग्रयाह ॥ पराजितानांविभवानामैश्वर्याणांपरिच्छदानांगृहवस्त्रवाहनपरिवाराणामुपभोक्ताभवति । बहुकार्यकृन्नानाविधानांकार्याणांकर्त्ता । गणेशः बहुगणस्वामी गणाः संघाः तेषांप्रभुः । एवंविधोरवितनयः शनैश्चरोयोगकरोयदिभवति तदाजातोभवति । अत्रयोगत्रयेसुनफानफादुरुधुराख्येएकैकस्यग्रहस्यफलमुक्तंद्व्यादिसंभवेफलंद्व्यादिकंवाच्यम् । अशुभकृदिति । उडुपश्चंद्रोह्निदिने दृश्यमूर्तिः दृश्यमानशरीरः । अशुभकृद निष्टफलकर्ता । एतदुक्तंभवति । दिवाजन्मनिचंद्रमादृश्येचक्रार्द्धेस्थितः अशुभंफलंकरोति सपुरुषोदारिद्र्यादियुक्तोभवतीत्यर्थः । गलिततनुरदृश्यमूर्तिः शुभः । एतदुक्तंभवत्यदृश्येचक्रार्द्धेस्थितः शुभकृज्जातऐश्वर्यादियुक्तोभवति । अन्यथान्यदूह्यम् । उक्तप्रकारादन्यथास्थेचंद्रमसिफलमन्यदूह्यं स्वबुद्ध्यावि-

कल्पनीयम् । एतदुक्तंभवति । रात्रौजन्मन्यदृश्येचक्रार्द्धे यस्यचंद्रोभवति तस्याशुभंजन्म । यस्यदृश्येचक्रार्द्धेचंद्रोभवतितस्यशुभंजन्म भवतीत्यर्थः ॥८॥

लग्नादतीववसुमान्वसुमाञ्छशांकात्सौम्यग्रहैरुपचयोपगतैः समस्तैः ॥ द्वाभ्यांसमोल्पवसुमांश्चतदूनतायामन्येष्वसत्स्वपि फलेष्विदमुत्कटेन ॥ ९ ॥

इतिचंद्रयोगाऽध्यायस्त्रयोदशः ॥ १३ ॥

अथलग्नाच्चंद्राद्वायस्योपचयेसौम्यग्रहाभवंतितस्यफलंवसंततिलकेनाह ॥ लग्नादिति । यस्यजन्मनिलग्नात्सौम्यग्रहाः बुधजीवसिताउपचयगताभवंति सर्वएव सपुरुषोऽतीववसुमानत्यर्थंधनवान्भवति । यस्यशशांकाच्चंद्रादप्युपचये सर्वएवसौम्यग्रहाः भवंति सोपिधनवान्भवति । एवंसमस्तैः त्रिभिरेतत्फलम् । द्वाभ्यांसमः । यस्यलग्नाच्चंद्राद्वाद्वौग्रहौसौम्यावुपचयगतौभवतः ससमोमध्यधनोभवति नातिबहुधनोभवतीत्यर्थः । तदूनतायामिति । तदूनतायां लग्नाच्चंद्राद्वायस्यैकः सौम्यग्रहः उपचयगतोभवति सोल्पवसुमान्किंचिद्धनान्वितोभवति । अर्थादेवलग्नाच्चंद्राद्वायस्योपचयेनकश्चित्सौम्यग्रहोभवति सदरिद्रोभवति । यस्यलग्नचंद्रयोर्द्वयोरपिसौम्यग्रहाउपचयस्थाः कयापियुक्त्याभवंति सोप्यतीववसुमान्भवति । अन्येष्वसत्स्वपिफलेष्विति ।अन्येष्वपरेष्वसत्स्वशोभनेष्वपिफलेषुसत्स्विदंफलमुत्कटेनबाहुल्येनभवति । एतदुक्तंभवति । यस्यलग्नाच्चंद्राद्वाउपचयस्थाः सौम्यग्रहाभवंति । तस्यान्ययोगमशुभमपिकेमद्रुमादिफलमभिभूयेदंशुभमेवफलमुत्कटत्वेनप्राबल्येनभवतीति ॥९॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौचंद्रयोगाऽध्यायस्त्रयोदशःसमाप्तः ॥ १३ ॥

तिग्मांशुर्जनयत्युषेशसहितोयंत्राश्मकारंनरंभौमेनाघरतंबुधेननिपुणंधीकीर्तिसौख्यान्वितम् ॥ क्रूरंवाक्पतिनान्यकार्यनिरतंशुक्रेणरंगायुधैर्लब्धस्वंरविजेनधातुकुशलंभांडप्रकारेषुवा ॥ १ ॥

अथद्विग्रहयोगाध्यायोव्याख्यायते । तत्रादित्येचंद्रादियुक्तेजातस्यस्वरूपं शार्दूलविक्रीडितेनाह ॥ तिग्मांशुरिति । तिग्मांशुरादित्यः उषेशेनचंद्रमसासहितोयुक्तः उषारात्रिः उषायाईशः उषेशः रात्रिनाथः नरंमनुष्यंयंत्राश्मकारं जनयति । यंत्राणिसहस्रघातिप्रभृतीन्यश्मानः पाषाणाः तत्क्रियासुतत्कर्मसु निरतंसक्तंतंकरोति । एवंभौमेनसहैकराशिगतोर्कोऽघरतंपापासक्तंजनयति ।

बुधेनक्रियासुनिपुणंसूक्ष्मदृष्टिं धीकीर्तिसौख्यान्वितं धीर्बुद्धिः कीर्तिः यशः सौख्यंसुखंसुखभावः । एतैरन्वितंसंयुक्तंवाक्पतिनागुरुणाक्रूरंविषमस्वभावमन्यकार्यनिरतंपरकर्मतत्परं जनयति । शुक्रेणरंगायुधैः रंगावतरणक्रिययामल्लादिकयाऽयुधैः खड्गादिभिश्चलब्धस्वंप्राप्तार्थंजनयति । रविजेनशनैश्चरेणधातुपुताम्राद्युत्पत्तिमृत्तिकासुगैरिकाद्यासुवाधातुषुकुशलंनिपुणंभांडप्रकारेषुसमुद्गादयस्तेषुकुशलंवा ॥ १ ॥

कूटस्थ्यासवकुंभपण्यमशिवंमातुःसवक्रः शशीसज्ञःप्रसृतवाक्यमर्थनिपुणंसौभाग्यकीर्त्यान्वितम् ॥ विक्रांतंकुलमुख्यमस्थिरमतिंवित्तेश्वरंसांगिरावस्त्राणांससितःक्रियादिकुशलंसार्किःपुनर्भूसुतम् ॥ २ ॥

अथभौमादियुक्तेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीतेनाह ॥ कूटइति । कूटंपण्यद्रव्याणांप्रतिरूपाक्रियासक्तंस्त्रीपण्यंनारीविक्रयकम् । आसवपण्यंपानविक्रयकं कुंभपण्यंघटविक्रयकम् । अशिवमश्रेयस्करम् । मातुःजनन्याः एवंविधःशशीचंद्रमाः सवक्रोवक्रेणांगारकेणयुक्तोनरंजनयति । सज्ञइति । प्रसृतवाक्यंप्रियंवदम् । अर्थनिपुणमर्थेषुसूक्ष्मदृष्टिंसौभाग्येनसर्वजनवल्लभेनकीर्त्यायशसान्वितंसंयुक्तम् । सज्ञोबुधसहितः शशीनरंजनयति । विक्रांतंशत्रुजेतारं । कुलमुख्यंवंशप्रधानम् । अस्थिरमतिंचपलं । वित्तेश्वरंधनस्वामिनं । सांगिराः अंगिरसागुरुणासंयुक्तः शशीनरं जनयति । वस्त्राणांक्रियादिकुशलंतंतुवायकम् । आदिग्रहणात्सीवनरंजनक्रयविक्रयेष्वपिकुशलं । ससितः शुक्रेणसंयुक्तः शशीनरंजनयति । क्रियादिकुशलंसर्वक्रियासुनिपुणम् । सार्किःअर्किणाशनैश्चरेणयुक्तः द्विःसंस्कृतापुनर्भूः तस्याः सुतंपुत्रं शशीनरंजनयति । पुनर्भूलक्षणं । परिणीतापतिंहित्वासवर्णंकामतः श्रयेत् । अक्षताचक्षताचैवपुनर्भूःसंस्कृतापुनः ॥ २ ॥

मूलादिस्नेहकूटैर्व्यवहरतिवणिग्बाहुयोद्धाससौम्येपुर्यध्यक्षः सजीवेभवतिनरपतिःप्राप्तवित्तोद्विजोवा ॥ गोपोमल्लोथदक्षः परयुवतिरतोद्यूतकृत्सासुरेज्येदुःखार्तोऽसत्यसंधःससवितृतनयेभूमिजेनिंदितश्च ॥ ३ ॥

अथांगारकेबुधादियुक्तेजातस्यस्वरूपंस्रग्धरयाह ॥ मूलादीति । ससौम्येभूमिजेबुधयुक्तेंगारकेजातोवणिग्भवति । सचवणिङ्मूलादिभिः व्यवहरति । मूलादीनिमूलपुष्पवल्कलसारफलानि । स्नेहास्तैलादयः एतैर्व्यवहरति । कूटैश्च

द्रव्यप्रतिरूपैः कृत्रिमैर्व्यवहरति । बाहुयोद्धानियुद्धकुशलश्च भवति । एवंविधः ससौम्येसौम्येनबुधेनयुक्तेभूमिजेजातोभवति । पुर्यध्यक्षः नगराधिकृतः । पुरिअध्यक्षः पुर्यध्यक्षः । स्वामीअथवानरपतिः राजाभवति । अथवाद्विजोब्राह्मणःप्राप्तवित्तोलब्धधनः । केचित्प्राप्तविद्यइतिपठंति । सजीवेगुरुसंयुक्तेभौमे जातोभवति । गोपःगोपालकः । मल्लःबाहुयोद्धा । अथशब्दःपादपूरणे । दक्षः चतुरः । परयुवतिरतः परस्त्रीसक्तः । द्यूतकृत्कितवः । सासुरेज्ये असुरैरीज्यः असुरेज्यः तेनअसुरेज्येनशुक्रेणयुक्तेभूमिजेजातएवंविधोभवति । दुःखार्तःदुःखपीडितः । असत्यसंधः असत्येनसंधाप्रतिज्ञायस्य अनृतभाषीनिंदितःकुत्सितोसूययायुक्तःससवितृतनये सवितृतनयेनसौरेणयुक्तेभूमिजेजातो भवति ॥ ३ ॥

सौम्येरंगचरोबृहस्पतियुतेगीतप्रियोनृत्यविद्वाग्मीभूगणपः
सितेनमृदुनामायापटुर्लंघकः॥सद्विद्योधनदारवान्बहुगुणःशु-
क्रेणयुक्तेगुरौज्ञेयःश्मश्रुकरोऽसितेनघटकृज्जातोऽन्नकारोपिवा॥४॥

अथबुधेजीवादियुक्तेजीवेचशुक्रादियुक्तेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ सौम्येरंगचरइति । रंगचरोमल्लादिकः । गीतप्रियः गीतवल्लभः। नृत्यविन्नृत्यज्ञः।एवंविधःसौम्येबुधेबृहस्पतिनायुक्तेजातोभवति ।प्रशस्तावाग्यस्य सवाग्मी वचनक्रिययापरप्रत्यायनसमर्थः । भूगणपः । भुवश्चगणानांसंघानामाधिपतिः । एवंविधोबुधेसितेनशुक्रेणसहिते जातोभवति । मायापटुःपरवंचनदक्षः । लंघकः गुरुवचनातिक्रामी । एवंविधोमृदुनाशनैश्चरेणसहितेबुधेजातोभवति । सद्विद्यइति । सद्विद्यःशोभनविद्यः । धनदारवान् वित्तकलत्रसंयुक्तः । बहुगुणः प्रभूतगुणैः शौर्यादिभिर्युक्तः । एवंविधोगुरौजीवेशुक्रेणयुक्तेजातोभवति ।श्मश्रुकरोनापितः । अथवाघटकृत्कुंभकारः । अथवान्नकारःसूपकारः । एवंविधोऽसितेनसौरेणयुक्तेगुरौजातोज्ञेयोविज्ञातव्यः ॥ ४ ॥

असितासितसमागमेल्पचक्षुर्युवतिसमाश्रयसंप्रवृद्धवित्तः॥भव-
तिचलिपिपुस्तचित्रवेत्ताकथितफलैःपरतोविकल्पनीयाः॥५॥

## इति द्विग्रहयोगाऽध्यायश्चतुर्दशः ॥ १४ ॥

अथशुक्रशनैश्चरयुक्तेजातस्यस्वरूपंत्रिग्रहयोगफलंचपुष्पिताग्रयाह ॥ असित इति । अल्पचक्षुरल्पदृष्टिः । युवतिसमाश्रयेणस्त्रीसंश्रयणेनसम्यक्प्रवृद्धंवित्तंधनंयस्य ९ सयुवतिसमाश्रयसंप्रवृद्धवित्तः। लिपिरक्षरविन्यासः । पुस्तकलेखकर्म चित्रमालेख्यम् । एषांवेत्तातज्ज्ञः । एवंविधः असितासितसमागमेशनैश्चरस्य

शुक्रेणसंयोगेजातः पुरुष एवंविधोभवति । यदिराशिद्वयेद्वौग्रहयोगौभवतः । तत्रद्विग्रहयोगद्वयस्यापिफलंवक्तव्यम् । अथराशित्रयेद्विग्रहयोगत्रयंभवति । तदाद्विग्रहयोगत्रयस्यापिफलंवाच्यम् । कथितफलैरिति । द्वाभ्यांपरतोऽपरेऽन्येत्रयोग्रहाः यदैकगताभवंति तदाकथितफलैरुक्तफलैरेवं विकल्पनियाः । तदाद्विग्रहयोगत्रयस्थंफलंवाच्यम् । यद्यर्कचंद्रभौमाएकराशिस्थाभवंति । तदार्कचंद्रयोगेयत्फलमुक्तम् । यच्चादित्यांगारकयोगेफलंयच्चचंद्रांगारकयोगेफलंतत्फलत्रयमपिवाच्यम् । एवंयथासंभवमन्यत्रापिग्रहत्रयस्यैकराशिगतस्यफलंवक्तव्यम् । यद्येकराशौद्विग्रहयोगोऽन्यत्रत्रिग्रहयोगोवा भवतस्तदासर्वाणिफलानिवाच्यानीति ॥ ५ ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौद्विग्रहयोगाऽध्यायश्चतुर्दशःसमाप्तः॥ १४॥

## अथ प्रव्रज्यायोगाध्यायप्रारंभः ॥

एकस्थैश्चतुरादिभिर्बलयुतैर्जाताःपृथग्वीर्यगैःशाक्याजीविकभिक्षुवृद्धचरकानिर्ग्रंथवन्याशनाः ॥ माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैःक्रमात्प्रव्रज्याबलिभिःसमाःपरजितैस्तत्स्वामिभिःप्रच्युतिः ॥ १ ॥

अथातःप्रव्रज्यायोगाऽध्यायोव्याख्यायते । तत्रादावेवचतुरादिभिरेकस्थैः ग्रहैः जातस्यप्रव्रज्यायोगंशार्दूलविक्रीडितेनाह ॥ एकस्थैरिति । एकस्मिन्यत्रतत्रराशौचतुरादयोग्रहाभवंति । चत्वारः पंचषट्सप्तवाभवंति तैरेकस्थैश्चतुरादिभिः बलयुतैः वीर्यवद्भिःमाहेयादिभिःजाताः संभूताःशाक्यादिकाःप्रव्राजकाः भवंति । किंतुचतुरादिभिः बलयुतैरेकाप्रव्रज्याभवति । तदर्थमाह ॥ पृथग्वीर्यगैःतैश्चबलिभिः वीर्यगैःसबलैः । पृथक्पृथक्प्रव्रज्या भवंति । एतदुक्तंभवति । चतुरादीनामेकस्थानांमध्याद्यद्येकोबलवान् भवति तदाजातस्यैकैवप्रव्रज्याभवति । अथचतुरादीनामेकस्थानांमध्यान्नकश्चिद्बली भवति तदाजातस्यप्रव्रज्यानभवति । अथद्वौबलिनौभवतस्तदाजातस्यप्रव्रज्याद्वयमेवभवति । यदाबहवोबलिनस्तदाबह्वयः प्रव्रज्याभवंति । एवमेकस्थैश्चतुरादिभिर्बलयुतैः जाताःप्रव्रज्याभाजोभवंति । यस्मादुक्तम् । प्रव्रज्या बलिभिःसमाः । ताश्चपृथग्वीर्यगैः माहेयादिभिः भौमाद्यैः शाक्याद्या भवंति। तद्यथा। चतुरादीनामेकस्थानांमध्याद्यदामाहेयोभौमोबलवान्भवति तदाजातः शाक्योरक्तपटोभवति । एवंज्ञेबुधेबलवति आजीविकोभवति।आजीविकश्चैकदंडीभिक्षुः यतिर्भवति । गुरौबलवति । क्षपाकरश्चंद्रो यदाबलवान्तदावृद्धः वृद्धश्रावकः कापालिकः । वृत्तभंगभयाच्छ्रावकशब्दोत्रलुप्तोद्रष्टव्यः ।

सितेशुक्रेबलवतिचरकः चक्रधरः । प्राभाकरिःसौरः तस्मिन्बलवतिनिर्ग्रंथः नग्नः । क्षपणकःप्रावरणरहितइत्यर्थः । इनेआदित्येबलवतिवन्याशनः मूलफलाशनस्तपस्वीभवति । एवंक्रमात्क्रमशः परिपाट्याएतेप्रव्रज्यापर्यायाः । एतेवंकालकमताव्याख्याताः।तथाचवंकालकाचार्यः । तावसिओदिणणाहेचंदे कावालिओतहाभणिओ॥रत्तवडोभूमिसुवेसोमसुवेएअदंडीआ । देवगुरुशुक्रकोणक्रमेणजईचरअखवणाई । अस्यार्थः। तावसिओतापसिकः । दिणणाहे दिननाथेसूर्ये। चंदेचंद्रे । कावालिओकापालिकः । तहाभणिओ तथाभणितः। रत्तवडोरक्तपटः । भूमिसुवेभूमिसुते। सोमसुवेसोमसुतेबुधे । एअदंडीआ एकदंडी । देवगुरुर्बृहस्पतिः । शुक्रशुक्रः । कोणः शनैश्वरः । क्रमेणक्रमेण । जई यतिः । चरअचरकः।खवणाईक्षपणकः । अत्रवृद्धश्रावकग्रहणंमाहेश्वराश्रितानां प्रव्रज्यानामुपलक्षणार्थम्।आजीविकग्रहणंचनारायणाश्रितानाम्। तथाचवंकालकेसंहितांतरेपठ्यते । जलणहरसुगअकेसवसूईबह्मण्णणग्गमग्गेसु । दिक्खाणं णाअव्वासूराइग्गहक्रमेणणाहगआ । जलणज्वलनः साग्निकइत्यर्थः।हरईश्वरभक्तः । भट्टारकः । सुगअसुगतः बौद्धइत्यर्थः । केसव केशवभक्तः । भागवतइत्यर्थः । सूईश्रुतिमार्गगतः मीमांसकः । बह्मण्णब्रह्मभक्तः । वानप्रस्थः । णग्गोनग्नःक्षपणकः । मग्गेसुमार्गेषु । दिक्खाणं दीक्षाणां । णाअव्वाज्ञातव्याः। सूराइग्गहा सूर्यादिग्रहाः । क्रमेणक्रमेण। णाहगआ नाथगताः । एवंचतुरादीनामेकस्थानांमध्याद्यावंतोबलिनः तावंत्यएवप्रव्रज्याभवंति । तत्रापिप्रथमावीर्याधिकस्य संबंधिनीप्रव्रज्याभवति । यस्मात्स्वल्पजातकेउक्तम् । चतुरादिभिरेकस्थैःप्रवज्यांस्वांग्रहःकरोतिबली । बहुवीर्यैस्तावद्व्यःप्रथमावीर्याधिकस्यैव । तापसःवृद्धश्रावकरक्तपटाजीविभिक्षुचरकाणांनिर्ग्रंथानांचेति । वीर्योपचयक्रमेणान्यासांक्रमः।एवंबलिभिः समाःप्रव्रज्याःबलिनोग्रहस्ययादृश्येवतद्बलानुसारेणप्राप्नोतिपरिपालयतिऊनबलस्यमनाङ्नाप्नोतिपालयति । पराजितैस्तत्स्वामिभिःप्रच्युतिरिति । शाक्यादिप्रव्रज्यास्वामिभिर्ग्रहैः पराजितैरन्यैर्ग्रहैःयुद्धेविजितैःप्रच्युतिःप्रव्रज्यात्यागः । तत्प्रव्रज्यांगृहीत्वापुनस्त्यजति । एतदुक्तंभवति । चतुरादीनांमध्याद्यद्येकोबलवान्भवति । सचग्रहयुद्धेअन्येनग्रहेणजातककालेपराजितस्तदाप्रव्रज्यांगृहीत्वापुनस्त्यजति त्यक्त्वाचप्रव्रज्यामनाश्रित्यैवतिष्ठति । अथचतुरादीनांमध्याद्द्वौबहवोवाबलिनोभवंति । तेचपराजितास्तदातस्यावश्यमेवसर्वाभ्यःप्रव्रजाभ्यः च्युतिर्भवति । यस्माद्बलवद्ग्रहसंख्यास्तेनप्रव्रज्याःकर्तव्याः । अंत्यप्रव्रज्याधिपतिर्यद्यन्येनग्रहेणजितोनभवति तदातामेवप्रव्रज्यामाश्रितोम्रियते । अथप्रव्रज्यादायकोग्रहएकएवजितोनभवति । तदायावज्जीवंतामेवप्रव्रज्यामाश्रयति । अथद्वौग्रहौप्रव्रज्या-

दायकौतौचापराजितौ । तदाप्रथमप्रव्रज्यादायकांतर्दशायां प्रथमां प्रव्रज्यांगृहीत्वातामेवाश्रित्यतावत्तिष्ठति । यावद्द्वितीयप्रव्रज्यादायकग्रहांतर्दशाप्रवेशः । तत्रप्रथमांत्यक्त्वाद्वितीयामाश्रयति । एवंबहुप्रव्रज्यासुसंभवे योज्यम् ।अत्र वसत्याचार्यः । तेष्वधिकबलीजीवस्त्रिदंडिनंभार्गवश्वरकमुख्यम् । नग्नश्रमणंसौरोबुधस्तदाजीविकावार्यम् ॥ वृद्धश्रावकमिंदुर्दिवाकरस्तापसंतपोयुक्तम् । वक्रःशाक्यःश्रवणंक्षेत्राश्रयजंगुणांश्चैतान् ॥ वीर्योपेतेल्पतनावदीक्षिताभक्तिवादिनस्तेषाम् । अन्यैःपराजितश्चेत्प्रव्रज्याप्रच्युतिंकुर्यात् ॥ यावंतो वीर्ययुताःप्रव्रज्याभवंतितावंत्यः । एकर्क्षगेषुनियमात्तेषामाद्याबलोपेतात् ॥ १ ॥

रविलुप्तकरैरदीक्षिताबलिभिस्तद्गतभक्तयोनराः ॥
अभियाचितमात्रदीक्षितानिहतैरन्यनिरीक्षितैरपि ॥ २ ॥

अथास्तमितान्यजितान्यदृष्टानांग्रहाणामपवादंवैतालीयेनाह ॥ रविलुप्तकरैरिति । चतुरादीनामेकस्थानांमध्याद्यावंतोग्रहाबलिनस्तावंतः स्वप्रव्रज्यादायकास्तत्रापिबलिनांमध्येयावंतोरविलुप्तकराः सूर्यमंडलगाअस्तमिताभवंति तैरदीक्षिताजाताभवंति । तावंतः स्वकीयाः प्रव्रज्यांनप्रयच्छंतीत्यर्थः । किंतुजातानराः तद्गतभक्तयः तद्गतानांतत्प्रव्रज्याप्रविष्टानां मध्येभक्ताभवंति । अत्ररविलुप्तकरत्वमुदयास्तमयंगणयित्वाऽन्वेष्यम् । शुक्रगुरुज्ञार्किकुजाः कालांशैरुत्तरोत्तरैः नवभिर्दृश्यादृश्याद्वक्रमेण रवेः द्वादशभिरिंदुरित्येवमादिकर्मणिकृतेकदाचिदादित्येनसहैकराशिगतैरपिनास्तमितोभवति । कदाचिद्द्वितीयराशिस्थोप्यस्तमितोभवति । एवमुदयास्तमयमन्वेष्यास्तमितफलंवाच्यम् । अभियाचितमात्रदीक्षिताइति । बलिभिरित्यनुवर्तते । बलिभिर्निहतैः ग्रहयुद्धेन्यग्रहविजितैरन्यैश्चग्रहैर्निरीक्षितैर्दृष्टैः अभियाचितमात्रदीक्षिताः दीक्षाप्रार्थनपराभवंति । नचतांप्राप्नुवंति । पूर्वमुक्तंपराजितैस्तत्स्वामिभिः प्रच्युतिरित्यस्यायमपवादः । तेनैतदुक्तंभवति । बलिग्रहोग्रहयुद्धेन्येनविजितोभवति । नकेनचिद्दृश्यते तदातत्प्रव्रज्यांगृहीत्वापुनस्त्यजति । अथबलीग्रहः समागमनेनग्रहेणविजितोभवत्यन्येनचदृश्यते तदाप्रव्रज्यांप्रार्थ्यमानोपिनप्राप्नोति । यस्यच प्रव्रज्याप्रच्युतिः जातातस्यतदवसानेबहुष्वंतर्दशासुचारवशाद्यस्मिन्नंतर्दशाकालेबलवान्भविष्यतितस्मिन्कालेप्रव्रज्यांदास्यति ।तथाचोक्तम् । दीक्षादानसमर्थोयोभवतितदाबलेनसंयुक्तः । तस्यैवदशाकालेदीक्षांलभतेनरोऽवश्यम् । यस्यचदीक्षाच्यवनंतस्यैवदशावसानेस्यात् । एवंजातककालेसंचिंत्य बलाबलंवाच्यम् ॥ २ ॥

जन्मेशोन्यैर्यद्यदृष्टोर्कपुत्रंपश्यत्यार्किर्जन्मपंवाबलोनम् ॥ दी-
क्षांप्राप्नोत्यार्किदृक्काणसंस्थेभौमार्क्यंशेसौरदृष्टेचचंद्रे ॥ ३ ॥

अथचतुरादिभिरेकस्थैर्विनाप्रव्रज्यायोगंमालिन्याह ॥ जन्मेशइति । जन्मनि यस्मिन्राशौचंद्रः स्थितस्तस्ययोधिपतिर्ग्रहःसजन्मेशः । सचयद्यन्यैर्ग्रहैरदृष्टोनावलोकितः । नकेनचिद्ग्रहेणदृश्यतेतथाभूतोसावर्कपुत्रंशनैश्चरंपश्यति तदाजातस्यप्रव्रज्याभवति । साचशनैश्चरकृताशनैश्चरजन्मेशयोः योबलवांस्तदीयांतर्दशाकाले । उक्तंच । यस्येक्षतेर्कपुत्रंजन्मभनाथोग्रहैर्नसंदृष्टः। तस्यहिदीक्षालाभोतद्बलयोगाद्दशाकाले । पश्यत्यार्किरिति । अथवार्किः सौरः सबलोजन्मराश्यधिपंबलोनंवीर्यरहितंपश्यति।तथापिशनैश्चरोक्तप्रव्रज्यांवदति। उक्तंच । शनिदृष्टेबलिहीनेजन्मनिनाथेवदेच्चनिर्ग्रंथम् । दीक्षांप्राप्नोतीति।यत्रतत्र राशौचंद्रेशशिन्यार्किद्रेष्काणसंस्थेसौरद्रेष्काणव्यवस्थितेनकेवलंयावद्भौमार्क्यंशेकुजसौरयोरन्यतमनवांशकस्थेतस्मिंश्च सर्वग्रहादृष्टेशनैश्चरेणेक्षमाणेदीक्षांप्राप्नोति । शनैश्चरोक्तप्रव्रज्यांव्रजति । तथाच । सौरद्रेष्काणसंस्थोयदिभवतिशशीतदंशसंस्थश्च । वक्रांशेवादृष्टःसौरेणतुसर्वदर्शनविमुक्तः । निर्ग्रंथसंज्ञोयोर्कपुत्रवीर्यानुसारेण । जन्माधिपतिःपापैरपिनिरीक्षितस्त्वेकईक्षतेसौरः । यस्यपुरुषस्यमूर्तौनियतादीक्षिताभवति तस्यजन्माधिपतिंविबलंनिरीक्षते।यस्यसूर्यजःसबलःसोपिखलुभाग्यहीनः प्रव्रज्यांप्राप्नुयाज्जातः । मांद्येकौजेवांशेशशी स्थितःकृष्णजेद्रेष्काणेवा।अंशाधिपानुरूपेकालेदीक्षाप्रदोभवति । अत्रयोगत्रयेपि पूर्वापवादाअनुवर्तनीयाः ॥ ३ ॥

सुरगुरुशशिहोरास्वार्किदृष्टासुधर्मेगुरुरथनृपतीनांयोगजस्ती-
र्थकृत्स्यात् ॥ नवमभवनसंस्थेमंदगेन्यैरदृष्टेभवतिनरपयोगे
दीक्षितःपार्थिवेंद्रः ॥ ४ ॥

इतिबृहज्जातकेप्रव्रज्यायोगाध्यायःसमाप्तः ॥ १५ ॥

अथयेनयोगेनजातः शास्त्रकरोभवति । येनचराजापिदीक्षितोभवति तद्योगद्वयंमालिन्याह ॥ सुरगुरुरिति । सुरगुरुः जीवः । शशीचंद्रः।होरालग्नम् । एतासुसुरगुरुशशिहोरासु । आर्किणाशनैश्चरेणदृष्टासुअवलोकितासु ।धर्मेनवमेस्थानेगुरुः जीवोयदिभवति । अथशब्दःपादपूरणे । नृपतीनांयोगजः कश्चिद्राजयोगोजातस्यभवति । तदासपुरुषः तीर्थकृच्छास्त्रकृत्स्याद्भवेत् । काणादबुद्धपांचशिखवराहमिहिरब्रह्मगुप्तप्रतिमइति । सुरगुरुशशिहोरास्विति । धन्विमीनकर्कटलग्नेकैश्चिद्व्याख्यातम्।तच्चायुक्तम्।यस्मान्मांडव्यः। गतेमंदालो-

कंगुरुशशिविलग्नेनवमगेगुरौनिष्पद्यंतेनइहनृपयोगेनृपतयः । विजृंभंतेयेषांल-टहरचनारंभसुभगाजगत्यांयेविद्वद्गुणकथनपाषाणसदृशाःतथाचोक्तम् । गुरुश-शिलग्नाद्दृष्टाकोणेनतुनवमगोर्यादगुरुः । नरनाथजन्मजातःशास्त्रकरोभवतिन चनृपः । अथद्वितीयोराजयोगस्तत्रोपस्थानंकरोति तदाराजाभवतितीर्थकर-श्चजिनककाशिराजरुकुजिध्वजप्रतिमइति । उक्तंच । अस्मिन्योगेचान्योनृप-योगोभवति तत्रयोजातः । सभवतिजिनेंद्रतुल्योनरनाथःशास्त्रकर्ताच । न-वमभवनसंस्थेमंदगेमंदंगच्छतीतिमंदगः सौरः तस्मिन्मंदगे लग्नान्नवमभवन-संस्थेधर्मस्थानाश्रितेन्यैः सर्वैर्ग्रहैरदृष्टेनावलोकिते । तथानरपयोगेराजयो-गानांमध्यादन्यतमेराजयोगेसतिजातोदीक्षितः । प्रव्रजितः। पार्थिवेन्द्रश्चराजा-धिराजोभवति । पश्चात्तत्कालंसर्वबलीतद्दीक्षायांदीक्षितश्चभवति । राज-योगंविनायमपिप्रव्रज्यायोगः । योगेस्मिन् राजयोगजश्चेज्जातोराजादी-क्षितश्चभवति । अन्यथादीक्षितएव । उक्तंच । नवमस्थानेसौरोयदिस्थितः सर्वदर्शनविमुक्तः । नरनाथयोगजातोनृपोपिदीक्षान्वितोभवति ॥ नृपयोगस्या-भावेयोगेस्मिन्दीक्षितोनरोजातः। निःसंदिग्धंप्रवदेद्योगस्यास्यप्रभावेनेति ॥४५॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौप्रव्रज्यायोगाध्यायः पंचदशःसमाप्तः॥१५॥

## अथ ऋक्षशीलाध्यायः ॥

प्रियभूषणःसुरूपःसुभगोदक्षोश्विनीषुमतिमांश्च॥
कृतनिश्चयसत्यारुग्दक्षःसुखितश्चभरणीषु ॥ १ ॥

अथऋक्षशीलाध्यायोव्याख्यायते । ऋक्षंनक्षत्रंराशिश्च । तत्रादावेवचंद्रभु-ज्यमाननक्षत्रशीलंभवति । तत्राश्विनीभरण्योः जातस्य शीलविज्ञानमार्या-याह ॥ प्रियभूषणइति । प्रियभूषणः अलंकारवल्लभः । सुरूपः शोभन-रूपः वपुष्मान् । सुभगः सर्वजनप्रियः । दक्षः सर्वकार्यकरणपटुः । मतिमान् बुद्धियुक्तः । एवंविधोऽश्विनीषुजातोभवति । तारकापेक्षयात्रसर्वत्र बहुवचननिर्देशः कृतः । कृतनिश्चयइति । कृतनिश्चयः प्रारब्धानांकर्मणा-मंतगः । सत्यः सत्यवाक् । अरुक्नीरुजः । दक्षःचतुरः । सुखितः दुःखनि-र्मुक्तः । एवंविधोभरणीषुजातोभवति ॥ १ ॥

बहुभुक्परदाररतस्तेजस्वीकृत्तिकासुविख्यातः॥
रोहिण्यांसत्यशुचिः प्रियंवदःस्थिरमतिःसुरूपश्च ॥ २ ॥

अथकृत्तिकारोहिण्योर्जातस्यस्वरूपमार्ययाह ॥ बहुभुक्प्रभूताहारः । परदा-ररतः परस्त्रीष्वासक्तः । तेजस्वीअसहिष्णुः । विख्यातः सर्वत्रप्रसिद्धकीर्तिः ।

एवंविधः कृत्तिकासुजातोभवति । सत्यः अवितथभाषी । शुचिः परस्वाद्यलुब्धः शास्त्रोक्तशौचानुष्ठाता । प्रियंवदः मधुरवाक् । स्थिरमतिः एकमतिः । सुरूपश्चवपुष्मान् । एवंविधः रोहिण्यांजातोभवतीति ॥२॥

चपलश्चतुरोभीरुःपटुरुत्साहीधनीमृगेभोगी ॥
शठगर्वितःकृतघ्नोहिंस्रःपापश्चरौद्रर्क्षे ॥ ३ ॥

अथमृगशीर्षार्द्रयोः जातस्यस्वरूपमार्ययाह ॥ चपलइति । चपलः क्रियास्वनवस्थितः । चतुरः दक्षः । भीरुः भयार्तः । पटुःप्रवक्ता । उत्साहीसोद्यमः । धनीवित्तवान् । भोगीसंभोगशीलः । एवंविधोमृगेमृगशिरसिजातोभवति । शठःपरकार्यविमुखः । उक्तंचग्रंथांतरेशठलक्षणं-मनसावचसायश्चदृश्यतेकार्यतत्परः । कर्मणाविपरीतश्चसशठःसद्भिरुच्यते । गर्वितः मानी । कृतघ्नः खलः कृतमुपकृतंहंतियः सकृतघ्नः । हिंस्रः वधकः । पापः पापकर्मकर्ता । एवंविधोरौद्रर्क्षेआर्द्रायांजातोभवतीति ॥ ३ ॥

दांतःसुखीसुशीलोदुर्मेधारोगभाक्पिपासुश्च ॥
अल्पेनचसंतुष्टःपुनर्वसौजायतेमनुजः ॥ ४ ॥

अथपुनर्वसौजातस्यस्वरूपमार्ययाह ॥ दांतःशमपरः तपःक्लेशसहः । सुखी सुखितः । सुशीलः शोभनशीलः विनयवान् । दुर्मेधाजडप्रायः । रोगभाक्पीडितदेहः । पिपासुः तृषार्तः । अल्पेनस्तोकेनैवार्थेनसंतुष्टः । एवंविधोमनुजोमनुष्यः पुनर्वसौजायतेउत्पद्यते ॥ ४ ॥

शांतात्मासुभगःपंडितोधनीधर्मसंसृतःपुष्ये ॥
शठसर्वभक्षपापःकृतघ्नधूर्तश्चभौजंगे ॥ ५ ॥

अथपुष्याश्लेषयोर्जातस्यस्वरूपमार्ययाह ॥ शांतात्मेति । शांतात्मा शमदमपरोजितेंद्रियः । सुभगः सर्वजनप्रियः । पंडितःशास्त्रार्थवित् । धनीवित्तवान् । धर्मसंसृतः धर्मनिरतः । एवंविधः पुष्यजोभवति । शठः परकार्यविमुखः । सर्वभक्षः संचयनशीलः । पापःपापकर्मरतः । कृतघ्नः कृतमुपकृतंहंतिसकृतघ्नः । धूर्तःपरवंचनदक्षः । एवंविधोभौजंगेआश्लेषायांजातोभवति ॥ ५ ॥

बहुभृत्यधनोभोगीसुरपितृभक्तोमहोद्यमःपित्र्ये ॥
प्रियवाग्दाताद्युतिमानटनोनृपसेवकोभाग्ये ॥ ६ ॥

अथमघापूर्वाफाल्गुन्योः जातस्यस्वरूपमार्ययाह ॥ बहुभृत्यइति । बहुभृत्यधनः प्रभूतपरिवारवित्तान्वितः । भोगीभोगान्वितः । सुरपितृभक्तः देवानांपितॄणांचभक्तः। महोद्यमःमहोत्साही।एवंविधःपित्र्येमघायांजातोभवति प्रियवाक् अभिमतवक्ता। दातादानशीलः । द्युतिमान्सुकांतिः । अटनः परिभ्रमणशीलः। नृपसेवकः राजसेवानुरतः । एवंविधोभाग्येपूर्वाफाल्गुन्यांजातोभवति ॥ ६ ॥

सुभगोविद्यात्तधनोभोगीसुखभाग्द्वितीयफाल्गुन्याम् ॥
उत्साहीधृष्टःपानपोघृणीतस्करोहस्ते ॥ ७ ॥

अथोत्तराफाल्गुनीहस्तयोर्जातस्यस्वरूपमार्ययाह ॥ सुभगइति । सुभगः सर्वजनप्रियः । विद्यात्तधनः विद्ययाआत्तंधनंयेन । भोगीभोगान्वितः । सुखभाग्दुःखरहितः । एवंविधोद्वितीयफाल्गुन्यामुत्तराफाल्गुन्यांजातोभवति । उत्साहीसोद्यमः। धृष्टःप्रतिभायुक्तः।निर्लज्जोवा।पानपःपानप्रियः आसवानुरक्तः। अघृणीनिर्दयः । तस्करःचोरः। एवंविधोहस्तेजातोभवति ॥ ७ ॥

चित्रांबरमाल्यधरःसुलोचनांगश्चभवतिचित्रायाम् ॥
दांतोवणिक्कृपालुःप्रियवाग्धर्माश्रितःस्वातौ ॥ ८ ॥

अथचित्रास्वात्योर्जातस्यस्वरूपमार्ययाह ॥ चित्रांबरमाल्यधरः चित्राणि नानाप्रकाराणिअंबराणिवस्त्राणिमाल्यानिचधारयति । सुलोचनांगः शोभना नेत्रावयवायस्य । एवंविधः चित्रायांजातोभवति । दांतोविनयान्वितः । जितेंद्रियः । वणिक्क्रयविक्रयज्ञः । कृपालुः दयालुः । केचित्तृपालुरितिपठंति। तृपालुः तृपांनसहते । प्रियवाक्अभिमतवक्ता । धर्माश्रितःधर्मरतः । एवंविधःस्वातौजातोभवति ॥ ८ ॥

ईर्ष्युर्लुब्धोद्युतिमान्वचनपटुःकलहकृद्विशाखासु ॥
आढ्योविदेशवासीक्षुधालुरटनोऽनुराधासु ॥ ९ ॥

अथविशाखानुराधयोर्जातस्यस्वरूपमार्ययाह ॥ ईर्ष्युरिति ईर्ष्युः परद्धिमत्सरी । लुब्धः लोभाभिभूतः। द्युतिमान्सुकांतिः । वचनपटुःसंभाषणदक्षः । केचिदर्थपटुरितिपठंति । अर्थार्जनेपटुःप्रवीणः । कलहकृद्विरोधशीलः।एवंविधो विशाखासुजातोभवति । आढ्यःईश्वरः। विदेशवासी परदेशनिवसनशीलः।क्षुधालुःक्षुधांनसहते।अटनःपरिभ्रमणशीलः । एवंविधोऽनुराधासुजातोभवति॥९॥

ज्येष्ठासुनबहुमित्रःसंतुष्टोधर्मकृत्प्रचुरकोपः ॥
मूलेमानीधनवान्सुखीनहिंस्रःस्थिरोभोगी ॥ १० ॥

अथज्येष्ठामूलयोर्जातस्यस्वरूपमार्ययाह ॥ नबहुमित्रःस्वल्पसुहृत् । संतुष्टः संतोषशीलः । धर्मकृद्धर्मानुरतः । प्रचुरकोपः अतिक्रोधी । एवंविधोज्येष्ठासु जातोभवति । मानीगर्वितःधनवान्प्रभूतवित्तःसुखीसुखितः । नहिंस्रःसौम्य-प्रकृतिः । परविघातंनकरोति । स्थिरःएकमतिः । भोगीभोगान्वितः । एवंवि-धोमूलेजातो भवति ॥ १० ॥

इष्टानंदकलत्रोमानीदृढसौहृदश्चजलदैवे ॥
वैश्वेविनीतधार्मिकबहुमित्रकृतज्ञसुभगश्च ॥ ११ ॥

अथपूर्वोत्तराषाढयोर्जातस्यस्वरूपमार्ययाह ॥ इष्टानंदकलत्रइति । इष्टमभि-मतमानंदजनकं कलत्रंभार्यायस्य । मानीगर्वितः । दृढसौहृदः स्थिरसुहृत् । एवंविधोजलदैवेपूर्वाषाढायांजातोभवति । विनीतःविनयसंयुक्तः । धार्मिकः धर्मज्ञः । बहुमित्रः प्रभूतसुहृत् । कृतज्ञःउपकारशीलः । सुभगश्चसर्वजन-प्रियः । एवंविधोवैश्वदेवे उत्तराषाढायांजातोभवति ॥ ११ ॥

श्रीमाञ्छ्रवणेश्रुतवानुदारदारोधनान्वितःख्यातः ॥
दाताआढ्यःशूरोगीतप्रियोधनिष्ठासुधनलुब्धः ॥ १२ ॥

अथश्रवणधनिष्ठयोर्जातस्यस्वरूपमार्ययाह ॥ श्रीमान्श्रियायुक्तः । श्रुतवा-न्पंडितः । उदारदारः उदारादारायस्य शोभनस्त्रीकः । धनान्वितः वित्तवान् । ख्यातःजनविदितकीर्तिः । एवंविधःश्रवणेजातोभवति । दातादा-नशीलः । आढ्यःईश्वरः । शूरः रणप्रियः । गीतप्रियःगीतवल्लभः । धनलुब्धः अर्थरुचिः । एवंविधोधनिष्ठासुजातोभवति ॥ १२ ॥

स्फुटवाग्व्यसनीरिपुहासाहसिकःशतभिषजिदुर्ग्राह्यः ॥
भाद्रपदासूद्विग्नःस्त्रीजितधनीपटुर्दाताच ॥ १३ ॥

अथशतभिषक्पूर्वाभाद्रपदयोर्जातस्यस्वरूपमार्ययाह ॥ स्फुटवाक्सत्यवा-दी । व्यसनीस्त्र्यादिव्यसनोपहतः । रिपुहाशत्रुघातकः । साहसिकः अस-मीक्षितकार्यकृत् । दुर्ग्राह्यः दुराराध्यः । एवंविधः शतभिषजिजा-तोभवति । उद्विग्नः दुःखितमनाः । स्त्रीजितः स्त्रीभिरभिभूतः । धनी धनवान् । अथवास्त्रियाजितंधनंयस्य । पटुः प्रवक्ता । अथवाधनपटुः

धनार्जनेचतुरः।अदाताकदर्यः । एवंविधः पूर्वाभाद्रपदासुजातोभवति ॥ १३ ॥

वक्तासुखीप्रजावाञ्जितशत्रुर्धार्मिकोद्वितीयासु ॥
संपूर्णांगःसुभगःशूरःशुचिरर्थवान्पौष्णे ॥ १४ ॥

## इति बृहज्जातकेऋक्षशीलाध्यायः ॥ १६ ॥

अथोत्तराभाद्रपदारेवत्योर्जातस्यस्वरूपमार्ययाह ॥ वक्तावचनपटुः संभाषणेदक्षः । सुखीविद्यमानसुखः । प्रजावान्बहुपुत्रपौत्रः । जितशत्रुः जितारिः । धार्मिकः धर्मशीलः । एवंविधोद्वितीयासूत्तराभाद्रपदासुजातोभवति । संपूर्णांगः परिपूर्णावयवः । सुभगः सर्वजनप्रियः । शूरः संग्रामधीरः । शुचिःपरधनादिष्वलुब्धः । अर्थवान् धनान्वितः । एवंविधः पौष्णेरेवत्यां जातोभवति । एतेयथोक्तानक्षत्रस्वभावाश्चंद्रस्यसबलत्वात्परिपूर्णाभवंति॥१४॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतावृक्षशीलाध्यायः ॥ १६ ॥

## अथ राशिशीलाध्यायारंभः ॥

वृत्तातात्रदृगुष्णशाकलघुभुक्क्षिप्रप्रसादोटनःकामीदुर्बलजानुरस्थिरधनःशूरोंगनावल्लभः ॥ सेवाज्ञःकुनखीव्रणांकितशिरामानीसहोत्थाग्रजःशक्त्यापाणितलेंकितोऽतिचपलस्तोयेभीरुःक्रिये ॥ १ ॥

अथातोराशिशीलाध्यायोव्याख्यायते । अथमेषस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ वृत्तेति । वृत्तेपरिवर्तुले आताम्रे लोहितवर्णेदृष्टी चक्षुषीयस्यसवृत्तातात्रदृक् परिवर्तुललोहितनेत्रः । उष्णंशाकंलघुचस्वल्पंभुंक्ते सउष्णशाकलघुभुक् । उष्णभोजीशाकभोजीलघुभोजी । क्षिप्रप्रसादः आश्वेवप्रसीदति । अटनःपरिभ्रमणशीलः । कामीसुरतप्रियः । दुर्बलजानुः निर्मांसलजंघासंधिः।अस्थिरधनः अचिरवित्तः । शूरः रणप्रियः । अंगनावल्लभः स्त्रीप्रियः।अंगनानांवल्लभोअंगनावल्लभायस्य । सेवाज्ञः पराराधनकुशलः।कुनखी कुत्सितनखः । व्रणांकितशिराः सच्छिद्रमूर्द्धा । मानीगर्वितः । सहोत्थाग्रजः सहोत्थानांसहजातानामग्रणीर्गुणप्रधानः । पाणितलेहस्ततलेसाचिह्नविशेषेणांकितः चिह्नितः । अतिचपलः । क्रियास्वनवस्थितः । तोयेचजलेभीरुः सभयः । एवंविधः क्रियेमेषस्थितेचंद्रमसिजातोभवति ॥ १ ॥

कांतःखेलगतिःपृथूरुवदनःपृष्ठास्यपार्श्वांकितस्त्यागीक्लेशसहः
प्रभुःकुकुदवान्कन्याप्रजःश्लेष्मलः॥पूर्वैर्बंधुधनात्मजैर्विरहितः

सौभाग्ययुक्तःक्षमीदीप्ताग्निःप्रमदाप्रियःस्थिरसुहृन्मध्यांत्य-
सौख्योगवि ॥ २ ॥

अथवृषस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ कांतइति । कांतः दर्शनीयः । खेलगतिः सविलासगामी । पृथूरुवदनः पृथूविस्तीर्णावूरूवदनंमुखंयस्य।पृष्ठंपश्चिमभागः । आस्यंवक्त्रंपार्श्वेप्रसिद्धेएषामन्यतमस्थानेंकितश्चिह्नितः । त्यागीदाता । क्लेशसहः कदर्थनासमर्थः । प्रभुरप्रतिहताज्ञः । ककुदवान् ककुदसंयुक्तः । कन्याप्रजः कन्याप्रजायस्यस्त्रीजनकः । श्लेष्मलः कफाधिकः । पूर्वैः प्रथमैः बंधुभिः कुटुंबैः धनैःवित्तैः आत्मजैः पुत्रैश्चविरहितः वियुक्तः । सौभाग्ययुक्तः सर्वजनवल्लभः । क्षमीक्षमावान् । सहिष्णुरित्यर्थः । दीप्ताग्निः बह्वाशी । प्रमदाप्रियः स्त्रीवल्लभः । स्थिरसुहृत्दृढमित्रः । मध्यांतसौख्यः । मध्येयौवनेंत्येवृद्धत्वेचसुखितः । अर्थादेवबाल्येदुःखितः । एवंविधोगविवृषस्थेचंद्रेजातोभवति ॥ २ ॥

स्त्रीलोलःसुरतोपचारकुशलस्ताम्रेक्षणःशास्त्रविद्दूतःकुंचित-
मूर्द्धजःपटुमतिर्हास्येंगितद्यूतवित् ॥ चार्वंगःप्रियवाक्प्रभक्ष-
णरुचिर्गीतप्रियोनृत्यवित्क्लीबैर्यातिरतिंसमुन्नतनसश्चंद्रेतृती-
यर्क्षगे ॥ ३ ॥

अथमिथुनस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ स्त्रीलोलइति । स्त्रीलोलः स्त्रीष्वभिलाषकरः । सुरतोपचारकुशलः सुरतोपचारेसुरतकर्मणिकामशास्त्रेषु कुशलः शिक्षितः । ताम्रेक्षणः लोहितनेत्रः । शास्त्रविच्छास्त्रज्ञः पंडितः । दूतः परेच्छयागमनागमनशीलः । कुंचितमूर्द्धजः कुटिलशिरोरुहः । पटुमतिश्चतुरधीः अतीवप्राज्ञः । हास्यमुपहासम् इंगितंपरचित्तज्ञानं द्यूतंप्रसिद्धम् एतानिवेत्तिजानाति । चार्वंगः शोभनावयवः । प्रियवागभिमतवक्ता । प्रभक्षणरुचिः बहुभुक् । गीतप्रियः गीतरतिः । नृत्यविन्नृत्यज्ञः । क्लीबैःषंढैः सहरतिंयातिगच्छति । समुन्नतनसउन्नतनासिकः । एवंविधश्चंद्रेतृतीयर्क्षगेतृतीयराशौस्थितेमिथुनगेजातोभवतीत्यर्थः ॥ ३ ॥

आवक्रद्रुतगःसमुन्नतकटिःस्त्रीनिर्जितःसत्सुहृद्दैवज्ञःप्रचुरा-
लयःक्षयधनैःसंयुज्यतेचंद्रवत् ॥ ह्रस्वःपीनगलःसमेतिचवशं
साम्नासुहृद्वत्सलस्तोयोद्यानरतःस्ववेश्मसहितेजातःशशां-
केनरः ॥ ४ ॥

अथकर्कटस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ आवक्रेति । आवक्रंकुटिलंद्रुतं सत्वरंगच्छतीति आवक्रद्रुतगःकुटिलसत्वरगामी । समुन्नतकटिःउच्चजघनः। स्त्रीनिर्जितः प्रमदाजितः। सत्सुहृच्छोभनमित्रः। दैवज्ञः ज्योतिःशास्त्रार्थवेत्ता । प्रचुरालयःप्रभूतगृहकर्ता । क्षयधनैरपचयोपचयैश्चंद्रवच्छशिवत्संयुज्यते । कदाचिद्विधनइत्यर्थः । चंद्रक्षयवृद्धिवत् । हस्वः अदीर्घः । पीनगलः मांसलकंठः । साम्नाप्रीत्यावशं वश्यतांसमेतियाति । सुहृद्वत्सलः मित्रवल्लभः । तोयोद्यानरतः जलोपवनसक्तः। तोयेजलेउपवनेउद्यानेचरतः। एवंविधः स्ववेश्मसहितेकर्कटस्थेशशांकेचंद्रेनरःपुरुषः जातोभवति ॥ ४ ॥

तीक्ष्णस्थूलहनुर्विशालवदनःपिंगेक्षणोल्पात्मजःस्त्रीद्वेषाप्रियमांसकाननगःकुप्यत्यकार्येचिरम्॥ क्षुत्तृष्णोदरदंतमानसरुजासंपीडितस्त्यागवान्विक्रांतःस्थिरधीः सुगर्वितमनामातुर्विधेयोऽर्कभे ॥ ५ ॥

अथसिंहस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ तीक्ष्णइति । तीक्ष्णः अमर्षशीलः । स्थूलहनुः वृद्धहनुः बृहत्कपोलः । विशालवदनो विस्तीर्णवक्त्रः।पिंगेक्षणः कपिलनेत्रः । अल्पात्मजः स्वल्पापत्यः । स्त्रीद्वेषी प्रमदाद्विट् । स्त्रीद्वेष्टेतिकेचित्पठंति । प्रियमांसकाननगः मांसमामिषंकाननमरण्यंनगः पर्वतः एतेप्रियायस्य । आमिषवनपर्वतानुरतः । अकार्येअकरणीयेर्थेकुप्यतिक्रुध्यति। चिरंबहुकालम् ।केचिदकांडेइतिपठंति। अकांडेअकाले। क्षुत्प्रसिद्धा । तृष्णापिपासाउदरंजठरंदंतादशनाः मनश्चित्तमेभ्योजातारुजः पीडास्ताभिःसंपीडितउपतप्तः । त्यागवान्दाता । विक्रांतःपराक्रमशीलः । स्थिरधीरेकमतिः । गर्वितमनाः अभिमानसंयुक्तः । मातुर्विधेयो जननीवश्यः भक्तइत्यर्थः । विधेयोवचनग्राहीत्यमरः । एवंविधोर्कभेसूर्यराशौ सिंहस्थेचंद्रेजातोभवति ॥ ५ ॥

व्रीडामंथरचारुवीक्षणगतिःस्रस्तांसबाहुःसुखीश्लक्ष्णःसत्यरतःकलासुनिपुणःशास्त्रार्थविद्धार्मिकः ॥ मेधावीसुरतप्रियःपरगृहैर्वित्तैश्चसंयुज्यतेकन्यायांपरदेशगःप्रियवचाःकन्याप्रजोल्पात्मजः ॥ ६ ॥

अथकन्यागतेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ व्रीडामंथरचारुवीक्षणगतिरिति । व्रीडालज्जातयायन्मंथरत्वमलसत्वंतेनचारुशोभनंवीक्ष-

णंदृष्टिपातोगतिःगमनंचयस्य । स्रस्तावधःपतितौशिथिलावंसौस्कंधौबाहूसु- जौयस्य । सुखीसुखितःश्लक्ष्णःमृदुवाक्तनुकायोवा । सत्यरतःसत्यभाषी । धार्मिकश्चपरमार्थवादी । कलासुनिपुणः कलासुनृत्यगीतवाद्यपुस्तकचित्रकर्मसु निपुणः सुज्ञः । शास्त्रार्थवित्पंडितः । धार्मिकः धर्मानुरतः । मेधावीबुद्धिमान् । सुरतप्रियः कामलोलुपः।परगृहैः परवेश्मभिः वित्तैर्धनैश्चसंयुज्यते। सम्यग्युक्तो भवति। परदेशगः अन्यदेशनिवासशीलः । प्रियवचाः प्रियभाषी । कन्याप्रजः कन्याप्रजायस्यस्त्रीजनकः । अल्पात्मजःस्वल्पपुत्रः । एवंविधःकन्यायांस्थितेचंद्रे- जातोभवति ॥ ६ ॥

देवब्राह्मणसाधुपूजनरतःप्राज्ञःशुचिःस्त्रीजितःप्रांशुश्चोन्नतना- सिकःकृशचलद्गात्रोटनोर्थान्वितः ॥ हीनांगःक्रयविक्र- येषुकुशलोदेवद्विनामासरुग्बंधूनामुपकारकृद्विरुषितस्त्यक्त- स्तुतैःसप्तमे ॥ ७ ॥

अथतुलास्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ देवेति । देवब्राह्मणसाधुपूजनरतः । देवानांसुराणांब्राह्मणानांद्विजानांसाधूनांसज्जनानांचपूजने रतः सक्तः । प्राज्ञःमेधावीअत्रमेधाबुद्धिः।प्रज्ञा लक्षणम्-अतीतानुस्मृतिर्मेधाबुद्धि- स्तत्कालग्राहिणी । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृता । शुचिःपरधनाद्यलुब्धः श्रोत्रियोवा । स्त्रीजितः योषितांवशगः । प्रांशुरत्युच्चः । उन्नतनासिकः अत्युन्नतनासः । कृशचपलगात्रः दुर्बलशिथिलावयवः कृशंदुर्बलंचपलंबलहीनंगात्रंशरीरंयस्य अटनः परिभ्रमणशीलः । अर्थान्वितः सधनः । हीनांगः अपरिपूर्णावयवः । क्रयेषुविक्रयेषुचकुशलः शक्तः । देवाद्विनामा सभ्यपर्यायद्वितीयाभिधानः द्वितीयनामदेवाख्यंचास्यभवति । सरुक्पीडितदेहः । बंधूनांस्वकुटुंबानामुपकारकृद्धितकारी । तैश्चबंधुभिः विरुषितः भर्त्सितः पराभूतः । त्यक्तः त्याजितश्च । एवंविधः सप्तमेतुलास्थेचंद्रमसि जातोभवति ॥ ७ ॥

पृथुलनयनवक्षावृत्तजंघोरुजानुर्जनकगुरुवियुक्तःशैशवेव्या- धितश्च॥नरपतिकुलपूज्यःपिंगलःक्रूरचेष्टोझषकुलिशखगांक- श्छन्नपापोलिजातः ॥ ८ ॥

अथवृश्चिकस्थेचंद्रमसिजातस्यस्वरूपंमालिन्याह ॥ पृथुलेति । पृथुलनयनवक्षाः । पृथुलेविस्तीर्णेनयनेनेत्रेवक्षउरोयस्य । वृत्तेपरिवर्तुलेजंघेऊरू

जानुनीचयस्य । जनकैः मातृपितृभिः । गुरुभिश्चोपदेशकारिभिः । गौरवयुक्तैश्चवियुक्तोराहितः । शैशवेबाल्येव्याधितः पीडितः । नरपतिकुलेराज्ञांवंशेपूज्यः आराध्यः । पिंगलः कपिलः । क्रूरचेष्टः विषमस्वभावः । झषकुलिशखगांकः झषोमीनः कुलिशंवज्रं खगः पक्षीएतैर्मत्स्यवज्रपक्षिसमानैरंकैश्चिह्नैरंकितश्चिह्नितः । छन्नपापः गुप्ताशुभकृत् । एवंविधोलिनिवृश्चिकस्थेचंद्रे जातोभवति ॥ ८ ॥

व्यादीर्घास्यशिरोधरःपितृधनस्त्यागीकविर्वीर्यवान्वक्तास्थूलरदश्रवाधरनसःकर्मोद्यतःशिल्पवित् ॥ कुब्जांसः कुनखीसमांसलभुजःप्रागल्भ्यवान्धर्मविद्बंधुद्विट्नबलात्समेतिचवशंसाम्नैकसाध्योश्वजः ॥ ९ ॥

अथधनुर्धरस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ व्यादीर्घास्येति । व्यादीर्घास्यशिरोधरः । व्यादीर्घमतिदीर्घमास्यंमुखंशिरोधराग्रीवाचयस्य । पितृधनः जनकवित्तान्वितः । त्यागीदाता । कविः काव्यज्ञः । वीर्यवान्बली । वक्तासंभाषणेदक्षः । स्थूलरदश्रवाधरनसः स्थूलामहत्प्रमाणारदादंताः श्रवसीकर्णौअधरओष्ठः नसः नासिकाघ्राणः एतेसर्वएवस्थूलायस्य । कर्मोद्यतः सर्वकार्याणामुद्यमशीलः । शिल्पवित् शिल्पज्ञः लिपिपुस्तकचित्रज्ञः । कुब्जांसः अस्पष्टस्कंधः । कुनखीकुत्सितनखः । समांसलभुजः पीनबाहुः । प्रागल्भ्यवान् अतिप्रतिभायुक्तः । धर्मवित् धर्मज्ञः । बंधुद्विट् बंधूनामप्रीतिभाक् । द्वेष्टाबलात् हठादाक्रमणात् वशंसंविधेयतांवश्यतांनसमेति नायाति साम्नाप्रीत्याएकेनैवगुणेनसाध्यः स्वीक्रियते । एवंविधोश्वजोधनुषिस्थितेचंद्रेजातोभवति ॥ ९ ॥

नित्यंलालयतिस्वदारतनयान्धर्मध्वजोधः कृशः स्वक्षः क्षामकटिर्गृहीतवचनः सौभाग्ययुक्तोलसः ॥ शीतालुर्मनुजोऽटनश्चमकरेसत्वाधिकः काव्यकृल्लुब्धोगम्यजरांगनासुनिरतः संत्यक्तलज्जोघृणः ॥ १० ॥

अथमकरस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ नित्यंलालयतीति । नित्यंलालयतिस्वदारतनयान् स्वकलत्रंतनयांश्चपुत्रान् लालयति आराधयति प्रीत्याभजते । धर्मध्वजः दांभिकःमिथ्याधार्मिकः । अधः कृशः अधोभागादतिदुर्बलः । स्वक्षः शोभननेत्रः । क्षामकटिः कृशजघनः । गृही-

तवचनः उक्तग्राहकः । यदुच्यतेतत्सकृदेवगृह्णाति । सौभाग्ययुक्तः सर्वजनप्रियः । अलसः क्रियास्वपटुः । शीतालुः शीतंनसहते । अटनः परिभ्रमणशीलः । सत्वाधिकः उदारचेष्टः । बलाधिकोवा । काव्यकृत् विद्वान् । लुब्धः लोभाभिभूतः । अगम्यास्वगमनीयासुनिकृष्टजातिषुजरदंगनासु वृद्धस्त्रीषुनिरतः संसक्तः । संत्यक्तलज्जः विमुक्तव्रीडः । अघृणः निर्दयः । एवंविधोमनुजोमनुष्योमकरस्थेचंद्रमसि जातोभवति ॥ १० ॥

**करभगलः शिरालुः खरलोमशदीर्घतनुः पृथुचरणोरुपृष्ठजघनास्यकटिर्जरठः ॥ परवनितार्थपापनिरतः क्षयवृद्धियुतः प्रियकुसुमानुलेपनसुहृद्धटजोध्वसहः ॥ ११ ॥**

अथकुंभस्थेचंद्रेजातस्यस्वरूपंत्रोटकेनाह ॥ करभगलइति । करभगलः उष्ट्रसमग्रीवः । शिरालुः शिरासंततः । खरा कर्कशालोमायस्याःसालोमशादीर्घाऽत्युच्चातनुः शरीरंयस्य । पृथूविस्तीर्णौचरणौपादौ तथा ऊरूजानूपरिभागौ पृष्ठंदेहपश्चिमभागो जघनं नितंबस्थानमास्यंमुखंकटिश्च बस्तिः यस्यसः पृथुचरणोरुपृष्ठजघनास्यकटिः । तथाजरठः मूर्खः परवनितासुपरस्त्रीषुपरार्थेषुपापेचनिरतः सक्तः । क्षयवृद्धियुतः उपचयापचयैर्युक्तः । प्रियकुसुमानुलेपनसुहृत् । कुसुमानिपुष्पाणि अनुलेपनंसमालंभनं सुहृदोमित्राणिप्रियाणियस्य । अध्वसहः पथिक्षमः । एवंविधोघटजः कुंभस्थेचंद्रमसिजातोभवति ॥ ११ ॥

**जलपरधनभोक्तादारवासोनुरक्तः समरुचिरशरीरस्तुंगनासोबृहत्कः ॥ अभिभवतिसपत्नान्स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगीपंडितश्चांत्यराशौ ॥ १२ ॥**

अथमीनस्थेचंद्रमसिजातस्यस्वरूपंमालिन्याह ॥ जलपरधनभोक्तेति । जलपरधनभोक्ता । जलधनानामुदकोत्पन्नवित्तानांमुक्ताफलानांक्रयविक्रयजातानांपरधनानांचभोक्तास्वामी । दारवासोनुरक्तः दारेषुकलत्रेषुविषयेषुवासांसिवस्त्राणिएतेषुचानुरक्तः । समरुचिरशरीरः समंतुल्यंसर्वावयवपरिपूर्णं रुचिरंदीप्तिमच्छरीरंयस्य । तुंगनासोऽत्युच्चनासिकः । बृहत्कः विस्तीर्णमूर्द्धा । अभिभवतिसपत्नान् सपत्नान् शत्रून् अभिभवति पराभवति । स्त्रीजितः प्रमदावशगः । चारुदृष्टिः शोभनाक्षः ।

द्युतिर्निधिधनभोगी द्युतिः कांतिः निधिः भूमावधःस्थापितोऽर्थो निधिशब्देनो च्यते धनंवित्तमेषांभोगीभोक्ता । पंडितश्चशास्त्रार्थवित् । एवंविधोंत्यराशौमीनस्थेचंद्रमासिजातोभवति ॥ १२ ॥

बलवतिराशौतदधिपतौचस्वबलयुतःस्याद्यदितुहिनांशुः ॥
कथितफलानामविकलदाताशशिवदतोन्येत्यनुपरिचिंत्याः॥१३॥

## इतिबृहज्जातकेचन्द्रराशिशीलाध्यायः ॥ १७ ॥

अथोक्तराशिस्वरूपमपवादंचभ्रमरविलसितेनाह ॥ बलवतिराशाविति । पुरुषस्यजन्मसमयेयस्मिन्राशौचंद्रमाव्यवस्थितस्तस्मिन्बलवतिसबले तथातस्यचराशेर्योधिपतिस्तस्मिंस्तदधिपतौचबलवति । तथातुहिनांशुश्चंद्रमाःसचयदिस्वबलेनात्मीयेनवीर्येणपूर्वोक्तेनसंयुतोन्वितः स्याद्भवेत् । एवमेतेषुत्रिषुयदि सबलत्वंविद्यते तदा यथोक्तराशिस्वरूपं जातः पुरुषोभवति । यतउक्तं कथितफलानामविकलदातेति । अनयासामग्र्यासचंद्रः कथितफलानामुक्तस्वरूपाणामविकलानांपरिपूर्णानां दाताभवति । एषांमध्याद्द्वयोर्बलवतोर्मध्येयुक्तं स्वरूपंप्राप्नोति । एकस्मिन्बलवतिहीनंकिंचित् । नकस्मिंश्चिद्बलवतितदुक्तं स्वरूपंनकिंचिद्भवति । शशिवदतइति । अतोस्माच्चंद्रादन्येपरिशिष्टायेग्रहाः रविभौमज्ञगुरुसितसौराः । शशिवच्चंद्रवत् परिकल्प्याः । यत्रराशौस्थिताभवंति तदाश्रयेणवक्ष्यमाणंस्वरूपंदास्यंति । तदपिचंद्रवत् । एतदुक्तंभवति । बलवतिराशौ । तदधिपतौच । बलवतियस्यग्रहस्यराशिस्वरूपंपठ्यते तस्मिन्नपिबलवतितदधिपतौचसंपूर्णंतत्पठितंराशिस्वरूपंभवति । यद्येकयोश्चबलवतोर्मध्यमोनमितिनकस्मिंश्चिद्बलवति । नैतत्किंचिदिति । चंद्रराशिस्वभावइति ॥ १३ ॥

इति बृहज्जातकेचन्द्रराशिशीलाध्यायःसप्तदशः ॥ १७ ॥

प्रथितश्चतुरोटनोल्पवित्तःक्रियगेत्वायुधभृद्दितुंगभागे ॥ गविवस्त्रसुगंधपण्यजीवीवनिताद्विट्कुशलश्चगेयवाद्ये ॥ १ ॥

अथमेषवृषगतेर्केजातस्यस्वरूपमौपच्छंदसिकेनाह ॥ प्रथितः प्रख्यातः चतुरः दक्षः।अटनः परिभ्रमणशीलः । अल्पवित्तः स्तोकार्थः । आयुधभृच्छस्त्रधारणजीवी । एवंविधः क्रियगेमेषस्थेभानावादित्येजातोभवति । एतच्चफलंवितुंगभागेयदितत्रैवमेषस्थः आदित्यः । परमोच्चस्थोभवति । तुंगभागंपरमोच्चंवर्जयित्वाअन्यत्रस्थितेर्केचैतत्फलंदोषभाग्जातोनभवति । तद्यथा

अल्पवित्तोबहुवित्तोभवति । अटनोनभवति । आयुधभृन्नभवति । तस्यान्ये आयुधभृतोनुयायिनोभवंति । अन्येतुपुनः पूर्वोक्तागुणाः । प्रथितश्चतुरोभवति । गवीत्यादि । वस्त्रैरंबरैः सुगंधद्रव्यैःपण्यैश्चजीवति । वनिताद्विट् स्त्रीषुद्वेष्टा । गेयेगीतेवाद्येच वादनविधौकुशलः शिक्षितः । एवंविधोगवि वृषस्थेसूर्येजातोभवति ॥ १ ॥

विद्याज्योतिषवित्तवान्मिथुनगेभानौकुलीरेस्थितेतीक्ष्णोऽस्वः परकार्यकृच्छ्रमपथक्लेशैश्चसंयुज्यते॥सिंहस्थेवनशैलगोकुलरतिर्वीर्यान्वितोज्ञःपुमान्कन्यास्थेलिपिलेख्यकाव्यगणितज्ञानान्वितःस्त्रीवपुः ॥ २ ॥

अथमिथुनकर्कसिंहकन्यास्थेसूर्येजातस्यस्वरूपंशार्दूलविक्रीडितेनाह॥विद्याज्योतिषवित्तवान् । विद्यावान्पंडितः । ज्योतिषवान् ज्योतिषशास्त्रज्ञः । वित्तवान्धनी । एवंविधोमिथुनस्थेभानौजातोभवति । तीक्ष्णःउग्रः । अस्वः दरिद्रः । परकार्यकृदन्येषांकार्यकर्ता । श्रमपथक्लेशैः श्रमेणखेदेनपथाध्वनाक्लेशैः दुःखैश्चसर्वकालंसंयुज्यते । एवंविधः कुलीरस्थेकर्कटगतेभानौजातोभवति । सिंहस्थइति । वनमरण्यं शैलःपर्वतः गोकुलः गोवाटः एतेषुस्थानेषुरतिः निवासशीलः । तदासक्तइत्यर्थः । वीर्यान्वितः बली । अज्ञःमूर्खः । एवंविधः पुमान्पुरुषः सिंहस्थेर्केजातोभवति । लिपिरक्षरविन्यासः लेख्यंचित्रकर्म काव्यंकवेःकर्म । गणितंग्रहगणितादि । ज्ञानंविज्ञानम् । एतैरन्वितोयुक्तः । स्त्रीवपुः स्त्रीतुल्यशरीरः । एवंविधः कन्यास्थेर्केजातोभवति ॥ २ ॥

जातस्तौलिनिशौंडिकोध्वनिरतोहैरण्यकोनीचकृत्क्रूरःसाहसिकोविषार्जितधनःशस्त्रांतगोलिस्थिते ॥ सत्पूज्योधनवान्धनुर्द्धरगतेतीक्ष्णोभिषक्कारुकोनीचोऽज्ञःकुवणिङ्मृगेल्पधनवाँल्लुब्धोन्यभाग्यैरतः ॥ ३ ॥

अथतुलावृश्चिकधन्विमकरस्थेर्केजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ जातइति । शौंडिकोमद्यविक्रयीभवति । मद्यकरोवेतिकेचित् । अध्वनिरतः पथिप्रसक्तः । हैरण्यकः स्वर्णकारः । नीचकृदनुचितकर्मकर्ता । एवंविधः तौलिनितुलास्थेर्केजातोभवति । क्रूरःउग्रस्वभावः । साहसिकः असमीक्षितकार्यकृत् । तथाच । असमीक्षितकार्याणांकर्त्तासाहसिकःस्मृतः ॥ विषार्जितधनः । विषप्रयोगैरर्जितंधनंसंचितंवित्तंयेन । प्रत्यंतरेवृथार्जितधनः । यद्धनमर्जयति

तदस्यवृथानिष्फलंभवति चौरादयोपहरंति । शस्त्रांतगः शस्त्रनैपुण्यकः शस्त्रस्यायुधस्यांतगः एवंविधोलिस्थितेवृश्चिकगतेर्केजातोभवति । सत्पूज्यः सतामर्चनीयः । धनवान्वित्तयुक्तः । तीक्ष्णःक्रूरचेष्टः । भिषक् वैद्यप्रयोगज्ञः । कारुकः शिल्पकर्मज्ञः । एवंविधोधनुर्धरस्थेर्केजातोभवति । नीचः । कुलानुचिताधर्मकर्मकृत् । अज्ञःमूर्खः । कुवणिक् कुत्सितवाणिक् । अल्पधनवान् स्तोकार्थः । लुब्धः लोभाभिभूतः । अन्यभाग्यैरतः परकीयैर्भाग्यैः वित्तादिभिरतः परार्थोपकारभोक्ता । एवंविधोमृगेमकरस्थेर्केजातोभवति ॥ ३ ॥

नीचोघटेतनयभाग्यपरिच्युतोस्वस्तोयोत्थपण्यविभवोवनिताहतोंत्ये ॥ नक्षत्रमानवतनुःप्रतिमेविभागेलक्ष्मादिशेत्तुहिनरश्मिदिनेशयुक्ते ॥ ४ ॥

अथकुंभमीनगतेर्केजातस्यस्वरूपंचंद्रार्कयोरेकराशिगतयोस्तुलक्ष्मज्ञानं वसंततिलकेनाह ॥ नीचइति । नीचः कुलानुचिताधर्मकर्मकृत् । तनयैःपुत्रैः भाग्यैश्चपरिच्युतः त्यक्तः पुत्रैःजनवाल्लभ्येनचविरहितः । अस्वःनिर्धनः । एवंविधोघटेकुंभस्थेर्केजातोभवति । तोयोत्थंजलोत्पन्नंमुक्ताफलादितत्पण्येनतद्विक्रयेणविभवमैश्वर्यंयस्य । वनिताहृतः स्त्रीपूज्यः । एवंविधोंत्येमीनस्थेर्के जातोभवति । नक्षत्रमानवतनुरित्यादि । नक्षत्रमानवकोराशिपुरुषः कालांगानीत्यादिनाप्रदर्शितः।तुहिनरश्मिश्चंद्रः । दिनेशआदित्यः । एतौसमेतौ यस्मिन्राशौस्थितौसराशिनक्षत्रपुरुषस्ययस्मिन्नंगेस्थितस्तत्रपुरुषस्यजातस्यलक्ष्मचिह्नंमस्तकादिसमादिशेत् वदेत् । यथामेषस्थयोः शिरसि । वृषस्थयोः । मुखइत्येवमूह्यम् । इतिआदित्यराशिस्वभावः ॥ ४ ॥

नरपतिसत्कृतोटनश्चमूपवणिक्सधनाःक्षततनुश्चौरभूरिविषयांश्चकुजःस्वगृहे ॥ युवतिजितान्सुहृत्सुविषमान्परदाररतान्कुहकसुवेषभीरुपरुषान्सितभेजनयेत् ॥ ५ ॥

अथमेषवृश्चिकवृषतुलस्थेकुजेजातस्यस्वरूपंत्रोटकेनाह ॥ नरपतिसत्कृतः राजपूजितः । अटनःपरिभ्रमणशीलः।चमूपःसेनापतिः।वणिक्क्रयविक्रयज्ञः।सधनः वित्तान्वितः । क्षततनुःविक्षतदेहःव्रणितशरीरः। चौरस्तस्करः । भूरिविषयः । विप्रकीर्णेंद्रियः । एवंविधान्स्वगृहेमेषवृश्चिकस्थःकुजः भौमः जनयेत् । युवतिजितःस्त्रीविधेयः । सुहृत्सुमित्रेषुविषमः दुर्विधेयः सक्रूरस्वभावः । परदाररतः परयोषितिप्रसक्तः । कुहकज्ञःऐंद्रजालिकः । सुवेषःशोभनालं-

कारः । भीरुःसभयः । परुषःकर्कशः । निस्नेहः । एवंविधान्पुरुषान्सितभेशुक्रक्षेत्रेवृषेतुलेचस्थितोभौमोजनयेदुत्पादयेत् ॥ ५ ॥

बौधेसहस्तनयवान्विसुहृत्कृतज्ञोगांधर्वयुद्धकुशलःकृपणोभयोर्थी ॥ चांद्रेर्थवान्सलिलयानसमर्जितस्वःप्राज्ञश्चभूमितनयेविकलःखलश्च ॥ ६ ॥

अथमिथुनकन्याकर्कटस्थेभौमेजातस्यस्वरूपंवसंततिलकेनाह ॥ अथमिथुनकन्यागतेभौमेजातस्यस्वरूपमाह । बौधेइति । असहः तेजस्वी । तनयवान् । पुत्रयुक्तः।विसुहृत् मित्ररहितः । कृतज्ञःपरोपकारशीलः । गांधर्वयुद्धकुशलः गांधर्वेगीतेयुद्धेचसंग्रामेप्रवेशानिर्गमव्यूहरचनादिषुचकुशलः तज्ज्ञः । कृपणः अदाता । अभयःनिर्भयः । अर्थीयाश्चापरः । एवंविधोबौधेमिथुनकन्यास्थे कुजेभौमेजातोभवति । अथकर्कटस्थेभौमेजातस्यस्वरूपमाह ॥ चांद्रेइति । अर्थवान्सधनः । सलिलयानसमर्जितस्वः सलिलयानेन प्लवादिनासम्यगर्जितंस्वंधनंयेन । अथवासलिलेनजलेनयानेनगमनेनाध्वनासमर्जितंस्वंधनंयेन । प्राज्ञःमेधावी । विकलोंगहीनः । खलःदुर्जनः । एवंविधश्चांद्रेकर्कटगतेभौमेजातोभवति ॥ ६ ॥

निःस्वः क्लेशसहोवनांतरचरः सिंहेल्पदारात्मजोजैवेनैकरिपुर्नरेंद्रसचिवःख्यातोभयोल्पात्मजः॥ दुःखार्तोविधनोऽटनोनृतरतस्तीक्ष्णश्चकुंभस्थितेभौमेभूरिधनात्मजोमृगगतेभूपोथवातत्समः ॥ ७ ॥

अथसिंहधन्विमीनकुंभमकरस्थेभौमेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ निःस्वइति । निःस्वः निर्धनः । क्लेशसहः आपद्धीरः कदर्थनाक्षमः । वनांतरचरः अरण्यमध्यचारी । केचिदभयोवनचरइतिपठंति । अभयोभयरहितः । वनांतरचरोरण्यचारी । अल्पदारात्मजोल्पकलत्रः अल्पापत्यः । एवंविधः सिंहस्थेभौमेजातोभवति । अनेकरिपुः बह्वरिः । नरेंद्रसचिवः मंत्री । ख्यातः विदितकीर्तिः । अभयः निर्भयः । अल्पात्मजः स्वल्पापत्यः । एवंविधोधन्विमीनस्थेभौमेजातोभवति । दुःखार्तः नित्यंदुःखसंतप्तः । विधनः दरिद्रः । अटनः परिभ्रमणशीलः । अनृतरतः असत्यभाषी । तीक्ष्णः निरपेक्षः क्रूरः । एवंविधः कुंभस्थेभौमेजातोभवति । भूरिधनात्मजः । प्रभूतधनः प्रभूतपुत्रः।भूपःराजा अथवातत्समः राजतुल्यः। एवंविधोमृगगते मकरस्थेभौमेजातोभवति ॥ ७ ॥

द्यूतर्णपानरतनास्तिकचौरनिःस्वाःकुस्त्रीककूटकृदसत्यरताः कुजर्क्षे॥आचार्यभूरिसुतदारधनार्जनेष्टाः शौक्रेवदान्यगुरुभक्तिरताश्चसौम्ये ॥ ८॥

अथमेषवृश्चिकतुलवृषगतेबुधेजातस्यस्वरूपंवसंततिलकेनाह॥ द्यूतेति। द्यूतेऽक्षज्ञानेऋणेपरस्वहरणेपानेचनिरतःसक्तः । नास्तिकः शास्त्रार्थादपेतः तार्किकः नास्तिपरलोकेमतिर्यस्यसनास्तिकः । चौरस्तस्करः । निःस्वोदरिद्रः । कुस्त्रीकः कुत्सितभार्यः । कूटकृत् कूटकर्तादांभिकः । असत्यनिरतः अनृतभाषी।एवंविधा जाताः सौम्येबुधेभौमर्क्षेमेषवृश्चिकस्थेभवंति । आचार्येत्यादि । आचार्यः उपदेशकर्त्ता।भूरिसुतःप्रभूतापत्यः । भूरिदारोबहुकलत्रः । धनार्जनेष्टः धनार्जनमिष्टंयस्य । अर्थार्जनेनित्यमुद्यतः। वदान्यः दाता । गुरुभक्तिरताः ।मातृपितृगुरूणांभक्ताः । एवंविधाःपुरुषाःशौक्रेवृषतुलस्थेबुधेजाताभवंति ॥ ८ ॥

विकत्थनः शास्त्रकलाविदग्धः प्रियंवदःसौख्यरतस्तृतीये ॥ जलार्जितस्वःस्वजनस्यशत्रुः शशांकजेशीतकरर्क्षयुक्ते ॥ ९॥

अथमिथुनकर्कटस्थेबुधेजातस्यस्वरूपमुपेंद्रवज्रयाह ॥ विकत्थनइति । विकत्थनः वाचालः असत्यवादी । शास्त्रकलाविदग्धः शास्त्रेकलासुचगीतवाद्यनृत्यलेपचित्रकर्मसुविदग्धः शिक्षितः । प्रियंवदोभिमतवक्ता । सौख्यरतः सुखासक्तः । एवंविधः शशांकजेबुधे तृतीयेमिथुनस्थेजातोभवति । जलार्जितइति । जलार्जितस्वः जलेनोदकेनार्जितंस्वंधनंयेनसः । केचिद्बलार्जितस्वइति बलेनवीर्येणार्जितंस्वंधनंयेन । स्वजनस्यात्मीयजनस्यचबंधुजनस्यशत्रुः रिपुः । एवंविधः शशांकजेबुधेशीतकरर्क्षेचंद्रराशौकर्कटयुकेजातोभवति ॥ ९॥

स्त्रीद्वेष्योविधनसुखात्मजोऽटनोज्ञः स्त्रीलोलःस्वपरिभवोर्कराशिगेज्ञे ॥ त्यागीज्ञःप्रचुरगुणः सुखीक्षमावान्युक्तिज्ञोविगतभयश्चषष्ठराशौ ॥ १० ॥

अथसिंहकन्यागतेबुधेजातस्यस्वरूपंप्रहर्षिण्याह ॥ स्त्रीद्वेष्यइति । स्त्रीणांद्वेष्यः स्त्रीद्वेष्यः । विधनसुखात्मजः विधनोधनरहितः । विसुखः विगतसुखः । विगतात्मजः पुत्ररहितः । अटनः परिभ्रमणशीलः । अज्ञः मूर्खः । स्त्रीलोलः वनिताभिलाषी । स्वपरिभवः स्वेषामात्मीयानांसकाशात्परिभवोयस्य । एवंविधोज्ञेबुधेऽर्कराशिगेसिंहस्थेजातोभवति । त्यागीदाता।ज्ञःपंडितः। प्रचुरगुणः प्रभूतगुणैर्युतः । गुणाविद्याशौर्यादयः।सुखीसुखितः।क्षमावान्सहिष्णुः।

युक्तिज्ञः प्रयोगवेत्ता । विगतभयः निर्भयः । एवंविधः षष्ठराशौकन्यास्थेबुधे जातोभवति ॥ १० ॥

परकर्मकृदस्वशिल्पबुद्धीऋणवान्विष्टिकरोबुधेर्कजर्क्षे ॥
नृपसत्कृतपंडिताप्तवाक्योनवमेंत्येजितसेवकोंत्याशिल्पः॥११॥

अथमकरधन्विमीनगतेबुधेजातस्यस्वरूपमौपच्छंदसिकेनाह॥ परकर्मकृदिति । परकर्मकृत् परप्रेष्यकरः । अस्वः दरिद्रः । शिल्पबुद्धिः शिल्पकर्मस्वनुरतमतिः । ऋणवान् परस्वग्रहणशीलः । विष्टिकरः आज्ञाकरः । एवंविधोर्कजर्क्षेमकरकुंभस्थेबुधेजातोभवति । नृपसत्कृतः राजपूजितः नृपसंमतोवा राजवल्लभः । पंडितः विद्वान् । आप्तवाक्यः व्यवहारार्थवेत्ता आप्तमनुकूलंवाक्यंयस्य । एवंविधोनवमेधन्विस्थितेबुधेजातोभवति। जितसेवकः जितासेवकायेन । परारायनदक्षः पराभिप्रायज्ञः । अंत्यशिल्पः नीचशिल्पः । एवंविधोंत्येमीनस्थेबुधेजातोभवति । इतिबुधराशिस्वभावः ॥ ११ ॥

सेनानीर्बहुवित्तदारतनयोदातासुभृत्यःक्षमी तेजोदारगुणान्वितः सुरगुरौख्यातः पुमान्कौजभे ॥ कल्पांगः सधनार्थमित्रतनयस्त्यागीप्रियः शौक्रभेबौधेभूरिपरिच्छदात्मजसुहृत्साचिव्ययुक्तःसुखी ॥ १२ ॥

अथमेषवृश्चिकवृषतुलमिथुनकन्यागतेजीवेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ सेनानीरिति । सेनानीः सेनानायकः । बहुवित्तः प्रभूतधनः । बहुदारः प्रभूतकलत्रः । बहुतनयः प्रभूतापत्यः । दाता दानशीलः । सुभृत्यः शोभनभृत्यः । क्षमी क्षमावान् । तेजसाकांत्यादारगुणैः कलत्रसौख्यैरन्वितो युक्तः । ख्यातः प्रख्यातकीर्तिः । एवंविधः सुरगुरौजीवेकौजेकुजभे भौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति । कल्पांगः स्वस्थदेहः । सधनार्थः सधनः । समित्रः ससुहृत् । सतनयः पुत्रान्वितः । सुखधनमित्रपुत्रयुक्तः । त्यागीदाता । प्रियः सर्वजनवल्लभः । एवंविधः शौक्रभे शुक्रक्षेत्रस्थेवृषतुलस्थेजीवेजातोभवति । बौधेइत्यादि। भूरिपरिच्छदः बहुवस्त्रगृहपरिवारः। भूर्यात्मजः बहुपुत्रः । भूरिसुहृत् प्रभूतमित्रः । साचिव्येमंत्रित्वे नियुक्तः । सचिवस्यभावः साचिव्यम् । सुखीसुखितः। एवंविधोबौधेबुधक्षेत्रेमिथुनकन्यास्थेजीवेजातोभवति ॥ १२ ॥

चांद्रेरत्नसुतस्वदारविभवप्रज्ञासुखैरन्वितः सिंहेस्याद्बल-
नायकः सुरगुरौप्रोक्तंचयच्चंद्रभे ॥ स्वर्क्षेमांडलिकोनरेंद्र-
सचिवः सेनापतिर्वाधनीकुंभेकर्कटवत्फलानिमकरेनीचोल्प-
वित्तोसुखी ॥ १३ ॥

अथकर्कटसिंहधन्विमीनकुंभमकरस्थेजीवेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह॥चांद्रइति । रत्नानि मणयः । सुताः पुत्राः । स्वंधनं । दाराः कलत्रं । विभवऐश्वर्यम् । प्रज्ञा मेधा । सुखं सुखभावः । एतैरन्वितः संयुक्तः । एवंविधः चांद्रे चंद्रक्षेत्रेकर्कटस्थेसुरगुरौजीवेजातोभवति । बलनायकः सेनाप्रधानः । अन्यच्च यच्चंद्रभेकर्कटस्थेउक्तम् । रत्नसुतस्वदारविभवप्रज्ञासुखैरन्वितः । एवंविधः सिंहस्थेजीवेस्याद्भवेत् । मांडलिकः मंडलाधिपतिः । सेनानाथोवा । अथवा धनीवित्तवान् । एवंविधःस्वर्क्षेस्वराशौधन्विमीनस्थेजीवेजातो भवति । कुंभेकर्कटवदिति । यानिकर्कटस्थेजीवेफलान्यभिहितानि । रत्नसुतस्वदारविभवप्रज्ञासुखैरन्वितइत्येतानिकुंभस्थेगुरौभवंति । अत्रान्येनसहमतभेदः । तेनानिष्टंफलमभिहितम् । तथाच । नीचःकुंभेजनयति कर्मणितोयाश्रयेसक्तम् । नीचः कुलानुचिताधमकर्मकृत् । अल्पवित्तः स्तोकार्थः । असुखीदुःखितः । एवंविधोमकरस्थेजीवेजातोभवति । इतिबृहस्पतिराशिस्वभावः ॥ १३ ॥

परयुवतिरतस्तदर्थवादैर्हृतविभवः कुलपांसनः कुजर्क्षे ॥
स्वबलमतिधनोनरेंद्रपूज्यःस्वजनविभुःप्रथितोभयःसितेस्वे॥१४

अथशुक्रराशिः॥अथमेषवृश्चिकवृषतुलगतेशुक्रेजातस्यस्वरूपंपुष्पिताग्रयाह॥ परयुवतिरतः परस्त्रीषुसक्तः । तदर्थवादैस्तासांपरस्त्रीणामर्थवादैरपराधानुवचनैः हृतविभवोपहृतार्थः । कुलपांसनः कुलकलंकभूतः । एवंविधः सितेशुक्रेकुजर्क्षेभौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति । स्वबलेत्यादि । स्वबलेनात्मीयवीर्येण स्वमत्याआत्मीयबुद्ध्याचधनंयस्यासौस्वबलमतिधनः । नरेंद्रपूज्यः राजवल्लभः । स्वजनविभुः बंधुप्रधानः । प्रथितः विख्यातः । अभयः निर्भयः । एवंविधः स्वेस्वक्षेत्रे वृषतुलास्थेसितेशुक्रेजातो भवति ॥ १४ ॥

नृपकृत्यकरोर्थवान्कलाविन्मिथुनेषष्ठगतेतिनीचकर्मा ॥
रविजर्क्षगतेमरारिपूज्येसुभगः स्त्रीविजितोरतःकुनार्याम्॥ १५॥

अथमिथुनकन्यामकरकुंभस्थेशुक्रेजातस्यस्वरूपमौपच्छंदसिकेनाह॥ नृपकृत्यकरः राज कर्मकर्ता । अर्थवान् धनी । कलावित् कलाज्ञः गीतवाद्यादिकवेत्ता । एवंविधोमरारिपूज्येदैत्यगुरौशुक्रेमिथुनस्थेजातोभवति । षष्ठगते कन्यास्थेशुक्रेऽतिनीचकर्मा कष्टकार्यकरोजातोभवति ।सुभगःसर्वजनप्रियः । स्त्रीविजितः प्रमदावशगः । कुनार्याकुत्सितस्त्रियां रतःसक्तः । एवंविधः शुक्रेरविजक्षंगतेमकरकुंभस्थेजातोभवति ॥ १५ ॥

द्विभार्योऽर्थीभीरुः प्रबलमदशोकश्चशशिभेहरौयोषाप्तार्थःप्रवरयुवतिर्मंदतनयः॥गुणैः पूज्यः सस्वस्तुरगसहितेदानवगुरौझषे विद्वानाढ्योनृपजनितपूजोतिसुभगः ॥ १६ ॥

अथकर्कटसिंहधन्विमीनस्थेशुक्रेजातस्यस्वरूपंशिखरिण्याह ॥ द्विभार्यः द्विस्त्रीकः । अर्थीयाञ्चापरः । भीरुःसभयः ।प्रबलमदोतिदृप्तः ।प्रबलशोकोतिदुःखितः । एवंविधोदानवगुरौदैत्यपूज्येशुक्रेशशिभेकर्कटस्थेजातोभवति । योषाप्तार्थः स्त्रीप्राप्तधनः । प्रवरयुवतिः प्रधानस्त्रीकः । मंदतनयः अल्पापत्यः । एवंविधोहरौसिंहस्थेशुक्रेजातोभवति । गुणैः पूज्यः मान्यः। सस्वः सधनः । एवंविधस्तुरगसहितेधन्विस्थेदानवगुरौशुक्रेजातोभवति । विद्वान्पंडितः। आढ्यः ईश्वरःनृपजनितपूजः नृपेणराज्ञाजनितोत्पादितापूजार्हणंयस्य। अतिसुभगः सर्वजनानामतिवल्लभः । एवंविधोझषेमीनस्थेशुक्रेजातोभवति । इति शुक्रराशिस्वभावः ॥ १६ ॥

मूर्खोऽटनः कपटवान्विसुहृद्यमेजेकीटेतुबंधवधभाक्चपलोऽघृणश्च ॥ निर्ह्रीसुखार्थतनयः स्खलितश्चलेख्येरक्षापतिर्भवति मुख्यपतिश्चबौधे ॥ १७ ॥

अथशनिः ॥ अथमेषवृश्चिकमिथुनकन्यागतेसौरेजातस्यस्वरूपंवसंततिलकेनाह ॥ मूर्खोऽज्ञानोपेतः । अटनः परिभ्रमणशीलः । कपटवान् दांभिकः । विसुहृत् मित्ररहितः । एवंविधोयमेसौरेअजेमेषस्थेजातोभवति । बंधवधभाक् । बंधोबंधनं वधस्ताडनं वधबंधौभजते । चपलः क्रियास्वनवस्थितः । अघृणः निर्दयः । एवंविधः कीटेवृश्चिकस्थेजातोभवति । निर्ह्रीसुखार्थतनयः निर्गताह्रीर्लज्जायस्यसनिर्लज्जः । निःसुखोदुःखितः । निरर्थोदरिद्रः । निस्तनयः पुत्ररहितः । लेख्येआलेख्यकर्मणिस्खलितः अज्ञः । रक्षापतिर्भवत्यारक्षकः । मुख्यपतिः प्रधाननाथः । एवंविधोबौधेबुधक्षेत्रेमिथुनकन्यास्थे सौरेजातोभवति ॥ १७ ॥

वर्ज्यस्त्रीष्टोनबहुविभवोभूरिभार्योवृषस्थे ख्यातःस्वोच्चेगण-
पुरबलग्रामपूज्योर्थवांश्च ॥ कर्किण्यस्वोविकलदशनोमातृ-
हीनोसुतोज्ञः सिंहेनार्योविसुखतनयोविष्टिकृत्सूर्यपुत्रे ॥ १८ ॥

अथवृषतुलाकर्कटसिंहस्थेसौरेजातस्यस्वरूपंमंदाक्रांतयाह ॥ वर्ज्यास्वग-म्यासुस्त्रीषुयोषित्सुइष्टः वल्लभः । नबहुविभवः नप्रभूतैश्वर्ययुक्तः अल्पैश्वर्ययुक्तः।भूरिभार्यः प्रभूतदारः।एवंविधोवृषस्थेसूर्यपुत्रेशनैश्चरेजातोभवति । ख्यातः विदितकीर्तिः । गणानां समूहानांपुराणांनगराणां बलानांसैन्यानां ग्रामाणांचपूज्योमान्यः । अर्थवान्सधनः । एवंविधः स्वोच्चेआत्मीयस्वोच्चराशौतुलास्थेसौरे जातोभवति । अस्वः दरिद्रः । विकलदशनः अल्पदंतः । मातृहीनः जननीवियुक्तः । असुतः पुत्ररहितः । अज्ञः मूर्खः । एवंविधः कर्कटस्थेसौरेजातोभवति । सिंहेनार्यइति । अनार्यः मूर्खः । विसुखोदुःखितः । वितनयः पुत्ररहितः । विष्टिकृद्भारवाहकः । एवंविधः सिंहस्थेसूर्यपुत्रेशनैश्चरे जातोभवति ॥ १८ ॥

स्वंतःप्रत्ययितोनरेंद्रभवनेसत्पुत्रजायाधनोजीवक्षेत्रगतेर्कजेपुर-
बलग्रामाग्रनेताथवा ॥ अन्यस्त्रीधनसंवृतःपुरबलग्रामाग्रणीर्मं-
दहक्स्वक्षेत्रेमलिनःस्थिरार्थविभवोभोक्ताचजातःपुमान् ॥१९॥

अथधन्विमीनमकरकुंभगतेसौरेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ स्वंतः शोभनोंतःपर्यंतोयस्यसस्वंतः शुभेनकर्मणातस्यमृत्युर्भवति । अथवांतेशोभनंसुखादिकंयस्य । नरेंद्रभवनेराजगृहेप्रत्यायितः संजातप्रत्ययः । सत्पुत्रः शोभनापत्यः । सज्जायः शोभनभार्यः । सद्धनःसद्वित्तः । पुरबलग्रामाग्रनेता पुराणां नगराणांबलस्यसेनायाःग्रामाणांचअग्रनेताप्रधानोनायकः । एवंविधोर्कजेसौरे जीवक्षेत्रेधान्विमीनस्थेजातोभवति । अन्यस्त्रीधनसंवृतः परयोषिद्भिःपरधनैश्चसंवृतः संयुक्तः पुरबलग्रामाग्रणीःपुराणांबलानांग्रामाणांचअग्रणीः । प्रधाननायकः।मंदहगल्पचक्षुः । मलिनः मलोपेतः स्नानालसः । स्थिरार्थः स्थिरवित्तः । स्थिरविभवः स्थिरैश्वर्यः । भोक्ताअसंचयशीलः । एवंविधःपुमान् पुरुषः स्वक्षेत्रेमकरकुंभस्थेसौरेजातोभवति । इतिशनैश्चरराशिस्वभावः । एतेषुसर्वेषुग्रहराशिस्वभावेषुबलवतिराशौतदधिपतौचतस्मिंश्चग्रहेबलवतिजातस्ययथोक्तंराशिस्वरूपंभवति । द्वयोर्द्वयोश्चबलवतोर्मध्येसमानमिति । नकस्मिंश्चिद्बलवतिनकिंचिदिति ॥ १९ ॥

शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातम्।।फ-
लमधिकमिदंयदत्रभावाद्भवनभनाथगुणैर्विचिंतनीयाः ॥ २० ॥

इति बृहज्जातके राशिशीलाध्यायोऽष्टादशः समाप्तः ॥ १८ ॥

अथमेषादिषुलग्नेषुचंद्राक्रांतराश्युक्तस्वरूपातिदेशंपुष्पिताग्रयाह शिशिरकरश्चंद्रमास्तस्यराशिभिःसहसमागमेयत्स्वरूपमुक्तंवृत्तातात्रदृगित्यादिकंतन्मेषलग्नजातस्यापिवक्तव्यम् । एवमन्येष्वपिराशिषुवृषादिषुस्थितेचंद्रमसियदुक्तंतल्लग्नजातस्यापिवक्तव्यम् । यतोमुनयः सदृशंफलंवदंति कथयंति । स्वरूपभेदाभावात् । तथाचसत्यः । मेषविलग्नेकुनखीसुरोषणोभेदकृत्स्खलितवाक्यः । पित्तानिलभूयिष्ठःकृपणोतिबहुव्यथश्चैव । रहितोबाल्येगुरुभिर्मदसुतःस्वजनसहजहितकर्ता । धर्मस्थितोविदेशोपगश्चकमारंभत्यफलम् । नीचांवापिशुनांवाविकलांलभतेन्यपूर्विकांभार्याम्। सहजसमान्यपिमित्राणिचास्यबंधुत्वमुपयांति । शस्त्रेणवाविषैर्वामरणंपित्तोद्भवैर्विकारैर्वा । स्वात्पक्षाज्ज्वलनाद्वावर्षाद्दुर्गात्प्रपतनाद्वा । वृषभविलग्नेस्थूलोष्ठगंडनासोमहाललाटश्च । श्लेष्मानिलभूयिष्ठस्त्यागीबहुशोव्ययरतश्च । कन्याप्रजोल्पपुत्रः पितुर्जनन्याश्चदोषकृद्बहुशः । कर्माणिसततंसक्तोविधर्मयुक्तोर्थभाक्चैव । नित्यंकलत्रकांक्षीशस्त्रविघातीसदास्वजनहर्ता। मृत्युःशस्त्रैः पाशैर्मृगैश्चलभतेन्यदेशेषु । देहश्रमैर्जलैर्वाशूलैर्वाप्यटननिरसनैश्चैव । पुरुषश्चतुष्पदैर्वाबलान्वितान्मृत्युमुपयाति। पूर्वविलग्नेमिथुनेहीनांगः सूयतेधिकांगोवा । प्रियवाग्विशिष्टकर्माभिश्रप्रकृतिर्द्विजननीकः । अल्पमतिरल्पकायःसतांचमहितोगुरूणांच । अल्पसहजोल्पचेष्टःपरावमर्दीगुणयुतश्च । कर्मसुबहुष्वभिरतोधर्मंसाधयतिनचाथधर्मेण । प्राप्ताँल्लाभान्विविधान्दोषैस्तैस्तैश्चनाशयति । बह्वीःपत्नीर्लभतेरोगांश्चदारुणाश्रयति । व्यालाद्विषान्मृगाद्वाप्युदकाद्वामृत्युमुपयाति । कर्किणिपूर्वविलग्ने नैकाग्रोगुह्यरोगवान्भीरुः।उरासिकृताभिज्ञानःकफानिलात्माद‍ृढग्राही । पापानहितान्भजतेपरस्वमपिनिक्षिपद्वयेनसकृत् । स्वजनाद्धतःस्वजनैर्विभर्त्सितोह्यस्थिरप्रसवः । तीक्ष्णंकर्मविदेशेनित्यंह्युद्वोदितःपरस्वामी । असदृशदारोरिपुनिर्जितश्चपूज्यःसमूहानाम्।कंठापीडाद्ज्वाकफोदयादस्थिभंजनाद्भेदात् । देहच्छेदादथवाजलोदरान्मृत्युमाप्नोति । सिंहविलग्नेकठिनःप्रियामिषः पैत्तिको विततनाशः।बह्वारंभकुटुंबःकृपणस्त्वथसंमतःख्यातः । सहजाविषादीस्वजनस्य घातकोविक्रमैःस्वकैर्युक्तः । अविषादीकर्मकरोविविधोपायैस्त्वधर्मिष्ठः । भार्याबह्वीर्लभतेविंद्याद्विविधाःकुलैरुपेताश्च । कस्यांरुजश्चबहुशोजान्वोर्दशनेषुचाप्नोति । मृत्युःशस्त्रैःपापैर्विषैश्चकाष्ठैरथामयैश्चापि । अंबुचरैर्वासत्वैर्बुभुक्षया

हासमुपयाति। षष्ठविलग्नेप्रियवाक्तनुच्छविर्दीर्घकरचरणः।मिश्रप्रकृतिश्चार्याकृतिर्व्रणीचार्थवान्कृपणः । स्वजनस्येष्टःकन्याबहुप्रजोभ्रातृभिर्विरुद्धश्च । धर्मप्रियोल्पलाभःकर्मणिनिपुणःसमाचरति । विविधाच्चतुष्पदगणाच्छस्त्रात् पित्तोद्भवाद्रोगात्।शोकात्संपाताद्वामृत्युंचाप्नोति पाशाद्वा । सप्तमराशौलग्नेविषमांगःसूयतेविषमशीलः । कफवातिकःसुचपलोह्रस्वग्रीवःकृतज्ञश्च । अर्थान्विपुलाँल्लभतेव्ययेनसंपूज्यतेयशःप्रायः । गुरुसेवायांनिरतःपितान्यजनसहजपूज्यः । अध्वरुचिर्धर्मिष्ठोविनाशमायातिपीडनैः स्वैः स्वैः । मृतभार्यः कलहरुचिर्बहुशः शोकादिभिः क्लिष्टः । मृत्युः ख्यातात्पुरुषात्स्वजनात्सौम्याच्चतुष्पदाद्वापि । खेदाच्चविप्रयोगादुपवासान्मार्गयोगाद्वा । अष्टमराशौलग्नेविशालरज्वाननोदरः क्रूरः । पित्तप्रकृतिः पिंगेक्षणोमृदुद्रुतगतिः परस्वामी । स्फीतकुटुंबस्वजनोंतकश्चबहुव्ययोबहुप्रसवः।सुखरहितोभ्रातृव्योवृषसेवीधर्महीनश्च । भार्यानिमित्तविमुखीशत्रोरर्थान्नददातिबहुशश्च । स्वकुलोद्भूतांश्छन्नाँल्लभतेरोगांश्चनैकविधान् । गात्रच्छेदैः शत्रोर्वशंगतोबंधनैः प्रहारैश्च । रोगैर्वापापकृतैर्ज्वलनाद्वामृत्युमुपयाति । स्थूलोष्ठदशननासानवमेलग्नेकफानिलप्रकृतिः । मांसलगुल्फोरुभुजःकुनखीकर्मोद्यतःशूरः । क्षुद्रान्नीचान्भजतेचौर्यादनलान्नृपाच्चनष्टधनः । विज्ञानानांप्रसवोबहुपूज्योभ्रातृघातरुचिः । कर्मविदेशेष्विष्टःकुरुतेचित्तानिचार्हतिनृपेभ्यः । धर्मेतुमध्यममतिर्दारैश्चविरोधमुपयाति । रोगान्वदनेलभतेचतुष्पदाच्चात्मनः समाप्नोति। मृत्युंबिलेशयाद्वानृपाच्चबंधाज्जनाद्वापि । दशमविलग्नेतनुनासिकापुटोदीर्घवक्रकरचरणः । वाय्वात्मकोमृगास्योभीरुश्चपलोथबंधनभाक् । क्षुद्रकुटुंबोल्पधनः कृपणः कन्याप्रजोमृतस्वजनः । सहजसमृद्धः शौर्यान्नृपादरण्याच्चलब्धधनः । उपवासव्रतशीलोनीचामिष्टामवाप्नुयाद्भार्याम् । बहुविग्रहोल्पकेशोदुर्बलजानुश्चरोगार्तः । बालादनिलाच्छस्त्रान्नृपाद्विषात्प्रपतनाद्गजाद्वापि । पित्तोदयादजीर्णान्म्रियतेवामार्गविभ्रष्टः । एकादशेविलग्नेस्तब्धः क्रूरः कुलाग्रजः पुरुषः । पित्तानिलभूयिष्ठस्तिलपुष्पसमानमासश्च । प्राप्तान्नाशयतेर्थान्बहुभृत्यः साध्यतेव्ययैश्चापि । क्षीणः स्वगोत्रगुरुजनपरपक्षसुहृत्स्वजनशत्रुः । कर्मणिपापेसक्तः तनुश्चकांतानवाप्नुयाल्लाभान् । धर्मध्वजप्रवृत्तौदैवतपूजश्च कारयतिभार्याम् । विग्रहशीलांलभतेविविधान्रोगान्कफोद्भवानुरसि । म्रियतेचजठररोगाद्गमनात्स्त्रीणांप्रयोगाद्वा । द्वादशगेप्राग्लग्नेस्थूलोष्ठोमीनदृङ्महानासः । कफवातिकोमहात्मात्वग्दोषीनैकमतिचेष्टः । शिष्टायव्ययभृत्यैः स्वजनस्त्रीपूजितः सहजनाथः । कर्मणिधर्मेयुक्तः पित्रोपचयः सुदारश्च । नीचाचारांभार्यांलभतेचरिपून्सुदारुणान्क्रूरान् । रोगात्सशोणितोदाप्नुयाद्ग-

यंव्यालसिंहेभ्यः । मृत्युंपुरुषैर्गणवृंदपूजितैर्गुह्यजैर्विकारैर्वा । विद्यौषधप्रयोगाद्वुपवासान्मार्गदोषाद्वा । एवंशिशिरकरसमागमसदृशंलग्नजातंफलम् । तथा च । शिशिरकराश्रितराशेरीक्षणंदृष्टिफलंवक्ष्यमाणंतथातदेवतल्लग्नजातस्यापि वक्तव्यं चंद्रेभूपबुधावित्यादि । किंतुलग्नेफलमपिकिमिदम् । यदत्रभावइति । चंद्रराशितइदमत्रलग्नादिषुभावेष्वधिकंफलंयद्भावास्तन्वादयः । भवनगुणैः राशिगुणैर्भवननाथगुणैस्तत्स्वामिगुणैर्विचिंतनीयाः विचार्याः । भवनभनाथयोर्गुणः सबलत्वम् । एतदुक्तंभवति । लग्नेबलवतिलग्नपतौचबलवतिजातस्यशरीरपुष्टिर्वक्तव्या । लग्नाद्वितीयराशौबलवतितदधिपतौचबलवतिजातस्य धनसमृद्धिर्वक्तव्या । एवंशेषराशिबलेतदधिपबलेचजातस्यभ्रात्रादीनांवृद्धिर्वक्तव्या । तथापिकिंचिद्विशेषः कथयति विपरीतंरिःफषष्ठाष्टमेषुइत्यादि । एवंतन्वादिस्थेषुराशिष्वबलवत्सुतदधिपेष्वबलवत्सुचभावहानिर्वक्तव्या । भवनभनाथयोः । यद्येकोबलवान्भवतितदामध्यस्थाभाववृद्धिर्वाच्येति । तथाच यवनेश्वरः।भावेशभावराशिभस्वभावप्रधानमध्याधमदर्शनाद्यैः । तद्भावसंपत्तिविपत्त्युपायैर्नैर्याणिकंपाकमुपैतिपुंसाम् ॥ २० ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौराशिशीलाऽध्यायोऽष्टादशःसमाप्तः॥१८॥

## अथदृष्टिफलाध्यायः ॥

चंद्रेभूपबुधौनृपोपमगुणीस्तेनोधनश्चाजगेनिःस्वःस्तेननृमान्यभूपधनिनःप्रेष्यः कुजाद्यैर्गवि ॥ नृस्थेयोऽव्यवहारिपार्थिवबुधाभीस्तंतुवायोधनोस्वर्क्षेयोद्धकविज्ञभूमिपतयोऽयोजीविदृग्रोगिणौ ॥ १ ॥

अथातोदृष्टिफलाध्यायोव्याख्यायते । तत्रमेषवृषमिथुनकर्कटस्थेचंद्रेभौमाद्यैर्ग्रहैः दृश्यमानेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ चंद्रेभूपबुधाविति।कुजाद्याभौमादयः । भौमबुधबृहस्पतिशुक्रशनैश्चरार्काः। तत्राजगेमेषस्थे चंद्रमसिभौमदृष्टेजातोभूपोराजाभवति । बुधदृष्टेबुधः पंडितः । जीवदृष्टेनृपोपमः राजतुल्यः । शुक्रदृष्टेगुणीगुणवान्भवति । केचिद्धणिगितिपठंति । शनैश्चरदृष्टेस्तेनश्चौरः । सूर्यदृष्टेऽधनः दरिद्रइति । एवमपिमेषलग्नेभौमादिदृष्टेफलं वाच्यं गविस्थेति । गविवृषस्थेचंद्रमसिभौमदृष्टेजातोनिःस्वः दरिद्रः भवति । बुधदृष्टेस्तेनश्चोरः । जीवदृष्टेनृमान्यः नृणांमान्यःपूज्यः । केचिन्नृपाढ्य इतिपठंति । नृपाढ्यःनृपोराजासचाढ्यः ईश्वरः । शुक्रदृष्टेभूपःराजा । सौरदृष्टेधनी धनवान् । सूर्यदृष्टेप्रेष्यःदासः । एवंवृषलग्नेपि । नृस्थेमिथुनस्थेचंद्रमसि भौमदृष्टेऽयोव्यवहारी शस्त्रविक्रयकः । बुधदृष्टेपार्थिवः राजा । जीवदृष्टेबुधः

पंडितः। शुक्रदृष्टेऽभीः निर्भयः धीरः भयरहितः । सौरदृष्टेतंतुवायः। रविदृष्टेऽधनः दरिद्रः। एवंमिथुनलग्नेपि । स्वर्क्षेकर्कटस्थेचंद्रमसिभौमदृष्टे योद्धाभवति । युद्धकुशलः।बुधदृष्टेकविः काव्यकर्त्ता । जीवदृष्टे ज्ञः पंडितः । शुक्रदृष्टेभूमिपती राजा । सौरदृष्टेऽयोजीवी आयुधजीवी शस्त्रोपजीवी । सूर्यदृष्टेदृग्रोगीचक्षुर्व्याध्यर्दितः।एवंकर्कटलग्नेपि ॥ १ ॥

ज्योतिर्ज्ञाढ्यनरेंद्रनापितनृपक्ष्मेशाबुधाद्यैर्हरौतद्वद्भूपचमूपनैपुणयुताः षष्ठेशुभैरुयाश्रयः॥ जूकेभूपसुवर्णकारवणिजः शेषेक्षितेनैकृतीकीटेयुग्मपितानतश्चरजकोव्यंगोधनोभूपतिः२॥

अर्थासिंहकन्यातुलावृश्चिकस्थेचंद्रेबुधादिदृष्टेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ ज्योतिरिति।बुधादयः बुधगुरुशुक्रशनिसूर्यभौमाः।हरिः सिंहस्तस्मिन्हरौसिंहस्थेचंद्रेबुधदृष्टेज्योतिर्ज्ञःज्योतिःशास्त्रार्थवेत्ता।जीवदृष्टेआढ्यःईश्वरः। शुक्रदृष्टेनरेंद्रोराजा।सौरदृष्टेनापितः।रविदृष्टेनृपःराजा । भौमदृष्टेक्ष्मेशःभूपतिः। एवं सिंहलग्नेपि । तद्वदित्यादि । तद्वद्बुधादिभिर्दृष्टेइत्यनुवर्तते सर्वत्र।षष्ठेकन्यागते चंद्रेबुधदृष्टेभूपःराजा । जीवदृष्टेचमूपतिः सेनापतिः। शुक्रदृष्टेनैपुणयुतःसर्वकार्येषुसूक्ष्मदृष्टिः।अशुभैः सौररविभौमैर्दृष्टेस्त्रियाश्रयोभवति। स्त्रियंमाश्रित्यजीवतीत्यर्थः । एवंकन्यालग्नेपि । जूकेतुलास्थेचंद्रमसिबुधदृष्टेभूपोराजाभवति । जीवदृष्टेसुवर्णकारः।शुक्रदृष्टेवणिजः क्रयविक्रयज्ञः। शेषाःसौरसूर्यभौमाः एतैः दृष्टेनैकृतीनिकृतः प्राणिघातकः। एवंतुलालग्नेपि । कीटेवृश्चिकस्थेचंद्रमसिबुधदृष्टेयुग्मपितायुग्मस्यजनकः द्वयोःपिताजातोभवति जातएवयुग्मपिता । द्विपितृकइतिकेचित्पठंति । जीवदृष्टेनतःप्रह्वः । शुक्रदृष्टेरजकः वस्त्ररागकृत् । सौरदृष्टेव्यंगोंगहीनः । सूर्यदृष्टेऽधनः दरिद्रः । भौमदृष्टेभूपतिः राजा । एवमेतैरेवदृष्टेवृश्चिकेपि ॥ २ ॥

ज्ञात्युर्वीशजनाश्रयश्चतुरगेपापैःसदंभः शठश्चात्युर्वीशनरेंद्रपंडितधनीद्रव्योनभूपोमृगे॥ भूपोभूपसमोन्यदारनिरतः शेषैश्च कुंभस्थितेहास्यज्ञोनृपतिर्बुधश्चझषगेपापश्चपापेक्षिते ॥ ३ ॥

अथधन्विमकरकुंभमीनस्थेचंद्रमसिबुधादिदृष्टेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ ज्ञात्युर्वीशेति । तुरगोधन्वीतत्रस्थेचंद्रेबुधदृष्टेज्ञातीशः स्वजनभर्त्ता। जीवदृष्टेउर्वीशोराजा । शुक्रदृष्टेजनाश्रयः जनानामाश्रयस्थानम् । पापैः शनिरविभौमैर्दृष्टेसदंभः दांभिकः मिथ्याधर्मध्वजी । शठः परकार्यविमुखश्च भवति।एवंधन्विलग्नेपि । मृगेमकरस्तत्रस्थेचंद्रेबुधदृष्टेऽत्युर्वीशोरा-

जाधिराजोभवति । जीवदृष्टेनरेंद्रोराजा । शुक्रदृष्टेपंडितः । शनिदृष्टेध-नीवित्तवान् । सूर्यदृष्टेद्रव्योनः दरिद्रः । भौमदृष्टेभूपोराजा । एवं मकरलग्नेपि । कुंभस्थेचंद्रमसि । बुधदृष्टेभूपः राजाभवति । जीवदृ-ष्टेभूपसमः राजतुल्यः । शुक्रदृष्टेन्यदारानिरतः परस्त्रीसक्तः । चश-ब्दाच्छेषैः शनिसूर्यभौमैस्त्रिभिरप्यन्यदारानिरतएव । एवंकुंभलग्नेपि । झषगेमीनस्थेचंद्रमसिबुधदृष्टे । हास्यज्ञः उपहासंकर्तुंजानाति । जीवदृष्टेनृ-पतिः राजा । शुक्रदृष्टेबुधः पंडितः । पापाः शनिसूर्यभौमाः एतैर्दृष्टेचपापएवभवति । एवंमीनलग्नेपि । लग्नदृष्टिफलंचंद्रदृष्टिफलातिदे-शेनोक्तम् । शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातमिति । त-त्रचंद्रमसादृष्टेलग्नेफलंनोक्तम् । तस्मात्तत्रोच्यतेउक्तमेवयस्मादुक्तम् । होरास्वा-मिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाः तत्रकर्कटवर्ज्यमन्योलग्नः । चंद्रदृष्टो हीनबलोभवति । हीनबलत्वादशोभनफलः । उक्तंच । मुक्त्वातुचंद्रभवनंलग्न-गतंशिशिरकिरणसंदृष्टम् । अशुभफलंनिर्दिष्टंप्रच्छायांजन्मसमयेवा ॥ ३ ॥

होरेशर्क्षदलाश्रितैः शुभकरोदृष्टः शशीतद्गतस्त्र्यंशेतत्पति-भिः सुहृद्भवनगैर्वावीक्षितः शस्यते ॥ यत्प्रोक्तंप्रतिराशि-वीक्षणफलंतद्द्वादशांशेस्मृतं सूर्याद्यैरवलोकितेपिशशिनि ज्ञेयंनवांशेष्वतः ॥ ४ ॥

अथहोराद्रेष्काणव्यवस्थितस्यचंद्रस्यग्रहदृष्टिफलंशार्दूलविक्रीडितेनाह॥ हो-रेशेति । होराशब्देनराश्यर्द्धमुच्यते । होरेतिलग्नंभवनस्यचार्द्धमितिवचनात् । होरायाईशोहोरेशः तस्यर्क्षदलं होरेशर्क्षदलं तत्राश्रिताहोरेशर्क्षदलाश्रिताः । तैर्ग्रहैः होरेशर्क्षदलाश्रितैः । शशीचंद्रः तद्गतस्तद्धोरास्थोदृष्टः शुभकरो भवति । एतदुक्तंभवति । यत्रतत्रराशौयस्यांहोरायांचंद्रमाः स्थितः । तद्धोरास्थैः सर्वग्रहैः यदिदृश्यतेतदाजन्मनिशुभकरोभवति । तेनार्कहो-रास्थश्चंद्रोयत्रतत्रराश्याश्रितैरर्कहोराश्रितैर्ग्रहैः दृष्टश्चशुभकरोभवति । अर्थादे-वचंद्रहोरास्थैर्दृष्टोशुभकरः । एवंयत्रतत्रराशौस्वहोरास्थश्चंद्रहोरास्थैर्ग्रहैयत्रत-त्रावस्थैर्दृष्टः शुभकरोभवति । अर्थादेवार्कहोरास्थैर्दृष्टोऽशुभकरः । एवंलग्नेपिहो रेशेनफलंयोज्यम् । त्र्यंशेतत्पतिभिरिति । यत्रतत्रराशौयस्मिन्द्रेष्काणेस्थितश्चं-द्रस्तस्ययः पतिस्तेनद्रेष्काणपतिनादृष्टश्चंद्रः शस्यते स्तूयते । शुभकर-इत्यर्थः । पतिभिरिति । बहुवचननिर्देशान्नवांशद्वादशांशत्रिंशांशकाधिपतयो गृह्यंते । तैरपिदृष्टः चंद्रः शुभकरोभवति । एवंलग्नेपि । यद्यपिसामा-न्येनोक्तं तथापिशुभग्रहैर्द्रेष्काणपतिभिर्दृष्टः शस्यते । पापग्रहैर्मध्यमः ।

यस्मादनेनैवस्वल्पजातकेउक्तम् । क्षेत्राधिपसंदृष्टेशशिनिनृपस्तत्सुहृद्भिरपिधनवान् । द्रेष्काणांशकपैर्वाप्रायःसौम्यैःशुभंनान्यैरिति । सुहृद्भवनगैरित्यादि । सुहृद्भवनगैः मित्रक्षेत्रस्थैः ग्रहैः वीक्षितः दृष्टः चंद्रः शस्यतेस्तूयते शुभकरएव । अर्थादेवस्वभवनगतैर्दृष्टः शस्यते । अर्थादेवारिभवनगतैः दृष्टः नशस्यते अशुभफलोभवति । एवंलग्नेपियोज्यम् । यत्प्रोक्तंप्रतिराशिवीक्षणफलंतद्वादशांशेस्मृतमिति । प्रतिराशिंराशौराशौमेषादिस्थेचंद्रमसियद्वीक्षणफलं प्रोक्तंकथितंतदेवमेषादिद्वादशांशकस्थेचंद्रमसिस्मृतमुक्तम् । तदेवंवाच्यमिति । चंद्रेभूपबुधावित्यादियदुक्तम् । एवंलग्नेपि । तत्रापिकर्कटद्वादशांशंविनाचंद्रदृष्टिरशोभनासूर्याद्यैरित्यादि । अतोऽस्मात्परंशशिनिचंद्रेसूर्याद्यैरर्कादिभिरवलोकितेदृष्टेनवांशेषुफलंज्ञेयं ज्ञातव्यमिति ॥ ४ ॥

आरक्षिकोवधरुचिःकुशलोनियुद्धेभूपोर्थवान्कलहकृत्क्षितिजांशसंस्थे ॥ मूर्खोन्यदारनिरतःसुकविःसितांशेसत्काव्यकृत्सुखपरोन्यकलत्रगश्च ॥ ५ ॥

अथमेषवृश्चिकवृषतुलांशकस्थेचंद्रमसिसूर्यादिदृष्टेफलंवसंततिलकेनाह ॥ आरक्षिकइति । क्षितिजोभौमः तत्रवांशकस्थे । मेषनवांशकस्थेवृश्चिकनवांशकस्थे । चंद्रमसिसूर्यदृष्टे । आरक्षिकोभवति । आरक्षिकः नगररक्षाधिकृतः । भौमदृष्टेवधरुचिः प्राणिघातकः । बुधदृष्टेनियुद्धेकुशलः नियुद्धेबाहुयुद्धेकुशलः । शिक्षितःप्रवीणः । जीवदृष्टेभूपःराजा । शुक्रदृष्टेर्थवानीश्वरः । सौरदृष्टेकलहकृदिति । मूर्खइत्यादि । सितांशेशुक्रनवांशकेवृषनवांशकेतुलनवांशकेवा स्थितेचंद्रमसिरविदृष्टेमूर्खोभवति । भौमदृष्टेन्यदारनिरतः परदारसक्तः । बुधदृष्टेकाव्यकृत् काव्यज्ञः । केचिदाद्यवदितिपठंति । जीवदृष्टेसत्काव्यकृत्शोभनकाव्यकर्ता । शुक्रदृष्टेसुखपरः सुखासक्तः । सौरदृष्टेपरकलत्रगः परदाराभिगामी ॥ ५ ॥

बौधेहिरंगचरचौरकवींद्रमंत्रीगेयज्ञशिल्पनिपुणःशशिनिस्थितेंशे ॥ स्वांशेल्पगात्रधनलुब्धतपस्विमुख्यःस्त्रीपोष्यकृत्यनिरतश्चनिरीक्ष्यमाणे ॥ ६ ॥

अथमिथुनकन्याकर्कटनवांशकस्थे चंद्रेर्कादिदृष्टेफलंवसंततिलकेनाह ॥ बौधेहीति । शशिनिचंद्रेबौधेबुधनवांशकस्थे । मिथुननवांशकस्थेकन्यानवांशकस्थेवा निरीक्ष्यमाणेदृष्टेरंगचरः मल्लादिकोभवति । भौमदृष्टेचौरः तस्करः । बुधदृष्टेकवींद्रः, कविराजः । जीवदृष्टेमंत्रीसचिवः । शुक्रदृष्टेगेयज्ञः । सौ-

रदृष्टेशिल्पनिपुणः । स्वांशेति । स्वांशेआत्मीयनवांशकस्थेकर्कटनवांशस्थेशशिनिचंद्रेसूर्यदृष्टेऽल्पगात्रः कृशदेहोभवति । भौमदृष्टेधनलुब्धः कृपणः । अल्पधनोवा । बुधदृष्टेतपस्वी । जीवदृष्टेमुख्यःप्रधानः । सितदृष्टेस्त्रीपोष्यः स्त्रीभिरभिवर्धनीयः । सौरदृष्टेकृत्यनिरतः कार्यासक्तः ॥ ६ ॥

सक्रोधोनरपतिसंमतोनिधीशःसिंहांशेप्रभुरसुतोतिहिंस्रकर्मा ॥
जीवांशेप्रथितबलोरणोपदेष्टाहास्यज्ञःसचिवविकामवृद्धशीलः ७

अथसिंहधन्विमीननवांशस्थेचंद्रे सूर्यादिदृष्टेफलंप्रहर्षिण्याह ॥ सक्रोधइति । सिंहांशकस्थेचंद्रमस्यर्कदृष्टेसक्रोधः क्रोधयुक्तोभवति । भौमदृष्टेनरपतिसंमतः राजवल्लभः । बुधदृष्टेनिधीशः निधिनाप्राप्तार्थः । गुरुदृष्टेप्रभुरप्रतिहताज्ञः । शुक्रदृष्टेऽसुतः पुत्ररहितः । सौरदृष्टेतिहिंस्रकर्मा क्रूरकर्मणिरतः । जविांशइत्यादि । जीवांशेबार्हस्पत्येनवांशकेधन्व्यंशकेमीनांशकगतेवास्थितेचंद्रमसिसूर्यदृष्टेप्रथितबलः प्रख्यातवीर्योभवति । भौमदृष्टेरणोपदेष्टा संग्रामदेशकालव्यूहरचनाभिज्ञः । बुधदृष्टेहास्यज्ञः उपहासवेत्ता । जीवदृष्टेसचिवः मंत्री । शुक्रदृष्टेविकामः कामहीनःपुंस्त्वहीनः । सौरदृष्टेवृद्धशीलः धर्ममतिरिति ॥ ७ ॥

अल्पापत्योदुःखितःसत्यपिस्वेमानासक्तःकर्मणिस्वेनुरक्तः ॥
दुष्टस्त्रीष्टःकृपणश्चार्किभागेचंद्रेभानौतद्वदिन्द्वादिदृष्टे ॥ ८ ॥

अथमकरनवांशकस्थेकुंभनवांशकस्थेवाचंद्रेसूर्यादिदृष्टेजातस्यफलंशालिन्याह । अल्पापत्यइति ॥ आर्किःअर्कस्यापत्यमार्किः तस्यभागेशनैश्चरनवांशके मकरनवांशकस्थेकुंभनवांशकस्थेवाचंद्रेसूर्यदृष्टेऽल्पापत्योऽल्पप्रसवोभवति । भौमदृष्टेसत्यपिस्वेदुःखितः सत्यपिविद्यमानेपिस्वेधनेदुःखितोभवति । बुधदृष्टेमानासक्तः गर्वितः । जीवदृष्टेस्वेआत्मीयेकर्मण्यनुरक्तः कुलानुरूपकर्मकृत् । शुक्रदृष्टेदुष्टस्त्रीष्विष्टः वल्लभः । सौरदृष्टेकृपणः अदाता । एवंतत्कालनवांशकवशात् ग्रहदृष्ट्यालमेपिवक्तव्यम् । किंतुतत्रापिकर्कटनवांशकंविना चंद्रदृष्टिरशुभेति । भानौतद्वदिंद्वादिदृष्टे । भानावादित्येंद्वादिदृष्टेचंद्राद्यैर्ग्रहैरवलोकितेतद्वत्तेनैवप्रकारेणदृष्टिफलंयत्रतत्रराशौयत्रतत्रनवांशकस्थे चंद्रमस्यर्कादिदृष्टेयत्फलमुक्तंतद्वत् । यत्रतत्रराशौ यत्रतत्रनवांशकेव्यवस्थितेऽर्केचंद्रदृष्टेतदेवफलंवाच्यम् । एतदुक्तंभवति । नवांशकव्यवस्थितस्यादित्यस्यचंद्रस्यचताराग्रहदृष्टिफलंतुल्यम् । किंतु । यदादित्यदृष्ट्याचंद्रस्योक्तम् तच्चंद्रदृष्ट्यामूर्यस्यवक्तव्यम् । तद्यथामेषवृश्चिकनवांशकस्थेर्के चंद्र-

दृष्टेआरक्षिकोभवति । वृषतुलानवांशकस्थेमूर्खः । मिथुनकन्यानवांशकस्थेरंगचरः । सिंहनवांशकस्थेसक्रोधः। धन्विमीननवांशकस्थेप्रथितबलः । मकरकुंभनवांशकस्थेल्पापत्यः । कर्कटनवांशकस्थेल्पगात्रः । एवमादित्यस्यनवांशकावस्थितस्यग्रहदृष्ट्याचंद्रेणफलंसमानमिति ॥ ८ ॥

वर्गोत्तमस्वपरगेषुशुभंयदुक्तंतत्पुष्टमध्यलघुताशुभमुत्क्रमेण॥ वीर्यान्वितोंशकपतिर्निरुणद्धिपूर्वंराशीक्षणस्यफलमंशफलंददाति ॥ ९ ॥

इतिबृहज्जातकेदृष्टिफलाऽध्यायःसमाप्तः ॥ १९ ॥

अथास्यैवनवांशकदृष्टिफलस्यविशेषंवसंततिलकेनाह ॥ वर्गोत्तमेति । नवांशकव्यवस्थितेचंद्रेनवांशकदृष्टिफलंद्विप्रकारमुक्तंशुभमशुभंच । यथाआरक्षिकइतिशुभम् । वधरुचिरित्यशुभंच । तत्रवर्गोत्तमांशकगतेचंद्रेयद्ग्रहदृष्टिजंफलंशुभमुक्तं तत्पुष्टमतीवशुभंभवति । स्वांशकस्थेतुयच्छुभमुक्तंतन्मध्यमम् । परनवांशकव्यवस्थितेयच्छुभंतल्लघुस्तोकंविज्ञेयम् । एवंशुभफलस्यपुष्टतामध्यतालघुताच । अशुभमुत्क्रमेण । अशुभमनिष्टंयत्फलंतदुत्क्रमेणविपरीतंज्ञेयम् । परनवांशकस्थस्यचंद्रस्ययदशुभंदर्शनफलमुक्तं तदतीवाशुभंभवति । स्वनवांशकस्थस्यमध्यमम्।वर्गोत्तमांशकस्थस्यलघुता । एवंलग्नादित्ययोरपिदृष्टिफलं योज्यम्।जातकेसर्वाण्येवफलानिभवंतीतिप्राप्तम् । यस्माद्यवनेश्वरः । अन्योन्यराश्यंशकसंप्रयोगैरन्योन्यसंदर्शनसंगमैश्च । अन्योन्यसंयोगविकल्पनाभिरिदंसमुद्रांबुवदप्रमेयमिति । अतःसदैवराशिदृष्टिनवांशकदृष्टिफलयोरपिसदैवपक्तिप्राप्नोति । तत्रनवांशकपतौबलवतिराशिदर्शनफलबाधनार्थमाह ॥ वीर्यान्वितइति । यस्मिन्नवांशकेव्यवस्थितश्चंद्रोलग्नंवाभवति । तस्यनवांशकस्ययोऽधिपतिः॥ सचेद्वीर्यान्वितोबलवान्भवति तदानिरुणद्धिपूर्वंप्रथमंनिवारयति। किंसर्वमेव । नहिराशीक्षणस्यफलम् । नहोराद्रेष्काणद्वादशभागेक्षणस्य। तद्धित्वांशेक्षणफलमेवददाति । अथांशकेपतिर्बलवान्नभवति तदाराशीक्षणांशकेक्षणफलेउभेअपिवाच्ये । एवंचंद्रलग्नयोरुभयोरपि आदित्यस्यतुनवांशकेक्षणफलमेववक्तव्यम् । यस्मात्तस्यराशीक्षणफलमिहनोक्तमिति ॥ ९ ॥

इति दृष्टिफलाऽध्यायएकोनविंशतिः ॥ १९ ॥

## अथ भावाध्यायप्रारंभः ॥

शूरस्तब्धोविकलनयनोनिर्घृणोर्केतनुस्थेमेषेसस्वास्तिमि-
रनयनःसिंहसंस्थेनिशांधः ॥ नीचेंऽधोऽस्वःशशिगृहगते
बुद्बुदाक्षःपतंगेभूरिद्रव्योनृपहृतधनोवक्ररोगीद्वितीये ॥ १ ॥

अथातोभावाध्यायोव्याख्यायते । तत्रादित्यस्यलग्नगतस्यद्वितीयस्थस्यच फलंमंदाक्रांतयाह ॥ शूरइति । शूरःसंग्रामप्रियः । स्तब्धः चिरकार्यकृत् । विकलनयनः हीनदृष्टिः । निर्घृणः निर्दयः । एवंविधोर्केरवौतनुस्थेलग्नस्थेजातोभवति । एतत्तावत्सर्वलग्नेषुसामान्यफलंभवति । अथमेषसिंहतुलाकर्कटानामन्यतमेलग्नगतेर्केतदापूर्वोक्तफलंनभवति । वक्ष्यमाणंचोक्तराशीनांप्रतिराशिफलंभवति । तद्यथा । मेषसस्वइति । मेषलग्नेतत्रस्थेचार्केसस्वः सार्थः। तिमिरनयनः चक्षुरोगी भवति । तिमिरश्चक्षुरोगीतिप्रसिद्धः । सिंहलग्नेतत्रस्थेचार्केनिशांधः राव्यंधोभवति।आदित्यस्यनीचः तुलातस्मिँल्लग्नगतेतत्रस्थेचार्के सूर्येंधः नेत्रहीनोऽस्वः दरिद्रश्चभवति । शशिगृहेकर्कटेलग्नेतत्रस्थे पतंगेचार्केबुद्बुदेक्षणः पुष्पिताक्षोभवति । भूरिद्रव्यइति । लग्नात् द्वितीयेर्केभूरिद्रव्यः । प्रभूतार्थः । नृपहृतधनः । राज्ञाहृतस्वो वक्ररोगीमुखपीडार्तश्चभवति ॥ १ ॥

मतिविक्रमवांस्तृतीयगेऽर्केविसुखःपीडितमानसश्चतुर्थे ॥
असुतोधनवर्जितस्त्रिकोणेबलवाञ्छत्रुजितश्चशत्रुयाते ॥ २ ॥

अथलग्नात् तृतीयचतुर्थपंचमषष्ठस्थानस्थार्कफलमौपच्छंदसिकेनाह ॥ मतीति । मतिः बुद्धिः विक्रमः पराक्रमः एतौविद्येतेयस्य । तथाविधस्तृतीयगेऽर्केरवौभवति। विसुखोदुःखितः पीडितमानसः। नित्योद्विग्नचित्तः।एवंविधश्चतुर्थगेऽर्केजातोभवति। असुतःविपुत्रः।धनवर्जितोदरिद्रः।एवंविधस्त्रिकोणेपंचमस्थेरवौजातोभवति । बलवान्बलयुक्तः । शत्रुजितश्च शत्रुभिररिभिः । जितःएवंविधःशत्रुयातेषष्ठस्थानस्थेऽर्केजातोभवति । केचिद्बलवान्नष्टरिपुश्चशत्रुयातइतिपठंति । तथाचसत्यः । षष्ठेरिपुरोगशोकघ्नः । आचार्येणात्र यवनेश्वरमतमंगीकृतम् । यतः षष्ठस्थानस्थितानांपापानांयवनेश्वरेणानिष्टंफलमभिहितम् । तथाचस्फुजिध्वजः। षष्ठाश्रितोर्कोविषशस्त्रदाहक्षुद्रोगशत्रुव्यसनोपतप्तान् । काष्ठाश्मपाताच्चविशीर्णदंतान्यूनेटवीदंष्ट्रिनखिक्षतांश्च । कुजोगतस्तत्रपरिक्षतांगंदृग्व्याधितंधिक्कृतिकर्शितंच । सौरःशिरोश्माशनिपातवाताद्विमुष्टिघातोपहतंचकुर्यात् । अनेनैवातिदेशंपापानामाचार्यः करिष्यत्यर्कवत् ॥ २ ॥

स्त्रीभिर्गतःपरिभवंमदगपतंगेस्वल्पात्मजोनिधनगेविकलेक्ष-
णश्च ॥ धर्मेसुतार्थसुखभाक्सुखशौर्यभाक्खेलाभेप्रभूतधन-
वान्पतितस्तुरिःफे ॥ ३ ॥

अथलग्नात्सप्तमाष्टमनवमदशमैकादशद्वादशस्थेऽर्केजातस्यस्वरूपंवसंततिल-केनाह ॥ स्त्रीभिर्गतइति । पतंगेआदित्येमदगेसप्तमस्थानस्थेजातः स्त्रीभिः योषिद्भिः परिभवंगतःप्राप्तोभवति । केचिन्महतेपतगइतिपठंति । निधनगेअ-ष्टमस्थेपतंगेसूर्येस्वल्पात्मजः अल्पापत्यः । विकलेक्षणश्च विकलेअक्षिणीय-स्य अदृढचक्षुर्भवति हीनदृष्टिर्भवतीत्यर्थः । धर्मेनवमस्थेसुतार्थसुखभाक् सुताःपुत्राःअर्थोधनंसुखंसुखभावःएषांभागीभवति । केचिद्धर्मेसुतार्थरहितइ-तिपठंति । तथाचसत्यः।साध्वाचारविरोधंरुजःप्रदोदैन्यकृन्नवमसंस्थः । खेदशमे सुखशौर्यभाक्सुखितोबलीचभवति । लाभेएकादशेप्रभूतधनवान् । बहुवित्तो भवति । रिःफेद्वादशेपतितः स्वकर्मपरिभ्रष्टोभवति। इत्यादित्यचारः॥ ३ ॥

मूकोन्मत्तजडांधहीनबधिरप्रेष्याःशशांकोदयेस्वर्क्षाजोच्चग-
तेधनीबहुसुतःसस्वःकुटुंबीधने ॥ हिंस्रोभ्रातृगतेसुखेसतनये
तत्प्रोक्तभावान्वितोनैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोलस-
श्चारिगे ॥ ४ ॥

अथचंद्रेलग्नद्वितीयतृतीयचतुर्थपंचमषष्ठस्थेजातस्यस्वरूपंशार्दूलविक्रीडितेना-ह ॥ मूकइति । मूकोवाग्घीनः । उन्मत्तः धातुवैषम्याद्यथेष्टकारी । जडः अप्रतिपन्नः । अंधःनेत्रहीनः । हीनः अनुचितकर्मकृत् । बधिरः श्रोत्रें-द्रियहीनः । प्रेष्योदासः । एषामन्यतमोजातः । शशांकोदयेशशांकेचंद्रेउदयगे लग्नस्थेजातोभवति । एतन्मेषवृषकर्कटवर्ज्यम् । तेषांविशेषमाह । स्वर्क्षाजो-च्चगतइति । स्वर्क्षःकर्कटकः तस्मिँल्लग्नेतत्स्थेचंद्रमसिधनीवित्तवान्भवति । अ-जेमेषलग्नेतत्स्थेचंद्रमसिबहुसुतः प्रभूतपुत्रोभवति । चंद्रस्योच्चोवृषः तस्मिँ-ल्लग्नेचंद्रेसस्वः अर्थवान्भवति । धनेलग्नात् द्वितीयेचंद्रेकुटुंबी बहुकुटुंबोभ-वति । भ्रातृगतेतृतीयस्थानस्थेहिंस्रः क्रूरोभवति । प्राणिवधकोवा । सुखेच तुर्थेसतनये तनयेनपंचमेनस्थानेनयुक्तेतत्प्रोक्तभावान्वितस्तेनप्रोक्तेनकथितेन भावेनान्वितोयुक्तोभवति । तेनसुखेसुखितस्तनयेपुत्रान्वितइति । नैकारिरित्य नेकारिः बहुशत्रुः । मृदुकायः सुकुमारशरीरः । मृदुवह्निः नातिप्रदीप्ता-ग्निः । मृदुमदनः मैथुनशीघ्रगः । तीक्ष्णउग्रस्वभावः । अलसःक्रियास्वपटुः । एवंविधोरिगेलग्नात् षष्ठस्थेचंद्रेजातोभवति ॥ ४ ॥

ईर्ष्युस्तीव्रमदोमदेबहुमतिर्व्याध्यर्दितश्चाष्टमेसौभाग्यात्मज-मित्रबंधुधनभाग्धर्मस्थितेशीतगौ ॥ निष्पत्तिंसमुपैति धर्मधनधीशौर्यैर्युतःकर्मगेख्यातोभावगुणान्वितोभवगतेक्षुद्रोंगहीनोव्यये ॥ ५ ॥

अथलग्नात्सप्तमाष्टमनवमदशमैकादशद्वादशस्थेचंद्रे जातस्यस्वरूपंशार्दूलविक्रीडितेनाह ॥ ईर्ष्युरिति । ईर्ष्युः परर्द्धिमत्सरी । तीव्रमदः अतिमदनः । एवंविधोमदेसप्तमस्थेचंद्रेजातोभवति । बहुमतिः बहुप्रज्ञः । चपलबुद्धिरित्यर्थः । व्याध्यर्दितः रोगपीडितः । एवंविधोऽष्टमस्थेचंद्रेजातोभवति । सौभाग्यंसर्वजनवाल्लभ्यम् ।आत्मजाः पुत्राः । मित्राणिसुहृदः । बांधवाः स्वजनाः। धनंवित्तम् एषांभागीभवति । शीतगौचंद्रेधर्मस्थेनवमस्थानाश्रितेजातोभवति। निष्पत्तिः निष्पादनं सर्वकर्मसमुपैतिगच्छति । धर्मधनधीशौर्यैर्युतः धर्मेणधनेनवित्तेनधियाबुद्ध्याशौर्येणबलेनयुतः । एवंविधः कर्मगेदशमस्थानस्थेचंद्रेजातोभवति । ख्यातइति । ख्यातःसर्वत्रप्रसिद्धः । भावगुणान्वितः भावएकादशोलाभस्थानंतेनान्वितः सलाभइत्यर्थः । एवंविधोभवगतेएकादशस्थेचंद्रेजातोभवति ।क्षुद्रोहिंस्रस्वभावः। अंगहीनः अवयवरहितः। एवंविधोव्ययेद्वादशस्थेचंद्रेजातोभवति । इतिचंद्रचारः ॥ ५ ॥

लग्नेकुजेक्षततनुर्धनगेकदन्नोधर्मेघवान्दिनकरप्रतिमोन्यसंस्थः ॥ विद्वान्धनीप्रखलपंडितमंत्र्यशत्रुर्धर्मज्ञविश्रुतगुणः परतोर्कवज्ज्ञे ॥ ६ ॥

अथलग्नादिस्थयोर्भौमबुधयोर्जातस्यस्वरूपंवसंततिलकेनाह ॥ लग्नेइति । लग्नस्थेकुजेप्रहारादिनाक्षततनुः विक्षतशरीरः । धनगेद्वितीयस्थेकदन्नः कुत्सितान्नाशीभवति । धर्मेनवमे अघवान्पापरतोभवति । अन्यसंस्थो दिनकरप्रतिमः अन्येषुपरिशिष्टस्थानेषुस्थितोदिनकरप्रतिमोर्कतुल्यफलः । तृतीयचतुर्थपंचमषष्ठसप्तमाष्टमदशमैकादशद्वादशेषुयान्येवादित्यस्यफलान्यभिहितानितान्येवभौमस्यवाच्यानि । तद्यथा । तृतीयेमतिविक्रमवांश्चतुर्थेविसुखः पीडितमानसः । पंचमेसुतधनवर्जितः । षष्ठेबलवान् शत्रुजितश्च । सप्तमेस्त्रीभिः परिभवंगतः। अष्टमेस्वल्पात्मजः विकलेक्षणश्च । नवमे सुतार्थसुखभाक् । दशमेसुखशौर्यवान् ।एकादशेप्रभूतधनवान्। द्वादशेपतितः । इतिभौमचारः । अथ बुधचारः । विद्वान्धनीत्यादि । ज्ञेबुधेलग्नगतेविद्वान्पंडितोभवति। द्वितीयेधनीधनवान् । तृतीयेप्रखलः प्रकर्षेणखलोदुर्जनः ।

चतुर्थेपंडितः । पंचमेमंत्री । षष्ठेऽशत्रुः विगतरिपुः । सप्तमेधर्मज्ञः । अ-ष्टमेविश्रुतगुणः प्रख्यातगुणः । परतोऽनंतरान्यस्थानेऽर्कवत् सूर्यवत् ॥ नवमदशमैकादशद्वादशेषुयान्यर्कस्यफलान्यभिहितानितान्येवबुधस्यवाच्यानि । तद्यथा । नवमेसुतार्थसुखभाक् । दशमेसुखशौर्यभाक् । एकादशेप्रभूतधनवान् । द्वादशेपतितइति । इतिबुधचारः ॥ ६ ॥

विद्वान्सुवाक्यः कृपणः सुखीचधीमानशत्रुःपितृतोधिकश्च ॥
नीचस्तपस्वीसधनः सलाभःखलश्चजीवेक्रमशोविलग्नात् ॥७॥

अथलग्नादिस्थस्यजीवस्यफलमिंद्रवज्रयाह॥विद्वानिति। जीवेगुरौविलग्नात्प्रभृतिस्थितेषुद्वादशेषुस्थानेषुक्रमशः परिपाट्यैतानिफलानि । तद्यथा।लग्नस्थेगुरौविद्वान्पंडितोभवति।द्वितीयेसुवाक्यः शोभनवचनः।तृतीयेकृपणः अदाता। चतुर्थेसुखी । पंचमेधीमान् बुद्धिमान् । षष्ठेऽशत्रुः विगतरिपुः । सप्तमेपितृतोधिकः पितुःसकाशाद्गुणाधिकः । अष्टमेनीचःस्वकुलानुचितकर्मकृत् । नवमेतपस्वी विद्यमानतपाः।दशमेसधनः सवित्तः । एकादशेसलाभः लाभयुक्तः । द्वादशे खलः क्रूरचेष्टः । इतिबृहस्पतिचारः ॥ ७ ॥

स्मरनिपुणःसुखितश्चविलग्नेप्रियकलहोऽस्तगतेसुरतेप्सुः ॥
तनयगतेसुखितोभृगुपुत्रेगुरुवदतोन्यगृहेसधनोंत्ये ॥ ८ ॥

अथलग्नादिस्थस्यशुक्रस्यफलंचित्रतयाह ॥ स्मरनिपुणइति। स्मरनिपुणः कामकुशलः । सुखितः संजातसुखः । एवंविधोविलग्नस्थेभृगुपुत्रेशुक्रेजातो भवति । प्रियकलहः कलहवल्लभः । सुरतेप्सुः सुरताभिलाषी । एवंविधोऽस्तगतेसप्तमस्थेशुक्रेजातोभवति । तनयगतेपंचमस्थेशुक्रेसुखितोभवति । गुरुवदतोन्यगृहे अतोस्मात्स्थानत्रयादन्यस्मिन्गृहेस्थानेगुरुवत् । जीववत्फलानिवक्तव्यानि । द्वितीयतृतीयचतुर्थषष्ठाष्टमनवमदशमैकादशद्वादशेषुयान्येवगुरोः बृहस्पतेःफलान्यभिहितानि तान्येवशुक्रस्यवक्तव्यानि । तद्यथा । द्वितीयेसुवाक्योभवति । तृतीयेकृपणः। चतुर्थेसुखी। षष्ठेऽशत्रुः । अष्टमेनीचः। नवमेतपस्वी।दशमेसधनः।एकादशेसलाभः। द्वादशेखलः । सधनोंत्ये अंत्येमीने। यत्रतत्रभावस्थेसधनःवित्तवान्भवति । स्थानोक्तंतत्फलंनभवति । केचिद्गुरुवदतस्तुझषेद्रविणीस्यादितिपठंति । अतोनंतरंपरिशेषस्थानेषुगुरुवत् । झषेमीने द्रविणीस्यात् भवेदिति । इतिशुक्रचारः ॥ ८ ॥

अदृष्टार्थोरोगीमदनवशगोऽत्यंतमलिनःशिशुत्वेपीडार्त्तःसवि-
तृसुतलग्नेत्यलसवाक् ॥ गुरुस्वर्क्षोच्चस्थेनृपतिसदृशोग्रामपु-
रपःसुविद्वांश्चार्वंगोदिनकरसमोन्यत्रकथितः ॥ ९ ॥

अथलग्नादिस्थस्यसौरस्यफलंशिखरिण्याह ॥ अदृष्टार्थोरोगीति ।अदृष्टार्थः नित्यंदरिद्रः । रोगीव्याधितः । मदनवशगः कामाधीनः । अत्यंतमलिनः अतीवमलोपेतः । शिशुत्वेबाल्येपीडार्तोव्याध्यर्दितः । अलस वाक् अव्यक्तभाषी । एवंविधः सवितृसुतेसौरेलग्नस्थितेजातोभवति । यदितुलाधन्विमकरकुंभमीनानामन्यतमोराशिः लग्नगतोनभवति तदा तदेतदुक्तंफलंभवति । एषामन्यतमेलग्नगेतस्यसौरस्यफलमाह । गुरुस्वर्क्षोच्चस्थइति । गुरुक्षेत्रे । धन्विमीनौ शनैश्चरस्यस्वर्क्षस्वक्षेत्रेमकरकुंभौतस्यैवोच्चस्तुला । एषामन्यतमोराशिः यदिलग्नगतोभवति तत्रस्थितेचसौरेनृपतिसदृशः राजतुल्योभवति । ग्रामपुरपः ग्रामाणांपुराणांचाधिपतिःसुविद्वान्पंडितः । चार्वंगः शोभनावयवश्चभवति । केचित्सुहृत्स्वर्क्षोच्चस्थइतिपठंति तदयुक्तम् । यस्मात्सारावल्यामुक्तम् । स्वोच्चेस्वजीवभवनेक्षितिपालतुल्योलग्नेऽर्कजेभवतिदेशनराधिनाथः ॥ शेषेषुदुःखगदपीडितएवबाल्येदारिद्र्यकामवशगोमलिनोलसश्च॥ १॥ दिनकरसमोन्यत्रकथितइति । अन्यत्रद्वितीयादिषुस्थानेषुदिनकरसमोर्कतुल्यः कथितउक्तोयान्यादित्यस्यफलान्यभिहितानितान्येवसौरस्यवाच्यानि।तद्यथा । द्वितीयेभूरिद्रव्योनृपहृतधनोवक्ररोगीचभवति । तृतीयेमतिविक्रमवान् । चतुर्थेविसुखः पीडितमानसः । पंचमेअसुतोधनवर्जितः । षष्ठेबलवान् शत्रुनिर्जितः । सप्तमेस्त्रीभिःपरिभवंगतः । अष्टमेस्वल्पात्मजोविकलेक्षणश्च । नवमेसुतार्थसुखभाक् । दशमेसुखशौर्यभाक् । एकादशेप्रभूतधनवान् । द्वादशेपतित इति । इतिशनैश्चरचारः ॥ ९ ॥

सुहृदरिपरकीयस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्यंलग्नदेहादिभावैः ॥ समुपचयविपत्तीसौम्यपापेषुसत्यःकथयतिविपरीतंरिःफषष्ठाष्टमेषु ॥ १० ॥

अथलग्नादारभ्ययेतन्वादयोभावास्तेषुभावेषुव्यवस्थितानांसर्वेषामेवग्रहाणां फलविशेषंमालिन्याह ॥ सुहृदिति।यदेतत्प्रतिगृहंलग्नात्प्रभृतिद्वादशसुस्थानेषुफलमनुपरिचिंत्यम्।भावाःतनुकुटुंबसहोत्थादयः। लग्नदेहादिभावैरिति । लग्नं देहः शरीरंपरिकल्प्यम् । लग्नादारभ्यतनुकुटुंबसहोत्थादयोभावाःपरिकल्प्याः । अत्रकाभ्रांतिः । तत्रोच्यते । अस्त्येव । यस्माद्यवनेश्वरः । मूर्तिंचहोरांशशिभंच विद्यादिति ॥ अत्रशशिभान्नपरिकल्प्यालग्नात्परिकल्प्याः । तेषुशरीरादिभावेषुयोग्रहोव्यवस्थितः सतस्यभावस्यपुष्टिंकृशतांवाकरोति । कथमित्याह । सुहृदरिपरकीयस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्यमिति । सुहृत्क्षेत्रंमित्रर्क्षं । अरिक्षेत्रंशत्रुभं । परकीयमुदासीनभं।स्वर्क्षमात्मीयक्षेत्रं । तुंगमुच्चभम् । एते-

षुस्थानेषुस्थितानांफलमनुपरिचिंत्यं परिकल्प्यम् । भावस्थोग्रहोयादृशेक्षेत्रे भवति तादृशंफलंप्रयच्छति । नन्वत्रसुहृदादिक्षेत्राणांपरिगणनाकृता तत्रनशुभाशुभफलविभागउक्तः । उच्यते । अर्थादेवैतद्गम्यते । यथामित्रक्षेत्र स्थोभाववृद्धिंकरोति शत्रुक्षेत्रादिस्थश्चतद्धानिम् । तत्रचयेशुभाशुभक्षेत्रेनोक्तेत्रि-कोणनीचभेते अपिग्राह्ये । मित्रादिक्षेत्रान्यक्षेत्रोपलक्षणानिज्ञेयानि । कःपुनरपिअ-रिपरकीययोर्विशेषउच्यते । उदासीनोत्रपरोभिप्रेतः । अरिःशत्रुः । परउदासी-नः । तत्रैतदुक्तंभवति । पापःसौम्योवा नीचस्थः शत्रुक्षेत्रस्थोवा यस्मिन्भा-वेव्यत्रस्थितः तस्यभावस्यहानिंकरोति । उदासीनक्षेत्रस्थोनहानिंनचवृद्धिम् । मित्रक्षेत्रेस्वक्षेत्रेमूलत्रिकोणेस्वोच्चेव्यवस्थितोभावस्यवृद्धिमिति । एतत्केषां-चिन्मते । तथाचभगवान्गार्गिः । नीचर्क्षरिपुगेहस्थोग्रहोभावविनाशकृत् । उदासीनगृहेमध्योमित्रर्क्षस्वत्रिकोणगः । स्वोच्चगश्चग्रहोवश्यंभाववृद्धिकरः स्मृतइति । सत्याचार्यस्तुपुनः । समुपचयविपत्तीसौम्यपापेषुकथयति । य-स्मिन्भावेसौम्याः स्थितास्तस्यभावस्यसमुपचयंवृद्धिंकुर्वंति । यस्मिन्भावेपा-पाः स्थितास्तस्यभावस्यविपत्तिंहानिंकुर्वंति । किंतुरिःफषष्ठाष्टमेष्वेतद्विपरी-तंकथयंति । रिःफेद्वादशेस्थानेसौम्याः भावहानिंकुर्वंति । पापाःवृद्धिं । तेनरिःफेसौ-म्याव्ययहानिंकुर्वंति । पापाः व्ययवृद्धिम् । षष्ठेसौम्याः शत्रुहानिंकुर्वंति पापाःशत्रुवृद्धिम् । अष्टमेसौम्याः मृत्युहानिंकुर्वंति पापाः मृत्युवृद्धिमिति । तथाचसत्यः । सौम्याःपुष्टिंपापास्तद्धानिंसंश्रिताग्रहाःकुर्युः ॥ त्र्यादिषुनिध-नेंत्येषष्ठेचविपर्ययात्फलदाः । ननुपूर्वंसौम्यानांपापानांचोपचयस्थानावस्थि-तानांशुभंफलंव्याख्यातंतत्कथं षष्ठस्थाः पापाः शत्रुवृद्धिंकुर्वंति । अत्रोच्यते । पूर्वंसामान्येनोक्तम् । यत्रचवाचनिकीबाधाभवति तत्रसामान्यंभावफलं त्यक्त्वायथोक्तफलंवक्तव्यम् । यद्येवंकथंस्वल्पजातकेउक्तम् । पुष्णंतिशुभाभावा न्मूर्त्यादीन्घ्नंतिसंस्थिताः पापाः । सौम्याः षष्ठेरिघ्नाः सर्वेनेष्टाव्ययाष्टम-गाइति । अत्रोच्यते । बृहज्जातकेआचार्येणोक्तंस्वल्पजातकेऽन्याचार्यमते-नप्रतिज्ञातमाचार्येण । ज्यौतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकम् । स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये । यत्राचार्याणांसमसंख्यानांमतभेद-समत्वंभवति । तत्रवराहमिहिरोमतद्वयमपिदर्शयति । तथाचबृहद्यात्राया-मन्यरूपांग्रहकुंडलिकांस्वल्पयात्रायांसामान्यरूपांपठंति । एवंबृहदल्पयोर्विवाह-पटलयोरपि ॥ १० ॥

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ॥
शुभंसंपूर्णपादोनदलपादाल्पनिष्फलम् ॥ ११ ॥
इतिबृहज्जातकेभावाऽध्यायःसमाप्तः ॥ २० ॥

अथग्रहकुंडलिकाफलविशेषमनुष्टुभाह ॥ उच्चेति । ग्रहकुंडलिकायांफलं द्विविधमुक्तं शुभमशुभंच । तत्रयच्छुभंफलं तदुच्चात्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैर्ग्रहैर्दत्तंयथाक्रमंपादोनदलपादाल्पनिष्फलंभवति । तेनोच्चस्थोग्रहःसंपूर्णंप्रयच्छति।मूलात्रिकोणस्थः पादोनम्। स्वक्षेत्रस्थोऽर्द्धं।मित्रक्षेत्रस्थः पादफलम् । शत्रुक्षेत्रस्थः पादादप्यल्पम् । नीचस्थोस्तमितश्चनकिंचिदपि । एवंशुभफलं । शुभग्रहणादेवाशुभस्यग्रहस्यव्युत्क्रमोव्याख्येयः । तत्रास्तमितो नीचस्थश्चाशुभंफलंसंपूर्णंप्रयच्छति । शत्रुक्षेत्रस्थः पादोनं।मित्रक्षेत्रस्थोऽर्द्धं ।स्वक्षेत्रस्थः पादम् । त्रिकोणस्थः पादादप्यल्पम् । उच्चस्थोनकिंचिदपि । एवं जातककालेग्रहस्यावस्थानात्फलंवाच्यम् । दशाष्टकवर्गादिफलपक्तिकालेशुभमशुभंवापुष्टफलंबलवानेवप्रयच्छति । एतच्चपूर्वमेवव्याख्यातम् । उक्तंच । तत्कालंबलयुक्तोभवतियदिदशाधिपस्तस्य शुभमशुभंवापिफलंवक्तव्यंनित्यमेव परिपूर्णम् ॥ ११ ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौभावाध्यायोविंशतिःसमाप्तः ॥ २० ॥

**कुलसमकुलमुख्यवंधुपूज्याधनिसुखिभोगिनृपाःस्वभैकवृद्ध्या ॥**
**परविभवसुहृत्स्ववंधुपोष्यागणपवलेशनृपाश्चमित्रभेषु ॥ १ ॥**

अथातआश्रययोगाध्यायोव्याख्यायते । तत्रादावेवैकादिसंख्योत्तरवृद्ध्या स्वगृहगतानांग्रहाणांमित्रक्षेत्रगतानांचफलंपुष्पिताग्रयाह ॥ कुलसमकुलेति । स्वभेषुस्वराशिष्वेकवृद्ध्यास्थितैः ग्रहैर्जाताः कुलसमकुलमुख्यवंधुपूज्या धनिसुखिभोगिनृपाः पुरुषाभवंति । यस्मिंस्तस्मिन्ग्रहेस्वक्षेत्रगतजातः कुलसमः स्वकुलतुल्योभवति । एवंद्वयोः स्वक्षेत्रस्थयोः । कुलमुख्यः स्वकुलप्रधानः स्वकुलाधिकः । त्रिषुवंधूनांपूज्यः । चतुर्षुधनीवित्तवान् । पंचसुसुखी । षट्सुभोगीनृपतुल्यः । केचिद्भूपइतिपठंति । सचोपमानाद्भूपतिरिवभूपस्तत्समत्वमेवमुक्तम्। स्वल्पजातकेप्युक्तम्।कुलतुल्यकुलाधिकवंधुमान्यधनिभोगिनृपसमनरेंद्राः । एवंषट्सुनृपसमः । सप्तसुनृपोराजा । एवंगुणः एकोत्तरवृद्ध्यास्वक्षेत्रगेषुजातोभवति । परविभवेत्यादि । एकवृद्ध्याइत्यनुवर्तते । मित्रभेष्वेकवृद्ध्यास्थितेषु परविभवसुहृत्स्ववंधुपोष्यागणपवलेशनृपाश्चजाताभवंति । तेनैकस्मिन्मित्रक्षेत्रस्थेग्रहेजातः परविभवपोष्योभवति । पराजीवीत्यर्थः । द्वयोः सुहृत्पोष्यः । त्रिषुस्वपोष्योज्ञातिपोष्योभवति । चतुर्षुवंधुपोष्यः भ्रातृपोष्यइत्यर्थः । पंचसुगणपः गणस्वामी । षट्सुवलेशो सेनापतिः । सप्तसुनृपोराजा ॥ १ ॥

जनयतिनृपमेकोप्युच्चगोमित्रदृष्टःप्रचुरधनसमेतंमित्रयोगा-
च्चसिद्धम्॥विधनविसुखमूढव्याधितोबंधतप्तोवधदुरितसमेतः
शत्रुनीचर्क्षगेषु ॥ २॥

अथोच्चगतस्यैकस्यापिमित्रदृष्टस्यफलमेकोत्तरवृद्ध्यानीचशत्रुस्थानांचमालिन्याह ॥ जनयतीति । एकोप्युच्चगतोग्रहोमित्रदृष्टः सुहृदवलोकितः नृपंराजानंजनयति उत्पादयति । एवमेकोप्युच्चगतोमित्रयोगान्मित्रयुक्तत्वात्प्रचुरधनसमेतंसिद्धंचजनयति प्रचुरधनसमेतं पर्याप्तवित्तयुक्तंसिद्धंच सर्वत्रावाप्तपूजंजनयति । विधनविसुखमूढेत्यादि । एकवृद्ध्येत्यनुवर्तते । एकवृद्ध्या । शत्रुनीचर्क्षगेषु शत्रुक्षेत्रस्थेषु नीचगेषुवाग्रहेषु । विधनविसुखमूढव्याधिताबंधतप्तावधदुरितसमेताजाताः भवंति । तेनयस्यजन्मन्येकोग्रहः शत्रुक्षेत्रगोनीचगोवाभवतिसविधनः विगतधनोभवति दरिद्रः । यस्यद्वौ सविसुखोदुःखितः । यस्यत्रयः समूढः विचित्तः । यस्यचत्वारः सव्याधितः पीडितः । यस्यपंच सबंधनतप्तोभवति । यस्यषट् सतप्तोभवति बहुदुःखसंतप्तः । यस्यसप्त सवधदुरितसमेतोभवति । वधवध्योदुरितंदुष्कृतं वध एवदुरितंतेनसमेतोयुक्तोवा । नीचेयद्यपिसप्तनसंभवंति तथापिवज्रादिवत्पूर्वशास्त्रानुसारेणतत्फलोपदेशः ॥ २ ॥

नकुंभलग्नंशुभमाहसत्योनभागभेदाद्यवनावदंति ॥
कस्यांशभेदोनतथास्तिराशेरतिप्रसंगास्त्वतिविष्णुगुप्तः॥ ३॥

अथकुंभलग्नजातस्याऽशुभंफलमुपजातिकयाह ॥ नकुंभलग्नमिति । सत्याचार्यः । कुंभलग्नंजन्मनिनशुभमाह नशोभनमुक्तवान् । तथाचसत्यः । जन्मनिचंद्रःश्रेष्ठःप्रवदेद्धोरारिनिधनवर्ज्यः स्यात् । होराचभवेदिष्टाद्विपदेष्विहकुंभवर्ज्यंहि । कुंभविलग्नेजातोभवतिनरोदुःखशोकसंतप्तइति । नभागभेदादिति । पुराणयवनाभागभेदाद्द्वादशभागभेदाज्जन्मनिकुंभलग्नमशुभमिति यस्यतस्यलग्नस्यकुंभद्वादशभागेजन्मनशुभमिति तेषांमतंनकुंभलग्ने । तथाच । तन्मतानुसारिणाश्रुतकीर्तिनाप्युक्तम् । सर्वस्मिँल्लग्नगतेकुंभद्विरसांशकोयदाभवति । राशौनतदासुखितःपरान्नभोजीभवेत्पुरुषइति । अत्रविष्णुगुप्तचाणक्यावाहतुः । कस्यांशभेदइति । यदुक्तम् । भागभेदात्कुंभलग्नं जन्मनिनशुभम् । तत्कस्यराशेर्लग्नगतस्य । कुंभद्वादशभागोनास्त्यपितुसर्वस्यैवास्तिविद्यते । यस्माद्यदिकुंभस्यद्वादशभागोनशुभस्तदासर्वाण्येवलग्नोक्तानिफलानिनिरर्थकानिभवंति । तस्मादतिप्रसंगः । तेनकुंभलग्नमेवाशुभंतत्त-

द्भागभेदइति । तथाचतद्वाक्यम् । कुंभद्वादशभागोलग्नगतोनप्रशस्यतेयवनैः । यद्येवंसर्वेषांलग्नगतानामनिष्टफलतास्यात् । घटयोगाद्राशीनांनमतंतत्सर्वशास्त्रकाराणाम् । तस्मात्कुंभविलग्नोजन्मन्यशुभोनतद्भागइति ॥ ३ ॥

यातेष्वसत्स्वसमभेषुदिनेशहोरांख्यातोमहोद्यमबलार्थयुतोतितेजाः ॥ चांद्रींशुभेषुयुजिमार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्ययुतःप्रजातः ॥ ४ ॥

अधुनाहोरास्थानांग्रहाणांफलंवसंततिलकेनाह ॥ यातेष्विति । असद्ग्रहाः पापाः तेष्वसत्सुपापेषुअसमभेषुविषमराश्यवस्थितेषु नकेवलंपावद्दिनेशहोरामादित्यहोरांयातेषुप्राप्तेषुविषमराशिषुपापाः प्रथमार्द्धस्थायदाभवंति । तदाजातः ख्यातः सर्वत्रप्रसिद्धः । महोद्यमबलार्थयुतः महत्सुकार्येषूद्यमरतोबलवान् वीर्यवान् । अर्थयुतोधनवान् । अतितेजाअतितेजस्वीभवति । चांद्रींशुभेष्विति । युजियुग्राशौशुभेषुसौम्यग्रहेषु चांद्रींहोरांयातेषुसमराशिषुप्रथमार्द्धस्थाः सौम्या भवंति । तदाजातोमार्दवयुतोमृदुस्वभावः । कांतियुतोद्युतिमान् । सौख्ययुतः सुखान्वितः । सौभाग्ययुतः सर्वजनप्रियः। धीयुतः मतिमान् । मधुरवाक्ययुतः प्रियंवदः। एतैः गुणैर्युक्तो जातोभवति ॥ ४ ॥

तास्वेवहोरास्वपरर्क्षगेषुज्ञेयानराः पूर्वगुणेषुमध्याः ॥ व्यत्यस्तहोराभवनास्थितेषुमर्त्याभवंत्युक्तगुणैर्विहीनाः ॥ ५ ॥

अथपुनरपिहोरागतफलमिंद्रवज्रयाह ॥ तास्वेवेति । तास्वेवपूर्वोक्तासुहोरास्वपरर्क्षगेष्वन्यराश्याश्रितेषुजातानराः सर्वेषुपूर्वोक्तगुणेषुमध्याः भवंति । एतदुक्तंभवति । समराशिषुरविहोरायांपापग्रहाणामवस्थानंभवति । तदा जातानां पूर्वोक्तगुणा मध्याभवंति। एवंविषमराशिषुचंद्रहोरायांसौम्यग्रहाणामवस्थानंभवति तदाजातानांपूर्वोक्तगुणामध्याभवंति । व्यत्यस्तहोराभवनस्थितेष्विति । व्यत्यस्तासु विपरीतस्थासुहोरासु व्यत्यस्तेषुच भवनेषुराशिषुस्थितेषुग्रहेषु जातामर्त्यामनुष्याउक्तगुणैः प्रागुद्दिष्टैः गुणैः विहीनावर्जिताभवंति । एतदुक्तंभवति । समराशिषुचंद्रहोरायांपापानामवस्थानंभवति । तदाजातामहोद्यमबलार्थहीनाभवंति वितेजसश्च । एवं विषमराशिषुआदित्यहोरायांसौम्यानामवस्थानंभवति तदाजातामार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्याविहीनाजाताभवंति । अत्रचदर्शितेग्रहावस्थाने यथायथाग्रहबहुत्वंभवति तथातथागुणवहुत्वंवक्तव्यम् ॥ ५ ॥

कल्याणरूपगुणमात्मसुहृद्दृक्काणेचंद्रोन्यगस्तदधिनाथगुणं करोति॥व्यालोद्यतायुधचतुश्चरणांडजेषुतीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च ॥ ६ ॥

अथद्रेष्काणावस्थानाच्चंद्रस्यफलंवसंततिलकेनाह ॥ कल्याणरूपगुणमिति । आत्मीयद्रेष्काणेयदाचंद्रः स्थितोभवति । अथवासुहृद्द्रेष्काणेस्थितस्तदाजातः कल्याणरूपगुणः प्रशस्तरूपः प्रशस्तगुणश्चभवति । आत्मीयद्रेष्काणमित्रद्रेष्काणावस्थानंविनान्यद्रेष्काणावस्थितेचंद्रमसिविचारः । यस्मादुक्तान्यगस्तदधिनाथगुणंकरोति । यस्मिन्द्रेष्काणेचंद्रमाव्यवस्थितस्तस्ययोधिपतिः सयदिचंद्रस्यतत्कालमध्यस्थस्तदाजातस्यमध्यमौरूपगुणौभवतः । अथद्रेष्काणाधिपतिश्चंद्रस्यतत्कालमरिस्तदाजातोरूपगुणहीनोभवति । व्यालोद्यतायुधेति । व्यालद्रेष्काणः सर्पद्रेष्काणस्तत्रस्थेचंद्रेजातः तीक्ष्णउग्रोभवति । उद्यतायुधद्रेष्काणः सायुधस्तत्स्थेचंद्रेजातोतिहिंस्रोमारणात्मकोभवति । प्राणिघातरतइत्यर्थः । चतुश्चरणः चतुष्पद्द्रेष्काणः । तत्रस्थेचंद्रेगुरुतल्परतोगुरुदाराभिगामी भवति । अंडजद्रेष्काणः पक्षिद्रेष्काणस्तत्रस्थेचंद्रेऽटनः परिभ्रमणशीलोभवति । आत्मीयादिद्रेष्काणस्थेचंद्रमसिव्यालद्रेष्काणस्थेचंद्रेसभवतःफलद्वयमपिवक्तव्यम् । अत्रव्यालद्रेष्काणाः।कर्कटद्वितीयः । कर्कटतृतीयः । वृश्चिकाद्यः। वृश्चिकद्वितीयः । मीनतृतीयः ॥ उद्यतायुधद्रेष्काणाः। मेषाद्यः । मेषतृतीयः । मिथुनद्वितीयः । मिथुनतृतीयः । सिंहद्वितीयः । सिंहतृतीयः । कन्याद्वितीयः । तुलातृतीयः । धनुषिप्रथमः । धनुषितृतीयः । मकरतृतीयः ॥ अथचतुष्पदद्रेष्काणाः। मेषद्वितीयः । वृषद्वितीयः । वृषतृतीयः । कर्कप्रथमः । सिंहप्रथमः । सिंहद्वितीयः । सिंहतृतीयः । तुलातृतीयः । वृश्चिकतृतीयः।धनुषि प्रथमः । मकराद्यः[1] ॥ अथखगद्रेष्काणाः । मिथुनद्वितीयः । सिंहप्रथमः । तुलाद्वितीयः । कुंभप्रथमः । अत्रापिगुणद्वयांतर्भूतद्रेष्काणस्थेचंद्रेफलद्वयं वक्तव्यमिति ॥ ६ ॥

स्तेनोभोक्तापंडिताढ्योनरेंद्रःक्लीबःशूरोविष्टिकृद्दासवृत्तिः॥पापोहिंस्रोऽभीश्चवर्गोत्तमांशेष्वेषामीशाराशिवद्द्वादशांशैः ॥ ७ ॥

अधुनामेषादिनवांशकजातस्यस्वरूपंशालिन्याह ॥ स्तेनइति । मेषवर्ज्यमन्यस्मिन् राशौलग्नगतेमेषनवांशकेजातःस्तेनश्चौरोभवति । वृषवर्ज्यंवृषनवांशकेजातोभोक्ता असंचयशीलः । एवंमिथुनवर्ज्यंमिथुननवांशकेजातः

१ मकराद्यद्रेष्काणे चतुष्पदविषये विवादः ।

पंडितोविद्वान्भवति । कर्कटनवांशकेजातः आढ्यःईश्वरः । सिंहांशकेनरेंद्रो राजा । कन्यांशकेक्लीबः पुरुषाकाररहितः । तुलांशकेशूरः संग्रामप्रियः । वृश्चिकांशकस्थेविष्टिकृद्भारजीवी । धन्व्यंशकेदासवृत्तिः । मकरांशकेपापः । कुंभांशकेहिंस्रः क्रूरः । मीनांशकेऽभीः निर्भयः । केचिदधीरितिपठंति । अधीःबुद्धिरहितः । आचार्यस्यचाभीरभिमतम् । तथाचस्वल्पजातके । तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाभयदरिद्राः । खलपापोग्रोत्कृष्टामेषाद्यानां नवांशभवाइति।वर्गोत्तमांशेष्वेषामीशाः । एष्वेवराशिपुवर्गोत्तमांशेपुजाताएषामेवपूर्वोक्तानामीशाःस्वामिनोभवंति । एतदुक्तंभवति । मेषलग्नेमेषनवांशके जातश्चौरस्वामीभवति । वृषलग्नेवृषनवांशकेजातोभोक्तॄणामसंचयशीलानां स्वामीभवति । एवंमिथुनेपंडितस्वामी । कर्कटलग्नेईश्वराणांस्वामी महाधनिकः । सिंहेनृपस्वामी महाराजाधिराजः । कन्यायांक्लीबस्वामी । तुलायांशूराणांस्वामी ।वृश्चिकेभारवाहानांस्वामी। धन्विनिदासानांस्वामी।मकरेपापानां स्वामी । कुंभेक्रूराणांस्वामी । मीनांशकेऽभयानांस्वामी । राशिवद्द्वादशांशैरिति ।द्वादशांशैः राशिवत्फलानिवाच्यानि । यानिमेषादिस्थेचंद्रमसिफलान्यभिहितानि वृत्तातामद्दगित्येवमादीनितान्येवमेषादिद्वादशांशकजातस्यवक्तव्यानीति ॥ ७ ॥

जायान्वितोबलविभूषणसत्वयुक्तस्तेजोतिसाहसयुतश्चकुजे स्वभागे॥रोगीमृतस्वयुवतिर्विषमोन्यदारोदुःखीपरिच्छदयुतोमलिनोर्कपुत्रे ॥ ८ ॥

अथभौमसौरयोः स्वत्रिंशांशकस्थयोःफलंवसंततिलकेनाह ॥ जायान्वितइति । जायान्वितोभार्यायुक्तः । बलंवीर्यं विभूषणान्यलंकरणानि सत्वमौदार्यमेतैर्युक्तः । तथातितेजाः अतिसाहसेनासमीक्षितकार्यकरणेनचयुक्तः । एवंविधः कुजेभौमेस्वभागेस्वत्रिंशांशकस्थेजातोभवति । रोगीव्याधितः । मृतस्वयुवतिः मृतास्वाआत्मीयायुवतिर्भार्यायस्य । विषमःक्रूरः । अन्यदारोऽन्यसंबंधिनीदारायस्य परदारासक्तः । दुःखीनिःसुखः । परिच्छदयुतोगृहवस्त्रपरिवारोपेतः । मलिनःमलोपेतः । एवंविधोर्कपुत्रेसौरेस्वत्रिंशांशकस्थेजातो भवति । नन्वत्रत्रिंशांशकग्रहणंनास्ति तत्कथंज्ञायते त्रिंशांशकफलमेतत् । उच्यते । शुक्रफलाभिधानेत्रिंशांशकग्रहणंभविष्यति ॥ ८ ॥

स्वांशेगुरौधनयशःसुखबुद्धियुक्तास्तेजस्विपूज्यनिरुगुद्यमभोगवंतः ॥ मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताःशशिजेतिमान्याः ॥ ९ ॥

अथजीवबुधयोःस्वत्रिंशांशकस्थयोः जातस्यस्वरूपंवसंततिलकेनाह ॥ स्वांशइति । धनेनवित्तेन यशसाकीर्त्या सुखेननिर्दुःखत्वेन बुद्ध्याप्रज्ञयाच युक्ताः । तेजस्वीसोत्साहः पूज्यःलोकवंद्यः । निरुक् स्वस्थदेहः । उद्यमवान् उत्थानशीलः। भोगवान् भोगसंयुक्तः । एवंविधागुरौजीवेस्वत्रिंशांशकस्थेजाताभवंति । मेधाबुद्धिः । कलागीतवाद्यनृत्यपुस्तकचित्रकर्मादिकाः। कपटः दांभिकत्वम् । काव्यंकवेःकर्म । विवादःवाक्पटुत्वं।शिल्पंतक्षकर्मादि । शास्त्रार्थःसतामाचारानुष्ठानं साहसमसमीक्षितकार्यकरणशीलता । अतिमान्योतिपूज्यः । एवंविधाः । शशिजेबुधेस्वत्रिंशांशकस्थेजाताः भवंति । केचिदत्रसर्वत्रैकवचनमेवेच्छंतितथापिनकश्चिद्दोषः ॥ ९ ॥

स्वेत्रिंशांशेबहुसुतसुखारोग्यभाग्यार्थरूपः शुक्रेतीक्ष्णःसुललितवपुः सुप्रकीर्णेंद्रियश्च ॥ शूरस्तब्धोविषमवधकौसद्गुणाढ्यौसुखिज्ञौचार्वंगेष्टौरविशशियुतेष्वारपूर्वांशकेषु ॥ १० ॥

## इतिबृहज्जातकेआश्रययोगाध्यायः ॥ २१ ॥

अथशुक्रस्यस्वत्रिंशांशकस्थस्य भौमादित्रिंशांशकस्थयोश्चंद्रार्कयोश्चजातस्य स्वरूपंमंदाक्रांतयाह ॥ स्वेत्रिंशांशेइति । बहुसुतः प्रभूतपुत्रः । बहुसुखोऽपरिमितसुखः । आरोग्येणनिरोगतया भाग्यैः जनप्रियत्वेन अर्थेनधनेन रूपेणसुचारुतया संयुक्तः । केचिद्भार्यार्थरूपइतिपठंति । भार्ययाकलत्रेण । तथातीक्ष्णः क्रूरः । सुललितवपुः शोभनशरीरः । सुप्रकीर्णेंद्रियः । विक्षिप्तेंद्रियार्थः । सुप्रकीर्णानिविक्षिप्तानींद्रियाणियस्य । बहुस्त्रीगमनशीलः । एवंविधः शुक्रेस्वत्रिंशांशकस्थेजातोभवति । शूरस्तब्धावित्यादि । आरपूर्वांशकेषुभौमप्रथमेषुभागेषुरविशशियुक्तेष्वर्कचंद्रसंयुक्तेषु यथासंख्यंफलानि । तद्यथा । भौमत्रिंशांशकस्थेऽर्के शूरः संग्रामप्रियः । चंद्रेस्तब्धश्चिरकारी । सौरत्रिंशांशकस्थेऽर्केविषमः क्रूरोभवति । चंद्रमसिवधकः । जीवत्रिंशांशकस्थेऽर्केसद्गुणोभवति । चंद्रमस्याढ्यः ईश्वरः । बुधत्रिंशांशकस्थेऽर्केसुखीभवति । चंद्रेज्ञः पंडितः । शुक्रत्रिंशांशकस्थेऽर्केचार्वंगः शोभनशरीरः । चंद्रमसीष्टः सर्वजनप्रियः । एवमारपूर्वेष्वंशेषुआरोंगारकः पूर्वः प्रथमोयेषामंशकानांत्रिंशद्भागानांतेष्विति ॥ १० ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौ आश्रययोगाऽध्यायएकविंशतिः समाप्तः ॥ २१ ॥

## अथप्रकीर्णकाध्यायप्रारंभः ॥

स्वर्क्षतुंगमूलत्रिकोणगाः कंटकेषुयावंतआश्रिताः ॥
सर्वएवतेन्योन्यकारकाः कर्मगस्तुतेषांविशेषतः ॥ १ ॥

अथातः प्रकीर्णकाध्यायोव्याख्यायते । मिश्रः प्रकीर्णकइत्युच्यते । तत्रग्रहाणांपरस्परंकारकसंज्ञांवैतालीयेनाह ॥ स्वर्क्षेति । स्वर्क्षेस्वक्षेत्रेयोग्रहः स्थितः । यश्चतुंगेस्वोच्चे । यश्चमूलत्रिकोणेस्थितः । सचयदिलग्नकंटकेषुकेंद्रेष्वाश्रितः स्थितोभवति । एवंविधस्यग्रहस्यान्योप्येवंविधः । केंद्रगोयदिभवति तदातौग्रहावन्योन्यंपरस्परंकारकाख्यौभवतः । अनेनप्रकारेणयः कर्मगः । योयस्मात् ग्रहात्दशमस्थानस्थः सविशेषतः विशेषेणतेषां ग्रहाणांमध्यात्कारकसंज्ञांलभते । अतउक्तम् । कर्मगस्तुतेषांविशेषतइति ॥ १ ॥

कर्कटोदयगतेयथोडुपेस्वोच्चगाःकुजयमार्कसूरयः ॥
कारकानिगदिताःपरस्परंलग्नगस्यसकलोंबरांबुगः ॥ २ ॥




अथास्यैवोदाहरणप्रदर्शनार्थंरथोद्धतयाह ॥ कर्कटेति । यथाकर्कटोदयेकुलीरलग्नेतत्स्थेचोडुपेचंद्रेकुजोंगारकः । यमःसौरः । अर्कआदित्यः । सूरिर्बृहस्पतिः । एतेकुजयमार्कसूरयः । स्वोच्चगाः । आत्मीयतुंगस्था यदिभवंति । कुजोमकरेयमस्तुलायामर्कोमेषेसूरिःकर्कटे । तदातेपरस्परमन्योन्यंकारकानिगदिताउक्ताः । अनेन प्रकारेणयावंतोभवंतितावंतः परस्परंकारकाख्याः । अनेनोदाहरणेनैतत्प्रतिपादितंभवति । यथापुरुषस्यजन्मलग्नात्केंद्रंविनास्वक्षेत्रउच्चत्रिकोणगाः अपिपरस्परंकंटकगास्तदाकारकसंज्ञामपिलभंते । लग्नगस्येति । लग्नगस्यग्रहस्यप्राग्लग्नेसमवस्थितस्यसकलः सर्वोग्रहोंबरगः । दशमस्थानस्थश्चांबुगश्चतुर्थस्थानस्थश्चकारकसंज्ञोभवति । अनेनैतदुक्तंभवति । लग्नगो ग्रहः स्वक्षेत्रगोच्चत्रिकोणेषुयद्यपिभवति तस्माद्योदशमस्थः चतुर्थोवासोप्युच्चत्रिकोणस्वक्षेत्राणामन्यतमस्थोभवति । तथापिलग्नगतस्य सकारकाख्योभवति । नतस्यलग्नगतइति । अतउक्तम् । लग्नगस्यसकलोंबरांबुगइति ॥ २ ॥

स्वत्रिकोणोच्चगोहेतुरन्योन्यंयदिकर्मगः ॥
सुहृत्तद्गुणसंपन्नःकारकश्चापिसस्मृतः ॥ ३ ॥

अथपुनरपिअन्यत्कारकलक्षणमनुष्टुभाह ॥ स्वत्रिकोणोच्चगइति । स्वत्रिकोणोच्चगोग्रहः । कारकत्वेहेतुः कारणं नकेंद्रस्थः । तयोन्योस्यग्रहस्यलग्नकेंद्रंविनाप्यवस्थितस्ययदिकाश्चिद्ग्रहः कर्मगोदशमस्थानस्थोभवतिसचस्वक्षेत्रोच्चमूलत्रिकोणानामन्यतमेभवति । यस्माच्चदशमस्तस्ययदिसुहृन्मित्रंनिसर्गतोनकेवलं यावत्तद्गुणसंपन्नस्तेनमित्रगुणेनसंयुक्तस्तात्कालिके मित्रामित्रविधिनाधिमित्रतां प्राप्तस्तथाविधः सर्वग्रहः कारकाख्योभवति । यस्यचदशमः सतस्यकारकाख्योनभवति। कारकसंज्ञाचयात्रायामुपयुज्यते । यतस्तत्रोक्तम् । रिक्तोपहतदशायांजन्मोदयनाथशत्रुपाकेच । स्वदशेशकारकदशासंश्रयणीयोनरेंद्रपतिरिति । तथासप्तखिवेशिगृहयुक्तः कारकर्क्षेपिचंद्रः जयसुखधनदातातत्ग्रहर्तान्यथेति ॥ ३ ॥

शुभंवर्गोत्तमेजन्मवेशिस्थानेचसद्ग्रहे ॥
अशून्येषुचकेंद्रेषुकारकाख्यग्रहेषुच ॥ ४ ॥

अथकारकसंज्ञाप्रयोजनमनुष्टुभाह ॥ शुभमिति । यस्यलग्ननवांशेवर्गोत्तमाख्येजन्मभवति चंद्रोपिवावर्गोत्तमांशगतोभवति तस्यशुभंजन्मय । स्मिन्राशौपुरुषस्यजन्मसमयेर्कः स्थितस्तस्माद्राशेर्योद्वितीयोराशिः सवेशिसंज्ञः । यस्यचप्रागुक्तेवेशिस्थानेसद्ग्रहः सौम्यग्रहोज्ञगुरुसितानामन्यतमोभवति तस्यापिशुभंजन्म । यस्यजन्मलग्नंकेंद्रचतुष्टयादेकमप्यशून्यंकेंद्रंभवति तस्यापिशुभंजन्म । अत्रसौम्यग्रहाधिष्ठितेकेंद्रेविशेषेणशुभंजन्म । यस्मादुक्तमनेनैव । एकस्मिन्नपिकेंद्रेयदिसौम्योनग्रहोस्तियात्रायाम् । जन्मन्यथवाकर्मणिन तच्छुभंप्राहुराचार्याः । यस्यजन्मनिकारकाख्याः कारकसंज्ञाग्रहाभवंति तस्यापिशुभंजन्म । अत्रयथागुणाधिक्यंतथाशुभतरमेवजन्म ॥ ४ ॥

मध्येवयसःसुखप्रदाःकेंद्रस्थागुरुजन्मलग्नपाः ॥
पृष्ठोभयकोदयर्क्षगास्त्वंतेतःप्रथमेषुपाकदाः ॥ ५ ॥

अथयेनयोगेनजातोयौवनेसुखभवतितंदशापतिफलपाकंवैतालीयेनाह ॥ मध्येवयसइति गुरुर्जीवः । जन्मनियत्रराशौचंद्रमाः स्थितःतदधिपतिः । जन्मपः यस्मिँल्लग्नेजातः तदधिपोलग्नपः । एषामन्यतमोयस्यलग्नकेंद्रेभवति तस्यवयोमध्येसुखप्रदोभवति । यौवनेसुखीभवतीत्यर्थः । अत्रचयवनेश्वरः । जन्माधिपोलग्नपतिश्चयेषांचतुष्टयेस्याद्बलवान्गुरुर्वा । चतुर्षुहोरादिषुसंगतःस्याच्चतुर्वयःकालफलप्रदःस्यात् पृष्ठोभयेत्यादि । दशापतिर्दशाप्रवेशकालेपृष्ठोदयराशिगोमेषवृषधन्विमकराणामन्यतमस्थितोयदाभवति तदा

**विडंबः ॥ इतिशवपरिणामश्चिंतनीयोयथोक्तः पृथुविरचितशास्त्राद्गत्यनूकादिचिंत्यम् ॥ १३ ॥**

अथमृतस्यशरीरपरिणामज्ञानंमालिन्याह ॥ दहनेति । निधनभवनेष्टमे स्थानेयोद्रेष्काणोव्यवस्थितः तद्वशाच्छवपरिणामश्चिंतनीयः । सचगणनयाद्वाविंशोद्रेष्काणोभवति । सचयदिदहनद्रेष्काणोऽग्निद्रेष्काणोभवति तदाभस्मत्वेनपरिणमत्यग्निनादह्यते । पापद्रेष्काणोऽग्निद्रेष्काणः । अथजलद्रेष्काणोभवति तदासंक्लिद्यते जलमध्येक्षिप्यते । सौम्यग्रहद्रेष्काणोजलद्रेष्काणः । अथमिश्रद्रेष्काणोभवति तदा शुष्यति । नदह्यतेनचापिजलमध्येक्षिप्यते । सौम्यग्रहद्रेष्काणः पापयुक्तोभवति । पापग्रहद्रेष्काणोवासौम्ययुक्तस्तदामिश्रद्रेष्काणः। तथानिधनभवनसंस्थैरष्टमराश्याश्रितैः व्यालवर्गैः सर्पद्रेष्काणैः विडंबितोभवति तदाश्वसृगालकाकादिभिर्भुज्यते । भक्ष्यतइत्यर्थः । अत्रव्यालद्रेष्काणाः कर्कटाद्यः कर्कटद्वितीयः वृश्चिकाद्यः वृश्चिकद्वितीयः मीनांत्यश्च । उक्तंच । शशिगृहपूर्वापरगोकीटस्यचमीनपश्चिमोपगतः । निधनेयस्यभवंतिद्रेष्काणास्तस्य चमृतस्य । भुंजंतिवायसाद्याः प्राणिसमूहानचास्तिसंदेहः । पापग्रहद्रेष्काणोयस्याष्टमराशिसंस्थितोभवति । दहनंप्राप्नोतिनरोमृतमात्रोनिश्चयात्प्रवदेत् । एवंसौम्यद्रेष्काणोजलमध्येक्षिप्यते नरोत्रमृतः । सौम्यद्रेष्काणः पापैः पापद्रेष्काणोपिसौम्ययुक्तः । यस्याष्टमभवनगतः शोषंप्राप्नोति सोऽपिमृतइति । एवंप्रकारः शवानांमृतानांपरिणामोविपत्तिश्चिंतनीयोविचार्यः पृथुविरचितशास्त्राद्विस्तीर्णाच्छास्त्राद्गत्यर्थकादिमरणादिचिंत्यम् । मृतस्यकागतिर्भविष्यति कस्माच्चलोकादयमागतः आदिग्रहणात्तत्रकीदृगासीदिति । अनूकशब्देनेहातीतजन्मोच्यते ॥ १३ ॥

**गुरुरुडुपतिशुक्रौसूर्यभौमौयमज्ञौविबुधपितृतिरश्चोनारकीयांश्चकुर्युः॥दिनकरशशिवीर्याधिष्ठितात्र्यंशनाथात्प्रवरसमनिकृष्टास्तुंगह्रासादनूके ॥ १४ ॥**

अथयोयंजातोजंतुः सकस्माल्लोकादागतइतियदुक्तंतद्विज्ञानंमालिन्याह ॥ गुरुरिति । गुरुर्जीवः । उडुपतिशुक्रौ चंद्रसितौ । सूर्यभौमौ रविकुजौ । यमज्ञौसौरबुधौ । एतेविबुधपितृतिरश्चोनारकीयांश्चजातान् कुर्युः । विबुधलोकोदेवलोकः । पितृलोकः प्रसिद्धः। तिरश्चास्तिर्यग्लोकः। नरकः नरकलोकः प्रसिद्धः । एभ्यः आगतान् वदेत्। कथमितितदर्थमाह । दिनकर-

शशिवीर्याधिष्ठितात्र्यंशनाथादिति । दिनकरःसूर्यः शशीचंद्रः अनयोः दिनकरशशिनोः मध्याद्योबलीवीर्यवान् तेनाधिष्ठितोयुक्तोयस्त्र्यंशोद्रेष्काणः तस्ययोनाथः स्वामीतस्ययोलोकस्तस्मादागतइतिवक्तव्यम् । तत्रसयदिद्रेष्काणोगुरोः जीवस्यसंबंधीभवति तदा विबुधलोकादागतइतिवक्तव्यम् । अथचंद्रशुक्रयोरन्यतमसंबंधीभवति तदापितृलोकादागतइतिवक्तव्यम् । अथसूर्यभौमयोरन्यतमसंबंधीभवति तदा तिर्यग्लोकादागतइतिवक्तव्यम् । अथशनैश्चरबुधयोरन्यतमसंबंधीभवति तदानरकलोकादागतइतिवक्तव्यम् । यस्माल्लोकादागतस्तत्रापि श्रेष्ठमध्यमहीनत्वज्ञानमाह । प्रवरेत्यादि । यस्यग्रहस्यप्रदर्शितलोकात्तस्यजन्मज्ञानमाह । ग्रहस्तुंगस्थः स्वोच्चराशिगतोभवति । तदातत्र प्रवरः प्रधानमासीदितिविज्ञेयम् । अथोच्चराशिच्युतोनीचमप्राप्य तदा तत्रासौमध्यमआसीदितिविज्ञेयम् । नीचस्थः निकृष्टः हीनः एतदनूकेप्राग्जन्मनिज्ञेयम् ॥ १४ ॥

गतिरपिरिपुरंध्रत्र्यंशपोऽस्तस्थितोवागुरुरथरिपुकेंद्रच्छिद्रगः
स्वोच्चसंस्थः ॥उदयतिभवनेंत्येसौम्यभागेचमोक्षोभवतियदि
बलेनप्रोज्झितास्तत्रशेषाः ॥ १५ ॥

## इतिबृहज्जातकेनैर्याणिकाऽध्यायःपंचविंशतिः समाप्तः ॥ २५ ॥

अथमृतस्यकागतिर्भविष्यति तद्विज्ञानंमालिन्याह । गतिरिति ॥ यस्य जन्मनिलग्नात्षष्ठसप्तमाष्टमस्थानानिशून्यानिभवंति तस्यतत्कालेरिपुस्थाने षष्ठेयोद्रेष्काणोयश्चरंध्रस्थानेऽष्टमेत्र्यंशोद्रेष्काणोवर्ततेतयोर्यावधिपतीतयोर्मध्ये योबलवांस्तस्ययोलोकोभिहितः सएवगतिः । एवं रिपुरंध्रत्र्यंशपइति । तत्रतेनमृतेनगंतव्यमिति । अस्तास्थितोवा । अथलग्नात्षष्ठसप्तमाष्टमस्थानानामन्यतमेस्थानेकश्चिद्ग्रहोभवति तदातस्यदर्शितलोकेतेनगंतव्यम् । अथलग्नात्षष्ठसप्तमाष्टमस्थानानांद्विस्थानेत्रीणिवासग्रहाणिभवंति । अथैकस्मिन्नपिद्व्यादयोग्रहा भवंति तदातेषांग्रहाणांयोबलवांस्तस्ययः प्रदर्शितोलोकस्तेनगंतव्यमिति । नन्वस्तस्थितोवेत्येकंस्थानमुक्तंतत्रसप्तमग्रहणंकृतं तत्षष्ठाष्टमस्थोपिस्वांगतिं नयतीति किंव्याख्यातम् । उच्यते । अस्तस्थितोवेति वाशब्दश्चशब्दार्थेज्ञेयः । नकेवलमस्तस्थितश्चकाराद्रिपुरंध्रगश्चेति केचिदस्तास्थितश्चेतिपठंति । तथा चस्वल्पजातकेउक्तम् । सुरपितृतिर्यङ्नारकान्गुरुरुडुपसितावसृग्रवीज्ञयमौ । रिपुरंध्रत्र्यंशकपानयंतिचास्तारिनिधनस्थाः । गुरुरथेति । अथशब्दः पादपूरणार्थे । यस्यजन्मनिगुरुर्बृहस्पतिर्लग्नाद्रिपुस्थानेषष्ठेभवति केंद्रेषुवा छिद्रेष्

मेवा सचस्वोच्चस्थः कर्कटेभवति तदैकोयोगः। अथवांत्येभवनेमीनराशावुदयतिविलग्नगतेतत्रचगुरुवर्ज्यशेषाग्रहा अन्येग्रहाबलेनवीर्येण प्रोज्झितावर्जिता भवंति तदाद्वितीयोयोगः । अस्मिन्योगद्वयेजातस्यमोक्षोभविष्यतीतिवक्तव्यम् । उदयतिभवनेंत्येसौम्यभागेचमोक्ष इत्यत्रचकारोवाशब्दस्यार्थे। यथा पुरुषस्यजन्मकालग्रहवशाद्गतिरुक्तातथामरणकाललग्नवशादपिगतिर्वक्तव्या । यस्मात्स्वल्पजातकेउक्तम् । षष्ठाष्टमकंटकगोगुरुश्चेद्भवतिमीनलग्नेवा।शेषैःखगैर्जन्मनिमरणेवामोक्षगतिमाहुरिति ॥ १५ ॥

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौनैर्याणिकाध्यायःपंचविंशतिःसमाप्तः २५॥

---

## अथनष्टजातकाध्यायप्रारंभः ॥

आधानजन्मापरिबोधकालेसंपृच्छतोजन्मवदेद्विलग्नात् ॥
पूर्वापरार्धेभवनस्यविंद्याद्भानावुदग्दक्षिणगेप्रसूतिम् ॥ १ ॥

अथनष्टजातकाध्यायोव्याख्यायते। तत्रादावेवप्रसूतिकालज्ञानमिंद्रवज्रयाह ॥ आधानेति । यस्याधानकालोज्ञायतेतस्याधानकालात् पूर्वमेवजन्मव्याख्यातं तत्कालमिंदुसहितइत्यादिनाजन्मकालश्चव्याख्यातएव । एवमाधानजन्मकालयोरपरिबोधेअज्ञानेसतिसंपृच्छतःप्रष्टुः विलग्नात्प्रश्नलग्नाज्जन्मवदेद्ब्रूयात् । येनलग्नेनप्रष्टापृच्छति तस्ययदिपूर्वार्द्धंप्रथमहोराभवति तदाप्रष्टुः भानावादित्येउदयगतेउत्तरायणस्थेजन्मवक्तव्यम् । मकरादिराशिषट्कस्थेजातइत्यर्थः। अथलग्नस्यापरार्धंद्वितीयाहोराभवति तदाभानौदक्षिणगतेदक्षिणायनस्थेजन्मवक्तव्यम् । कर्कटादिराशिषट्कस्थेजातइत्यर्थः । तथाच आधानजन्मनीयस्याविज्ञातेतस्यदेहिनः जन्मसंपृच्छतस्तस्यप्रश्नलग्नाद्विनिर्दिशेत्॥१॥

लग्नत्रिकोणेषुगुरुस्त्रिभागैर्विकल्प्यवर्षाणिवयोनुमानात् ॥
ग्रीष्मोर्कलग्नेकथितास्तुशेषैरन्यायनर्तावृतुरर्कचारात् ॥ २ ॥

अथवर्षर्तुज्ञानमुपजातिकयाह ॥ लग्नत्रिकोणेष्विति । त्रिभागैर्द्रेष्काणैर्लग्नत्रिकोणेषुप्रथमपंचमनवमस्थानेषुगुरुर्जीवोज्ञेयः । तद्यथा । प्रश्नलग्नस्य यदिप्रथमद्रेष्काणोभवति तदायएवलग्नराशिस्तत्रस्थेगुरौ जन्मवक्तव्यम् । अथलग्नस्यद्वितीयोद्रेष्काणस्तदालग्नाद्यःपंचमोराशिस्तत्रस्थेगुरौजन्मवक्तव्यम्। अथलग्नस्यतृतीयोद्रेष्काणस्तदालग्नाद्योनवमोराशिस्तत्रस्थेगुरौजन्मवक्तव्यम् । एवंकेषांचिन्मतम् । अथान्येषांमतं यथा । प्रश्नलग्नस्ययदाप्रथमोद्रेष्काणोदयोभवति तदालग्नराशितोयावत्संख्येराशौबृहस्पतिस्तिष्ठति तावत्सं-

ख्यानिप्रष्टुर्वर्षाणिवक्तव्यानि । अथलग्नेद्वितीयोद्रेष्काणस्तदालग्नात्पंचमराशितोयावत्संख्येराशौबृहस्पतिर्भवति तावत्संख्यानिप्रष्टुर्वर्षाणिवक्तव्यानि । यदालग्नस्यतृतीयोद्रेष्काणोभवति तदालग्नान्नवमराशितोयावत्संख्येराशौबृहस्पतिर्भवति तावत्संख्यानिप्रष्टुर्वर्षाणिवक्तव्यानि । एतद्व्याख्यानंनशोभनं पूर्वव्याख्यानमेवश्रेयः । यस्माद्यवनेश्वरः । द्रेष्काणलग्नक्रमतस्तु राशौगुरुर्विलग्नादित्रिकोणगोऽभूत् । समुद्गतेतद्भवनक्रमेणस्वाचारभादब्दगतिं प्रगण्यात् । यद्यप्यत्रसामान्येनोक्तंबृहस्पतेरवस्थानम् । तथाचद्वादशभागक्रमेणप्रतिराशौसंचार्यः । तद्यथा । यदिप्रश्नलग्नस्यप्रथमद्वादशभागोदयोभवति तदालग्नस्थेजीवेजातः द्वितीयद्वादशभागश्चेत्तदालग्नाद्वितीयेगुरौजातः।एवं तृतीयादिद्वादशभागोदयेतृतीयादिपुस्थानेषु ऊह्यम् । विकल्प्यवर्षाणिवयोनुमानादेवंबृहस्पतेरवस्थानंज्ञात्वातस्यएववयोनुमानात्तस्याकृतिंशरीरमवेक्ष्यवर्षाणिविकल्प्यवयःप्रमाणंबुद्ध्वाद्वादशसु द्वादशसुवर्षेपुविकल्पनाकार्या।किमस्मिन्नेवभगणपरिवर्तेज्ञातराशेः बृहस्पतेरवस्थानमभूदुतद्वितीयउततृतीयादिपु । एवंतस्याकृतिमवेक्ष्यवयोनुमानंवक्तव्यम् । यत्रद्वादशसुवर्षेपुभ्रांतिर्भवति तत्रपुरुषलक्षणोक्तेनदशाविभागेनद्वादशवार्षिकींदशांक्षेत्रेपुपरिकल्प्ययत्तत्क्षेत्रांगसंस्पर्शाद्वर्षज्ञानं।तथाचपुरुषलक्षणेपठ्यते ॥पादौसगुल्फौप्रथमंप्रदिष्टंजंघेद्वितीयंतुसजानुचक्रे । मेढ्रोरुमुष्काश्चततस्तृतीयंनाभिकटिंचेतिचतुर्थमाहुः॥उदरंकथयंतिपंचमंहृदयंषष्ठमथस्तनान्वितम्। अथसप्तममंशजत्रुणीकथयंत्यष्टममोष्ठकंधरे । नवमंनयनेचसभ्रुणीसललाटंदशमंशिरस्तथा । अशुभेष्वशुभंदशाफलं चरणाद्येषुशुभेषुशोभनमिति । किंत्वत्रविंशत्यधिकंवर्षशतंयस्यजन्मनोऽतीतम् । तस्यनष्टजातकवर्षज्ञानोपायएवनास्ति । एवंवर्षेषुज्ञातेपुऋतुज्ञानमाह । ग्रीष्मोर्केलग्नइति । येनलग्नेनप्रष्टापृच्छति । तत्रचेदर्कःसूर्यः स्थितस्तद्द्रेष्काणोवालग्ने तदाग्रीष्मेजातइतिवक्तव्यम् । कथितास्तुशेषैरिति । शेषैरन्यैश्चंद्रादिभिर्ग्रहैर्लग्नस्थैः ऋतुः पूर्वमेवकथितउक्तः द्रेष्काणैःशिशिरादयइत्यादिनाग्रंथेनोक्तः । तत्रयदाशनैश्चरोलग्नेभवति तद्द्रेष्काणोवा तदाशिशिरेजातइतिवक्तव्यम् । एवंशुक्रेलग्नगतेवा तद्द्रेष्काणेतदावसंतेजातः । एवंभौमेग्रीष्मे । एवमेवरवावपि । चंद्रेलग्नगतेतद्द्रेष्काणेवावर्षासु । बुधेशरदि जीवेहेमंतइति । यदाबहवोलग्नगताः भवंतितदातेषांमध्येयोबलवान्तदुक्तर्तौजातइतिवक्तव्यम् । अथनकश्चिद्यदिलग्नगतोभवति तदायस्यसंबंधीद्रेष्काणोदयोभवति तदा तदुक्तर्तौजातइत्येवंवक्तव्यम्।अन्यायनर्तावृतुरर्कचारादिति । अन्यस्मिन्नयनेवान्यस्मिन्नृतावर्कचाराद्दतुः अन्यस्मिन्नयनेतदयनासंभवश्चेद्दतुरन्योभवति तदर्तुरर्कचारवशेनवक्तव्यम् । एतदुक्तंभवतिं । सौरेणमानेनऋतुर्वक्तव्यः । ननु

चांद्रेण। यथाशिशिरेज्ञातेमकरकुंभयोरन्यतमेराशौसूर्यस्यावस्थानंज्ञेयम्। एवंशेषराशिष्वप्यूह्यम् । अनेनलौकिकश्चांद्रमासोनिराकृतोभवतीति ॥ २ ॥

चंद्रज्ञजीवाःपरिवर्तनीयाः शुक्रारमंदैरयनेविलोमे ॥
द्रेष्काणभागेप्रथमेतुपूर्वोमासोनुपाताच्चतिथिर्विकल्प्यः ॥ ३ ॥

अथायनेविलोमेग्रहपरिज्ञानादृतुपरिज्ञानंमासपरिज्ञानंचेंद्रवज्रयाह ॥ चंद्रज्ञेति । अयनेविलोमेसति । चंद्रज्ञजीवाः शुक्रारमंदैः परिवर्तनीयाः शशिबुधगुरवः सितभौमशनैश्चरैः अयनव्यत्ययेप्राप्तेसतिपरिवर्तनीयाः व्यत्ययेनव्यवस्थाप्याः । एतदुक्तंभवति । यद्युत्तरायणेप्रावृट्कालेज्ञातेतदावसंतेजातइतिवक्तव्यम् । चंद्रशुक्रेणात्रपरिवर्तितः।अथोत्तरायणेशरदिप्राप्तायांग्रीष्मेजातः। दक्षिणायनेग्रीष्मेज्ञातेशरदिजातः । अथबुधो रविभौमयोरपवर्तितौ रविभौमौबुधेनचउत्तरायणेहेमंतेज्ञातेशिशिरेजातः । दक्षिणायनेशिशिरेप्राप्तेहेमंतजात इतिवक्तव्यम् । अत्रजीवमंदौपरस्परमपवर्तितौ । एवमृतौज्ञातेमासज्ञानमाह ॥ द्रेष्काणभागइति । प्रश्नलग्नेयोद्रेष्काणोवर्ततेतस्यचद्रेष्काणस्ययदिप्रथमभागोवर्ततेतदाज्ञातर्तौप्रथमेमासिजातइतिवक्तव्यम् । अथलग्नेद्रेष्काणस्यद्वितीयोभागोवर्तते तदाज्ञातर्तौद्वितीयेमासिजातः । अत्रापिअर्कावस्थानतएवमासज्ञानम् । अथएवंमासंज्ञात्वातिथिज्ञानार्थमाह। अनुपाताच्चतिथिर्विकल्प्यः । अनुपातात्रैराशिकात्तिथिर्विकल्प्योविकल्पनीयः । लग्नस्यषट्लिप्ताशतानिद्रेष्काणः । द्रेष्काणेनऋतुज्ञानंतदर्धलिप्ताशतत्रयम् । लिप्ताशतत्रयेणमासज्ञानम् । अत्रानुपातात्तिथिर्लिप्तादशकेनैकैकोज्ञेयः । एषतिथिरादित्यभागः । एवमादित्यस्यराशयोभागाज्ञेयाः । मासाराशयस्तिथयोभागाः । यस्मिंश्चतिथौज्ञातवर्षेयथाप्रदर्शितादित्योभवतितस्मिन्तिथौतस्यजन्मइतिवक्तव्यम् ॥ ३॥

अत्रापिहोरापटवोद्विजेंद्राः सूर्यांशतुल्यांतिथिमुद्दिशंति ॥
रात्रिद्युसंज्ञेषुविलोमजन्मभागैश्चवेलाःक्रमशोविकल्प्याः ॥ ४ ॥

अथचंद्रमानतिथिज्ञानोपायमिंद्रवज्रयाह ॥ अत्रापीति । अत्रास्मिंस्तिथिज्ञानेद्विजेंद्रामुनयोहोराशास्त्रज्ञाः सूर्यांशतुल्यामंशस्थानेस्फुटार्कभागसमां तिथिमुद्दिशंतिकथयंति। प्रश्नकालेतात्कालिकेनादित्येनयावंतोभागाभुक्तास्तावंतः शुक्लप्रतिपत्प्रभृतिज्ञातमासस्यतिथयोव्यतीताः । अत्रचांद्रमानेमकरमासेजातेमाघमासोज्ञेयः । एवमन्येष्वपिमासकल्पनाकार्या । तथाचप्रणित्थः। पृच्छाकालेरविणायावंतोंशाःस्फुटेनसंभुक्ताः राशेस्तास्तिथयःस्युः शुक्लादावर्कमासस्य । एवंदिनेज्ञातेकिमयंरात्रौजातोदिवावेति । तदर्थमाह । रात्रि-

द्युसंज्ञेष्विति । रात्रिद्युसंज्ञाःपूर्वंव्याख्याताः गोजाश्विकर्किमिथुनाइत्यादिना । तत्रप्रश्नकालेयदिरात्रिसंज्ञोलग्नोभवति तदातस्यविलोमतादिवाजन्मवक्तव्यम् । अथद्युसंज्ञोलग्नोभवतितदारात्रौजन्मवक्तव्यम् । एवंदिनरात्रिविभागे ज्ञातेवेलाज्ञानमाह । भागैश्चवेलाःक्रमशोविकल्प्याः । यस्मिन्दिनेपुरुषस्यजन्मज्ञानंतस्मिन्दिने आदित्योविज्ञातः । ततस्तस्यपुरुषस्ययदिदिवाजन्मतदातस्मादादित्याद्दिनप्रमाणंकार्यम् । अथरात्रौजन्मतदारात्रिप्रमाणम् । तत्रप्रश्नलग्नस्यतस्मिन्कालेयावंतश्चषकाभुक्तास्तैरनुपातःकार्यः ! यदिपुरुषस्यदिवाजन्मतदादिनप्रमाणेन। यदारात्रौतदारात्रिप्रमाणेन । तात्काललग्नभुक्तचषकाणांगणनांकृत्वातस्यैवलग्नस्यस्वदेशराश्युदयप्रमाणेनभागमपहृत्यावाप्तांवेलां तावताकालेनगतेनदिनस्यरात्रेर्वाजन्मवक्तव्यम् । एवंलग्नभागैः क्रमशःपरिपाट्यावेला समयः विकल्प्या विकल्पनीया ॥ ४ ॥

मेषादिराशीनांचषकाः
मे२००मी.
वृ.२४०कुं.
मि.२८०म.
क.३२०ध.
सिं.३६०वृ.
क.४००तु.

**केचिच्छशांकाध्युषितान्नवांशाच्छुक्लांतसंज्ञंकथयंतिमासम्॥**
**लग्नत्रिकोणोत्तमवीर्ययुक्तंसंप्रोच्यतेंगालभनादिभिर्वा ॥ ५ ॥**

अर्थांतरेणमासज्ञानामिंद्रवज्रयाह ॥ केचिदिति । केचिदाचार्याः । शशांकाध्युषिताच्चंद्रयुक्तान्नवांशाच्छुक्लांतसंज्ञंमासंकथयंति । प्रश्नकालेयस्मिन्नवांशकेनवमेंशेचंद्रमाभवति तमपिनवांशकंत्रिधापरिकल्प्य तस्मिन्नवांशकेनवमेंशे चंद्रमाव्यवस्थितइति चंद्रनवांशकगतंनक्षत्रमन्वेष्यम् । तन्नक्षत्रशुक्लांतसंज्ञकेमसितस्यजन्मवक्तव्यम् । अत्रयस्यनक्षत्रस्यशुक्लांतसंज्ञोमासोनास्तितस्यबृहस्पतिचारोक्तविधिनाशुक्लांतसंज्ञोमासः परिकल्प्यः। तत्रोक्तम् । नक्षत्रेणसहोदयमस्तंवायेनयातिसुरमंत्री । तत्संज्ञंवक्तव्यंवर्षंमासक्रमेणैव । वर्षाणिकार्तिकादीन्याग्नेयाद्भद्वयानियोज्यानि । क्रमशस्त्रिभंतुपंचममुपांत्यमंत्यंचयद्वर्षमिति । तत्रचंद्रमायदिवृषनवांशकेतन्नवांशकसप्तकस्यावार्ग्भवति तदाकार्तिकेमासिजातइतिवक्तव्यम् । अथवृषनवांशकेतन्नवांशसप्तकस्योर्ध्वंभवति। मिथुननवांशकेतन्नवांशकषट्कस्यावार्ग्यदाचंद्रमाभवति तदामार्गशीर्षेमासिजातइतिवक्तव्यम् । अथमिथुननवांशकेतन्नवांशकषट्कस्योर्ध्वंकर्कटनवांशकेतन्नवांशकपंचकस्यावार्ग्यदाचंद्रमाभवति तदापौषेमासिजातइतिवक्तव्यम् । अथकर्कटेतत्तन्नवांशकपंचकस्योर्ध्वंसिंहनवांशकेतन्नवांशचतुष्टयस्यावार्ग्यदाचंद्रमाभवति तदा माघेमासिजन्मइतिवक्तव्यम् । अथसिंहनवांशकेतन्नवांशकचतुष्टयस्योर्ध्वं कन्यानवांशकेतन्नवांशकसप्तकस्यावार्ग्यदाचंद्रमाभवति तदाफाल्गुनेमासि

जातइतिवक्तव्यम् । अथकन्यानवांशकसप्तकस्योर्ध्वंतुलनवांशकेतन्नवांशक-षट्कस्यार्वाग्यदाचंद्रमाभवति तदाचैत्रेमासिजातइतिवक्तव्यम् । अथतु-लानवांशकेतन्नवांशकषट्कस्योर्ध्वंवृश्चिकनवांशकेतन्नवांशकपंचकस्यार्वाग्यदाचं-द्रमाभवतितदावैशाखेमासिजातइतिवक्तव्यम् । अथवृश्चिकेतन्नवांशकपंचक-स्योर्ध्वंधन्विनवांशकेतन्नवांशकचतुष्टयस्यार्वाग्यदाचंद्रमाभवति तदाज्येष्ठेमा-सिजातइत्यवगंतव्यम्। अथधन्विनवांशकेतन्नवांशकचतुष्टयस्योर्ध्वंमकरनवांश-कत्रयस्यार्वाग्यदाचंद्रमाभवति तदाआषाढेमासिजातइतिवक्तव्यम् । अथम-करनवांशकेतन्नवांशकत्रयस्योर्ध्वं कुंभनवांशकेतन्नवांशकद्वयस्यार्वाग्यदाचंद्रमा भवतितदाश्रावणेमासिजातइतिवक्तव्यम्। अथकुंभनवांशकेतन्नवांशकद्वयस्यो-र्ध्वंमीननवांशेतन्नवांशपंचकस्यार्वाग्यदाचंद्रमाभवति तदाभाद्रपदेमासिजात इतिवक्तव्यम्। अथमीननवांशकेतन्नवांशकपंचकस्योर्ध्वंमेषनवांशेतन्नवांशाष्टक-स्यार्वाग्यदाचंद्रमाभवति।तदाऽश्वयुजिमासिजातइतिवक्तव्यम्। अथमेषनवांश-केतन्नवांशाष्टकस्योर्ध्वंयदिचंद्रमाभवतितदाकार्तिकेमासिजातइत्यवगंतव्यम् । यस्मिन्कृत्तिकारोहिणीचसकार्तिकः । मृगशिरार्द्राचमार्गशीर्षः । पुनर्वसुपुष्यश्च पौषः । आश्लेषामघाचमाघः । पूर्वाफाल्गुन्युत्तराफाल्गुनीहस्तश्चफाल्गुनः । चित्रास्वातीचचैत्रः । विशाखानुराधाचवैशाखः । ज्येष्ठामूलेज्येष्ठः । पूर्वाषा-ढोत्तराषाढश्चाषाढः । श्रवणधनिष्ठाचश्रावणः । शतभिषक्पूर्वाभाद्रपदोत्तरा-भाद्रपदाश्चभाद्रपदः । रेवत्यश्विनीभरण्यश्चाश्वयुजः । यस्मादुक्तम् । त्रिभंतुपं-चममुपांत्यमंत्यंचयद्वर्षमिति । एवंशुक्लांतस्यमासस्यनिश्चयः । शुक्लांतग्रहणे-नैतत्प्रतिपादयति । यत्तथा । शुक्लपक्षांतेयेननक्षत्रेणयुक्तस्तदुपलक्षितो मासोवक्तव्यः । यथा । कार्तिकशुक्लपक्षांतेकृत्तिकारोहिणीभ्यामन्यतमेनयश्चंद्र-माभवति तेनकार्तिकोमासउच्यते । एवमन्येषामपियुज्यते । तदेतद्भवते । एतदुक्तंभवति । नशुक्लांतोमासइत्यतोमासःकृष्णांतएव । तथाचयवने-श्वरः । मासेतुशुक्लप्रतिपत्प्रवृत्तेपूर्वेशशीमध्यबलोदशाहे । तथाच । यद्रा-शिसंज्ञेशीतांशुः प्रश्नकालेनवांशके । स्थितस्तद्राशिगःपूर्णोयस्मिन्भवति चंद्रमाः । जन्ममासः सनिर्दिष्टः पुरुषस्यतुपृच्छतः । कृष्णपक्षांतिकोमासो ज्ञेयोत्रतुविपश्चिता । लग्नत्रिकोणेत्यादि । लग्नस्यप्रश्नलग्नस्यत्रिकोणयोश्चन वमपंचमयोर्मध्याद्यस्तत्कालमुत्तमेनप्रधानवीर्येणबलेनयुक्तस्तद्राशिः प्रोच्य-ते कथ्यते । तस्मिन्राशौगतेचंद्रमसिजातइतिवक्तव्यम् । तथाचयवनेश्वरः । होरादिवीर्याधिकलग्नभाजिस्थानंत्रिकोणेशशिनोवधार्यम् । अंगालभनादिभि-र्वा । कालांगानीत्यनेनप्रदर्शितोयः कालपुरुषस्यांगविभागस्तदालभ-नाद्वानेनविधिनास्प्रष्टुःस्पृशतः यदेवकालपुरुषस्यांगंस्पृशतितत्स्थेचंद्रमसिजा-तइतिवक्तव्यम् । आदिग्रहणात्प्राण्युक्तसत्वदर्शनश्रवणंगृह्यते ॥ ५ ॥

यावान्गतःशीतकरोविलग्नाचंद्राद्वदेत्तावतिजन्मराशिः ॥
मीनोदयेमीनयुगंप्रदिष्टंभक्ष्याहृताकाररुतैश्चचिंत्यम् ॥ ६ ॥

अथप्रकारांतरेणजन्मेशराशिज्ञानमिंद्रवज्रयाह ॥ यावानिति । विलग्नात्पृच्छालग्नाच्छीतकरश्चंद्रोयावान्गतोयावतिराशौव्यवस्थितस्तस्माद्यस्तावतिराशिः । तत्रस्थेचंद्रमसिजातइतिवक्तव्यम् । मीनोदयेयदिमीनलग्नगतोभवति । तदामीनयुगमेवप्रदिष्टमुक्तं । मीनस्थचंद्रमाइतिवक्तव्यम् ।ननुदर्शितविधिनाराशिरनेकप्रकारोयत्रप्राप्तोभिन्नरूपस्तत्रकोवक्तव्यइत्याशंक्याह। भक्ष्याहृताकाररुतैरिति । यस्यराशेःसंबंधिभक्ष्यद्रव्यंतस्मिन्कालेकृत्रिममानीयते तदाकारश्चकार्श्चिद्दृश्यते । यथामार्जारादिदर्शनेसिंहोमहिषादिदर्शनेवृषइत्यादि । अथवाराश्युक्तरूपंपुरुषस्यदृष्ट्याथवारुतेनयस्यराशिसदृशप्राणिनोरुतंशब्दः क्रियतेतत्रस्थेचंद्रमसिजातइतिवक्तव्यम् ॥ ६ ॥

होरानवांशप्रतिमंविलग्नंलग्नाद्रविर्यावतिचदृकाणे ॥
तस्माद्वदेत्तावतिवाविलग्नंप्रष्टुःप्रसूतावितिशास्त्रमाह ॥ ७ ॥

एवंजन्मराशौज्ञातेलग्नज्ञानमिंद्रवज्रयाह ॥ होरेति । होरायांप्रश्नलग्नेयस्यराशेर्नवांशकस्तत्कालंवर्ततेतत्प्रातिमंतमेवांशकराशितस्यजन्मलग्नंवक्तव्यम् । अथवालग्नाल्लग्नद्रेष्काणादारभ्यरविः सूर्योयावति यावत्संख्येद्रेष्काणेव्यवस्थितस्तस्माल्लग्नादारभ्यतावतिराशौलग्नगतेतस्यजन्मवक्तव्यम् । अत्रचद्वादशभ्योधिकेद्रेष्काणेद्वादशकमपास्यसंख्यानिर्देशः। चतुर्विंशतेरधिकेचतुर्विंशतिमपास्य शेषंवदेत् । एवंशास्त्रमाह शास्त्रंकथयति । नस्वमनीषिकयोक्तमिति । शास्त्रग्रहणेनैतत्प्रतिपाद्यते । उक्तंच । पृच्छालग्ननवांशस्ययोराशिः संज्ञयासमः । तस्मिँल्लग्नगतेराशौवक्तव्यंजन्मपृच्छतः । यावत्संख्योगतोलग्नाद्द्रेष्काणोदिनकृत्ततः । तावत्संख्येलग्नराशौप्रष्टुर्जन्मविनिर्दिशेत् ॥ ७ ॥

जन्मादिशेल्लग्नगेवीर्यगेवाछायांगुलघ्नोर्कहतेवशिष्टम् ॥
आसीनसुप्तोत्थिततिष्ठताभंजायासुखाज्ञोदयगंप्रदिष्टम् ॥ ८ ॥

अथप्रकारांतरेणलग्नानयनमिंद्रवज्रयाह । जन्मादिशेदिति । लग्नगेग्रहेजन्मादिशेत् । प्रश्नलग्नेयोग्रहोव्यवस्थितस्तंतात्कालिकंकृत्वालिप्तापिंडीकार्यम् । अथबहवोलग्नगताभवंति तदातेषांयोबलवान् तंतात्कालिकंकृत्वालिप्तापिंडीकार्यम् । ततःसलिलसमीकृतायामवनौद्वादशांगुलेनशंकुनातात्कालिकानिछायांगुलानिगृहीत्वा तैरंगुलैरेकैकंग्रहंयद्दर्शितकालेलिप्तापिंडीकृतंगुणयेत् ।

अथवासर्वग्रहेभ्योयोबलवान्ग्रहस्तंतात्कालिकंकृत्वा लिप्तापिंडंकृत्वाछायांगुलाहतंचार्कशुद्धंकारयेत् द्वादशभिर्विभजेत्तत्रयावत्संख्यमवशिष्टंतावत्संख्योमेषादेरारभ्ययोराशिर्भवति । तस्मिन्राशौलग्नगतेतस्यजन्मवक्तव्यम् । अथप्रकारांतरेणाह । आसीनेत्यादि । आसीनउपविष्टोयदाप्रष्टा पृच्छति । तदालग्नाद्यज्जायास्थानंसप्तमराशिस्तस्मिँल्लग्नगतेतस्यजन्मवक्तव्यम् । अथसुप्तः । सुप्तोऽत्रशयनपतितोविहितः । लब्धनिद्रस्यप्रश्नाभावात् । तत्रपतितोयदापृच्छति । तदालग्नाद्यत्सुखस्थानंचतुर्थराशिस्तस्मिँल्लग्नगतेतस्यजन्मवक्तव्यम् । अथोत्थितःपृच्छति । तदातस्माल्लग्नाद्यदाज्ञास्थानंदशमोराशिस्तस्मिन्लग्नगतेतस्यजन्मवक्तव्यम् । अथशयनादासनाच्चोत्थितः उत्तिष्ठतः पृच्छति । तदोदयलग्नराशौतस्मिन्नेवजन्मवक्तव्यम् । उक्तंच । उत्तिष्ठतोविलग्नात्प्रष्टुः सुप्तस्यबंधुलग्नाच्च । उपविष्टस्यास्तमयेत्रजतोमेषूरणस्थानादिति ॥ ८ ॥

गोसिंहौजितुमाष्टमौक्रियतुलेकन्यामृगौचक्रमात्संवर्ग्योदशकाष्टसप्तविषयैःशेषाःस्वसंख्यागुणाः ॥ जीवारास्फुजिदैंदवाः प्रथमवच्छेषाग्रहाः सौम्यवद्राशीनांनियतोविधिर्ग्रहयुतैः कार्याचतद्वर्गणा ॥ ९ ॥

अथप्रकारांतरेणसर्वमेवनष्टजातकंवक्ति । ततः प्रश्नकालेतात्कालिकंलग्नंकृत्वालिप्तापिंडीकार्यम् । ततस्तस्यलिप्तापिंडीकृतस्यगुणकारविज्ञानार्थंशार्दूलविक्रीडितेनाह ॥ गोसिंहाविति । गोसिंहादयोराशयोयथाक्रमंदशादिभिर्गुणकारैः संवर्ग्यागुणनीयाः । तद्यथा । गोसिंहौवृषसिंहौदशभि १० र्गुणयेत् । वृषलग्नंलिप्तापिंडीकृतंदशभिर्गुणयेत् । एवंसिंहंदशभिरेव । जितुमाष्टमौमिथुनवृश्चिकौलग्नगतावष्टभि ८ र्गुणयेत् । क्रियतुलेमेषतुलेएतौ सप्तभि ७ र्गुणयेत् । कन्यामृगौकन्यामकरौएतौलग्नगतौविषयैः पंचभि ५ र्गुणयेत् । एवमेतेयथाक्रमंसंवर्ग्यागुणनीयाः । शेषाअनुक्ताराशयः स्वसंख्यागुणा आत्मीयसंख्ययागुणनीयाः । तत्रगणनयाकर्कटंचतुर्भिर्गुणयेत् । एवंधन्वीनवभिः ९ कुंभमेकादशभिः ११ एवंमीनोद्वादशभिः १२ एवंतावल्लग्नंस्वगुणकारेणावश्यमेवगुणयेत् । दशकाष्टसप्तविषयैः । ततस्तत्रयदिग्रहोभवति तदाग्रहगुणकारेणावश्यमेवगुणयेत् । तत्रग्रहगुणकारविधिः । जीवारास्फुजिदैंदवाः । प्रथमवद्दशकाष्टसप्तविषयैरिति । जीवेगुरौलग्नग-

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | १० | ८ | ४ | १० | ५ | ७ | ८ | ९ | ५ | ११ | १२ |

तेतमेवलग्नंस्वगुणकारैराहतंदशभिर्गुणयेत् । आरेभौमेलग्नगतेअष्टभिः आस्फुजिच्छुक्रः तस्मिँल्लग्नगतेसप्तभिः ऐंदवेबुधेपंचभिः शेषारविशशिसौरास्तेचसौम्यवत्।बुधवत्।पंचभिर्गुणनीयाइत्यर्थः।

| र. | चं. | मं. | बु. | गु. | शु. | श. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| ५ | ५ | ८ | ५ | १० | ७ | ५ | ० | ० |

एवंतात्कालिकंलग्नमवश्यंराशिगुणकारेणगुणयेत्। ततःसग्रहोक्तगुणकारैरपितत्रचयदाग्रहोभवति । तदाग्रहगुणकारेण गुणयेत् । यदाबहवोग्रहाभवंतितदासर्वेषांगुणकारैर्गुणयेत् । एवंचतद्गुणितमेकांतेस्थापयेत् ॥ ९ ॥

**सप्ताहतंत्रिघनभाजितशेषमृक्षंदत्त्वाथवानवविशोध्यनवाथवास्मात् ॥ एवंकलत्रसहजात्मजशत्रुभेभ्यः प्रष्टुर्वदेदुदयराशिवशेनतेषाम् ॥ १० ॥**

अथनक्षत्रानयनंवसंततिलकेनाह।।सप्ताहतमिति।सप्ताहतंसप्तभिर्गुणयेत्।दत्त्वाथवेति।ततस्तत्रनवदेयाः। शोध्यावा।नकिंचिद्वा।कथमित्युच्यते । यदिसचरराशिर्लग्नगतोभवतितदानवदेयाः।स्थिरेनदेयानापिशोध्याः द्विस्वभावेविलग्नेनव शोध्याः एवंकेचिद्व्याचक्षते । वयंपुनर्ब्रूमः । यदिप्रश्नलग्नेप्रथमोद्रेष्काणोभवति। तदानवदेयाः । द्वितीयेनदेयानापिशोध्याः । तृतीयेनवशोध्याः । एवंकृत्वा तस्यराशेस्त्रिघनेनसप्तविंशत्याभागमपहृत्यावाप्तंत्याज्यम्। तत्रयावत्संख्योंकोवशेषोभवति।तावत्संख्यमश्विन्यादितोयन्नक्षत्रंतन्नक्षत्रंतस्यप्रष्टुर्वक्तव्यम्। केचिद्वदंति । यथास्थितस्यराशेः सप्तविंशत्याभागमपहृत्यावशेषांकनवकदानेनविशोधनेनवायथास्थितेनांकेनसंवादउत्पद्यते।तथानक्षत्रंवक्तव्यम्। एवमित्यादिकलत्रसहजात्मजशत्रुभेभ्यइति । भार्याभर्तृपुत्ररिपुनष्टजातकंयदापृच्छतितदा तद्भेभ्यस्तद्भावेभ्यः । एवंप्रष्टुःपृच्छकस्यवदेद्ब्रूयात् । तमेवोदयराशिंपरिकल्पयेदित्यर्थः । एतदुक्तंभवति।यदिपुरुषःस्वपत्न्यानक्षत्रंपृच्छति।तदातात्कालिकेलग्ने राशिषट्कंदेयम्।अथभ्रातुःपृच्छति।तदाराशिद्वयंदेयमथपुत्रस्यपृच्छतितदाराशिचतुष्कंदेयमथशत्रोःपृच्छतितदाराशिपंचकंदेयम्। एवंकृत्वायद्भवतितदेवोदयराशिंप्रकल्प्य तद्गुणकारेणगुणयेत्।तत्स्थग्रहगुणकारेणचततस्तत्रप्राग्वन्नवकदानविशोधनेकृत्वासप्तविंशत्याभागमपहृत्यावशेषांकसमंयस्यप्रष्टापृच्छतितस्यनक्षत्रंवक्तव्यम् । एतदप्युपलक्षणार्थमेवत्रिराशिसहितात्तात्कालिकाल्लग्नान्मित्रस्यवक्तव्यमेतन्नक्षत्रानयनमप्युपलक्षणमेवंसकलमपिनष्टजातकंवक्तव्यम् ॥ १० ॥

**वर्षर्तुमासतिथयोद्युनिशंह्युडूनिवेलोदयर्क्षनवभागविकल्पनाः स्युः ॥ भूयोदशादिगुणिताःस्वविकल्पभक्तावर्षादयोनवकदानविशोधनाभ्याम्॥ ११ ॥**

अथवर्षाद्यानयनंवसंततिलकेनाह ॥ वर्षर्तुमासेति । वर्षादीनिसर्वाणि स्वविकल्पेनभागेहृतेयथापाठक्रमेणानयितव्यानि । तद्यथा । तात्कालिकं लग्नंक्षिप्तापिंडीकृतंराशिगुणकारहतं ग्रहसंयुक्तंचेद्ग्रहगुणकाराहतमपियदेकांते स्थापितंतत्पुनरपिदशादिगुणंकार्यम् । एतदुक्तंभवति । सराशिःस्थानचतुष्टयेधार्यः । एकत्रदशगुणोऽन्यत्रद्वितीयेऽष्टगुणोन्यत्रतृतीयेसप्तगुणःचतुर्थेपंचगुणः कार्यः। यतउक्तम् । भूयोदशादिगुणिताभूयः पुनरपिदशकाष्टसप्तविषयैर्गुणनीयाः । ततस्तस्मिन्राशिचतुष्टयेप्राग्वन्नवकदानविशोधनेकृत्वास्वविकल्पैर्भागमपहृत्यावाप्तंवर्षादयोज्ञेयाः ॥ ११ ॥

विज्ञेयादशकेष्वब्दाऋतुमासास्तथैवच ॥
अष्टकेष्वपिमासार्द्धास्तिथयश्चतथास्मृताः ॥ १२ ॥

अथनज्ञायते कस्माद्राशेःकस्यानयनंकार्यंतदनुष्टुप्त्रयेणाह ॥ विज्ञेयादशकेष्वब्दाइति । अत्रबहुवचनंबहुधोपयोगित्वात्कृतम् । यदुक्तम् । स्वविकल्पभक्ताद्वर्षादयस्तद्व्याख्यायते । एतेचत्वारोराशयः स्थापितास्तेषांनवकदानविशोधनंकृत्वाकर्मयोग्याः सर्वेभवंति । ततोदशगुणस्यपृथक्स्थस्यपरमायुषाविंशत्यधिकेनवर्षशतेनभागमपहृत्ययोंकोवाशिष्यतेतदंकसमंतस्यवर्षसंख्यानं वर्तते । तस्यैवषड्भिर्भागमपहृत्यऋतुसंख्ययातत्रयोंकोवशिष्यते । तदंकसमेशिशिरादारभ्यतौजातइतिवक्तव्यम् । तस्यैवतुमाससंख्ययाद्वाभ्यांभागमपहृत्ययद्येकोवशिष्यते तदाज्ञाततौप्रथमेमासिजातइतिवक्तव्यम् । अथ शून्यमवशिष्यते । तदाद्वितीयेमासिजातः । एवंकृत्वादशगुणःकर्मयोग्योराशिरपास्यः । यस्यविंशत्यधिकाद्वर्षशतादप्यधिकंजन्मनोतीतम् तस्य नष्टजातकज्ञानोपायएवनास्ति । अष्टकेष्वित्यादि । योसावष्टहतोराशिस्तस्य पृथक्स्थस्यकर्मयोग्यस्यपक्षसंख्ययाद्वाभ्यांभागमपहृत्ययद्येकोवशिष्यते तदाशुक्लपक्षेजातइतिवक्तव्यम् । नकिंचिदवशिष्यते तदाकृष्णपक्षेतस्यैवतिथिसंख्ययापंचदशभिर्भागमपहृत्य योंकोवशिष्यते तदंकसमानेतिथौजात इतिवक्तव्यम् । एवंकृत्वाष्टगुणःकर्मयोग्योराशिरपास्यः ॥ १२ ॥

दिवारात्रिप्रसूतिंचनक्षत्रानयनंतथा ॥
सप्तकेष्वपिवर्गेषुनित्यमेवोपलक्षयेत् ॥ १३ ॥

दिवेत्यादि।योसौसप्तहतोराशिस्तत्रप्राग्वदेवनवकदानविशोधनेकृत्वातत्कर्मयोग्यंराशिंस्थापयेत् । तस्यदिवारात्रिसंख्ययाद्वाभ्यांभागमपहृत्ययद्येकोवाशिष्यतेतदादिवसेजातोऽथनकिंचिदवशिष्यते तदारात्रौजातइतिवक्तव्यम् ।

योसौसप्तहतोराशिस्तस्यनक्षत्रसंख्यया सप्तविंशत्याभागमपहृत्ययोंकोवशिष्यतेतदंकसंख्येननक्षत्रेऽश्विन्यादितआरभ्यजातनक्षत्रमितिवक्तव्यम् । अस्यकर्मणः पुनरभिधानंनक्षत्रानयनस्यबाहुल्योपयोगित्वात् ॥ १३ ॥

वेलामथविलग्नंचहोरामंशकमेवच ॥
पंचकेषुविजानीयान्नष्टजातकसिद्धये ॥ १४ ॥

वेलेत्यादि । यस्मिन्दिनेपुरुषस्यजन्मज्ञानंतद्दिनप्रमाणंघटिकादिकंकर्तव्यम् । रात्रौचेत्तदारात्रिप्रमाणम् । ततः पंचगुणस्यराशेस्तेनदिनप्रमाणेनरात्रिप्रमाणेनभागमपहृत्ययोंकोवशिष्यते तस्मिन्कालेदिनगतेरात्रिगतेवातस्य जन्मवक्तव्यम् । अथविलग्नमित्यादि । अथशब्दः पादपूरणार्थम् । कालेज्ञातेराश्यादिलग्नंकर्तव्यम् । ततस्तस्यहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशभागाः कर्तव्याः तात्कालिकाग्रहाश्चकर्तव्याः । ततोयथाभिहितेनविधिनादशांतर्दशाष्टकवर्गादेरभिहितस्यफलस्यानिर्देशः कार्यः । एवं नष्टजातकंसाधयेत् ॥ १४ ॥

संस्कारनाममात्राद्द्विगुणाच्छायांगुलैःसमायुक्ता ॥
शेषंत्रिनवकभक्तान्नक्षत्रंतद्धनिष्ठादि ॥ १५ ॥

अथप्रकारांतरेणनक्षत्रानयनमार्ययाह ॥ संस्कारनामेति । संस्कारेणनाम संस्कारनामतस्यमात्राः संस्कारेणागतस्यनाम्नोमात्राः संस्कारनाममात्राः । संस्कारग्रहणेनैतत्प्रतिपादितंभवति । संस्कारेणयत्पुरुषस्यनामकृतंतस्यमात्रा ग्राह्याः । नान्यस्यकस्यचित्कुनामादेः । मात्राश्चेहगृह्यंते हल्अर्द्धमात्रिकः । अचमात्रिकः । इत्यनयास्थित्या ताःसंस्कारनाममात्राः संगृह्यद्विगुणी कार्याः । ततस्तात्कालिकानिशंकुच्छायांगुलानिगृहीत्वाताद्द्विगुणमात्रास्तैरंगुलैः संयुक्ताः कार्याः । एवंकृतेयद्भवतितस्यत्रिनवकेनसप्तविंशत्याभागमपहृत्ययः शेषोभवतितदंकसमंतस्य धनिष्ठादितआरभ्यनक्षत्रंवक्तव्यम् ॥ १५ ॥

द्वित्रिचतुर्दशदशतिथिसप्तत्रिगुणानवाष्टचेंद्राद्याः ॥
पंचदशघ्नास्तद्दिङ्मुखान्विताभधनिष्ठादि ॥ १६ ॥

अथनक्षत्रानयनंप्रकारांतरेणार्ययाह ॥ द्वित्रिचतुर्दशेति । पूर्वाभिमुखोयदा प्रष्टापृच्छति तदाद्वयोरंकाः स्थाप्याः । अथाग्नेयाभिमुखस्तदात्रयाणाम् । अथदक्षिणाभिमुखस्तदाचतुर्दशानाम् । अथनैर्ऋत्यभिमुखस्तदादशानाम् । अथपश्चिमाभिमुखस्तदातिथिसंख्यानांपंचदशानाम् । अथवायव्याभिमुखस्त-

दासत्तत्रिगुणाएकविंशतिः । उत्तराभिमुखस्तदानवानाम् । ऐशान्यभिमुखस्तदाष्टानाम् । तद्यथा । एवंदिगभिमुखप्रष्टृवशेनांकंगृहीत्वाततः पंचदशगुणः कार्यः । ततस्तस्मिन्प्रदेशेयावंतः पुरुषास्तदभिमुखाः स्थितास्तत्संख्यान्वितोयुक्तःकार्यः । एवंकृतेयद्भवतितस्यसप्तविंशत्याभागमपहृत्ययोंकोवशिष्यते तदंकसमंतस्यधनिष्ठाद्यारभ्यनक्षत्रंवक्तव्यम् ॥ १६ ॥

इतिनष्टजातकमिदंबहुप्रकारंमयाविनिर्दिष्टम् ॥
ग्राह्यमतःसच्छिष्यैःपरीक्ष्ययत्नाद्यथाभवति ॥ १७ ॥

इतिनष्टजातकाध्यायः समाप्तः ॥ २६ ॥

अथनष्टजातकोपसंहारमार्ययाह ॥ इतिनष्टजातकमिति । इतिशब्दः उपसंहारे । मया वराहमिहिराचार्येणनष्टजातकंबहुप्रकारंबहुभेदंविनिर्दिष्टम् उक्तमिदम् । अतोस्माद्धेतोः सच्छिष्यैः शोभनसच्छात्रैः ग्राह्यम् । यत्नात्परीक्ष्याविचार्ययथायेनप्रकारेणसंभवति सत्यरूपंतथाग्राह्यमिति । येनप्रकारेणसंभवतितथाग्रहीतव्यमित्यर्थः । बहुभिरागमैर्मयाविचार्यपराशरवसिष्ठयवनसत्यमणित्थादीनांमतानि आलोक्यकृतम् । तदेवभूयोनिर्मलगुणनिपुणबुद्ध्या विचार्य सम्यक्तयाकार्यं येनस्फुटसिद्धोसौसंपद्यते ॥ १७ ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौनष्टजातकाध्यायः षड्विंशतिःसमाप्तः २६

---

## अथद्रेष्काणाध्यायप्रारंभः ॥

कट्यांसितवस्त्रवेष्टितःकृष्णःशक्तइवाभिरक्षितुम् ॥
रौद्रःपरशुंसमुद्यतंधत्तेरक्तविलोचनःपुमान् ॥ १ ॥

अथद्रेष्काणाध्यायोव्याख्यायते । तदादौमेषाद्यद्रेष्काणस्यस्वरूपज्ञानंवैतालीयेनाह ॥ कट्यामिति । कट्यांजघनेसितंश्वेतंवस्त्रमंबरंवेष्टितंयेन । कृष्णः असितवर्णः । शक्तइवअभिरक्षितुमाभिमुख्येन रक्षांकर्तुंशक्तः समर्थइव । रौद्रोभीषणः यः परशुंकुठारंसमुद्यतं धत्तेधारयति । रक्तविलोचनो लोहिताक्षः । सचपुमान्पुरुषःएषपुरुषद्रेष्काणः सायुधोभौमासक्तश्च ॥ १ ॥

रक्तांबराभूषणभक्ष्यचिंताकुंभाकृतिर्वाजिमुखीतृषार्त्ता ॥
एकेनपादेनचमेषमध्येद्रेष्काणरूपंयवनोपदिष्टम् ॥ २ ॥

अथमेषद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह ॥ रक्तांबरेति । रक्तांबरालोहितवस्त्रा । भूषणमलंकरणं । भक्ष्यंभोज्यं । तत्रचित्तंयस्याः । कुंभाकृतिः घटोदरी । वाजिमुखी अश्ववक्त्रा । तृषार्त्तापिपासार्त्ता । एकेनपादेनचरणेनोपलक्षिता । इदंद्रेष्काणरूपंमेषमध्येमेषद्वितीयं । यवनोपदिष्टं यवनाचार्यैः कथितम् । एषचतुष्पदद्रेष्काणः स्त्रीद्रेष्काणोऽर्कसक्तश्च । यस्मादाचार्यैश्चतुष्पान्मुखाच्चतुष्पदद्रेष्काणइतिव्याख्यातस्तथाखगमुखोद्रेष्काणश्च ॥ २ ॥

क्रूरःकलाज्ञःकपिलःक्रियार्थीभग्नव्रतोभ्युद्यतदंडहस्तः ॥
रक्तानिवस्त्राणिबिभर्तिचंडोमेषेतृतीयःकथितस्त्रिभागः ॥ ३ ॥

अथमेषतृतीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह ॥ क्रूरइति । क्रूरोविषमस्वभावः । कलाज्ञःकलावित् । कपिलःपिंगलः । क्रियार्थीकर्मस्वभिलापुकः । भग्नव्रतः स्खलितनियमः । आभिमुख्येनोद्यतोदंडः हस्तेपाणौयस्य । रक्तानि लोहितानिवस्त्राण्यंबराणिबिभर्तिधारयति । चंडःक्रोधशीलः । अयंमेषतृतीयस्त्रिभागोद्रेष्काणः कथितउक्तः । एषनरद्रेष्काणः सायुधोजीवसक्तश्च ॥ ३ ॥

कुंचितलूनकचाघटदेहादग्धपटातृपिताशनचित्ता ॥
आभरणान्यभिवांछतिनारीरूपमिदंवृषभेप्रथमस्य ॥ ४ ॥

अथवृषप्रथमद्रेष्काणजातस्यस्वरूपंदोधकेनाह ॥ कुंचितेति । कुंचिताःकुटिलाः लूनाःकचाः केशायस्याः कुटिलच्छिन्नकेशा । घटदेहा कुंभसदृशोदरी । दग्धपटा दग्धवस्त्रा । तृषितापिपासार्ता । अशनेभोजने चित्तंयस्याः । आभरणानि भूषणानिअभिवांछति । साचनारीस्त्री । इदंवृषभप्रथमस्यद्रेष्काणस्यस्वरूपम् । एषःस्त्रीद्रेष्काणः साग्निकः शुक्रसक्तश्च ॥ ४ ॥

क्षेत्रधान्यगृहधेनुकलाज्ञोलांगलेसशकटेकुशलश्च ॥
स्कंधमुद्वहतिगोपतितुल्यंक्षुत्परोजवदनोमलवासाः ॥ ५ ॥

अथवृषद्वितीयद्रेष्काणस्यस्वरूपंस्वागतयाह ॥ क्षेत्रधान्येति । क्षेत्रंकेदारः । धान्यानिशालयः । गृहंवेश्म । धेनुः गौः । कलाः गीतवाद्यनृत्यलेखचित्रकर्मादि । एतासांज्ञःपंडितः । लांगलेहलेसशकटेशकटसहितेकुशलः शिक्षितः । गोपतितुल्यंवृषभसदृशंस्कंधंककुदमुद्वहति धारयति । क्षुत्परः क्षुधयार्तः । अजवदनः छागवक्त्रः । मलवासामलिनांबरः । एषनरद्रेष्काणः । चतुष्पादद्रेष्काणोबुधसक्तश्च ॥ ५ ॥

द्विपसमकायःपांडुरदंष्ट्रःशरभसमांघ्रिःपिंगलमूर्तिः ॥
अविमृगलोभव्याकुलचित्तोवृषभवनस्यप्रांतगतोयम् ॥ ६ ॥

अथवृषतृतीयद्रेष्काणस्यस्वरूपंदोधकेनाह ॥ द्विपसमकायइति । द्विपसमकायो महाशरीरोहस्तितुल्यदेहः । नपुनः हस्तिशरीरः । पांडुरदंष्ट्रः श्वेतदंतः । शरभसमांघ्रिः बृहत्पादो नपुनः शरभसदृशपादः । पिंगलमूर्तिः कपिलदेहः । अविः प्रसिद्धः । मृगआरण्यपशुः । अविमृगलोभार्थं व्याकुलंचित्तंयस्य । अयंवृषभवनस्यवृषराशेः प्रांतगतस्तृतीयद्रेष्काणः । चतुष्पादः सौरसक्तश्च ॥ ६ ॥

सूच्याश्रयंसमभिवांछतिकर्मनारीरूपान्विताभरणकार्यकृतादराच ॥ हीनप्रजोच्छ्रितभुजर्तुमतीत्रिभागमाद्यंतृतीयभवनस्यवदंतितज्ज्ञाः ॥ ७ ॥

अथमिथुनस्यप्रथमद्रेष्काणस्यस्वरूपज्ञानंवसंततिलकेनाह ॥ सूच्याश्रयमिति । नारीस्त्रीसूच्याश्रयंकर्मसीवनक्रियांसम्यगभिवांछतिइति । रूपान्वितासुरूपा । आभरणकार्येभूषणकर्मणिकृतआदरोअभिलाषःश्रद्धायया । हीनप्रजा अपत्यरहिता । उच्छ्रितभुजोर्ध्वबाहुकी । ऋतुमतीसार्तवाकामार्त्तावा । तृतीयभवनस्यमिथुनस्याद्यं प्रथमंत्रिभागंद्रेष्काणं तज्ज्ञाःपंडिताः प्रवदंतिकथयंति । एषस्त्रीद्रेष्काणोबुधसक्तश्च ॥ ७ ॥

उद्यानसंस्थः कवचीधनुष्माञ्छूरोस्त्रधारीगरुडाननश्च ॥
क्रीडात्मजालंकरणार्थचिंतांकरोतिमध्येमिथुनस्यराशेः ॥ ८ ॥

अथमिथुनद्वितीयद्रेष्काणस्यस्वरूपमुपजातिकयाह ॥ उद्यानसंस्थइति । उद्यानसंस्थउपवनेतिष्ठति । कवचीसन्नाहप्रावृतशरीरः । धनुष्मान्चापहस्तः । शूरोरणप्रियः । शरास्त्रधारीवापाठः । शराःकांडानितान्येवास्त्राणि तद्धारणेशीलंयस्येति । गरुडाननःपक्षिसदृशवक्त्रः । क्रीडनंक्रीडा । आत्मजापुत्राः । अलंकरणमाभरणम् । अर्थोवित्तम् । एषांसंबंधिनींचिंतां करोति । अयंमिथुनस्यराशेर्मध्येद्वितीयद्रेष्काणइत्यर्थः । एषनरद्रेष्काणः सायुधः खगद्रेष्काणः शुक्रसक्तश्च ॥ ८ ॥

भूषितोवरुणवद्बहुरत्नोबद्धतूणकवचः सधनुष्कः ॥
नृत्तवादितकलासुचविद्वान्काव्यकृन्मिथुनराश्यवसाने ॥ ९ ॥

अथमिथुनस्यतृतीयद्रेष्काणस्वरूपंस्वागतयाह ॥ भूषितइति । भूषितोऽलंकृतः । वरुणवत्ससमुद्रवत् बहुरत्नः प्रभूतमणिः । तूणंशराधानं कवचंसन्नाहः एतौबद्धौग्रंथितौयेन । सधनुष्कः चापयुक्तः । नृत्तेवादितेवाद्यविषयेकलासुचनिःशेषासुविद्वांस्तज्ज्ञः । काव्यकृत्पंडितः । कवेः कर्मकाव्यंतत्करोति । एषः मिथुनस्यराशेरवसानेतृतीयद्रेष्काणइत्यर्थः । एषः नरद्रेष्काणः सायुधः सौरसक्तश्च ॥ ९ ॥

पत्रमूलफलभृद्द्विपकायःकाननेमलयगःशरभांघ्रिः ॥
क्रोडतुल्यवदनोहयकंठःकर्कटेप्रथमरूपमुशंति ॥ १० ॥

अथकर्कटपूर्वस्यस्वरूपंस्वागतयाह ॥ पत्रेति । पत्राणिमूलानिफलानिचबिभर्ति धारयति । द्विपकायो हस्तिसदृशशरीरः । काननेवनेमलयगः मलयश्चंदनवृक्षः तत्रोपगतः स्थितः । शरभांघ्रिः शरभसदृशपादः । क्रोडः सूकरस्तत्तुल्यवदनः तत्सदृशवक्त्रः । हयकंठोऽश्वग्रीवः । कर्कटेकर्कटराशौप्रथमद्रेष्काणस्यस्वरूपमुशंतिकथयंति । एषद्रेष्काणश्चतुष्पाच्चंद्रसक्तश्च ॥ १० ॥

पद्मार्चितामूर्द्धनिभोगियुक्तास्त्रीकर्कशारण्यगताविरौति ॥
शाखांपलाशस्यसमाश्रिताचमध्येस्थिताकर्कटकस्यराशेः ॥ ११ ॥

अथकर्कटद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह पद्मार्चितेति । स्त्रीयोषिन्मूर्धनिशिरसिपद्मैः कमलैरर्चितापूजिता । भोगियुक्तासर्पा । कर्कशाकठिनयौवनोपेता । अरण्यगता एकांतस्थिता । विरौति आक्रोशति । पलाशवृक्षस्यशाखांलतांसमाश्रितातत्रासक्तास्थिताकर्कटस्यराशेर्मध्येस्थिताद्वितीयद्रेष्काणेसमवस्थिता । एषस्त्रीद्रेष्काणोव्यालद्रेष्काणोभौमसक्तश्च ॥ ११ ॥

भार्याभरणार्थमर्णवंनौस्थोगच्छतिसर्पवेष्टितः ॥
हैमैश्चयुतोविभूषणैश्चिपिटास्योंत्यग्रतश्चकर्कटे ॥ १२ ॥

अथकर्कटस्यतृतीयद्रेष्काणस्यस्वरूपंवैतालीयेनाह ॥ भार्येति । भार्याजायातस्याआभरणार्थमलंकरणनिमित्तमर्णवंसमुद्रं । नौस्थोनावमारूढः । सर्पवेष्टितांगोगच्छतियाति । हैमैः सुवर्णनिर्मितैः विभूषणैरलंकरणैर्युतः । चिपिटास्यः चिपिटमुखः । कर्कटेंत्यगतः तृतीयद्रेष्काणइत्यर्थः । एषनरद्रेष्काणोव्यालद्रेष्काणोजीवसक्तश्च ॥ १२ ॥

शाल्मलेरुपरिगृध्रजंबुकौश्वानरश्चमलिनांबरान्वितः ॥
रौतिमातृपितृविप्रयोजितःसिंहरूपमिदमाद्यमुच्यते ॥ १३ ॥

अथसिंहपूर्वस्यद्रेष्काणस्यस्वरूपज्ञानंरथोद्धतयाह ॥ शाल्मलेरिति । शाल्मलिवृक्षस्योपर्यग्रेगृध्रः पक्षी । जंबुकः सृगालः । एतौस्थितौ । तथा श्वासारमेयः । नरोमनुष्यः । सचमलिनैः मलोपेतैरंबरैर्वस्त्रैरन्वितोयुक्तः । मातृपितृविप्रयोजितोजननीजनकविरहतोरौत्याक्रोशति । इदमाद्यंप्रथमंरूपंसिंहस्योच्यतेकथ्यते । सिंहप्रथमद्रेष्काणइत्यर्थः । एषनरद्रेष्काणश्चतुष्पदद्रेष्काणः खगद्रेष्काणोर्कसक्तश्च ॥ १३ ॥

हयाकृतिःपांडुरमाल्यशेखरोविभर्तिकृष्णाजिनकंवलंनरः ॥
दुरासदःसिंहइवात्तकार्मुकोनताग्रनासोमृगराजमध्यमः ॥१४॥

अथसिंहद्वितीयस्यस्वरूपंवंशस्थेनाह ॥ हयाकृतिरिति । हयाकृतिः अश्वाकारः । पांडुरमीषच्छुक्लयुक्तं माल्यंपुष्पनिचयं शेखरेशिरसियस्य कृष्णाजिनंकृष्णमृगचर्म कंवलमौर्णिकंबिभर्तिधारयति । केचित्कृष्णाजिनचीवरमितिपठंति । चीवरंजीर्णवासः । नरोमनुष्यो दुरासदः दुर्ज्ञेयः दुःसाध्यः । सिंहइवआत्तकार्मुकः गृहीतचापः । नताग्रनासः नताग्रानासायस्य मृगराजस्यसिंहस्यमध्यमोद्वितीयोद्रेष्काणः हयाकृतिः । पुरुषएवायंनरचतुष्पदद्रेष्काणः । सायुधोजीवसक्तश्च ॥ १४ ॥

ऋक्षाननोवानरतुल्यचेष्टोविभर्तिदंडंफलमामिषंच ॥
कूर्चीमनुष्यःकुटिलैश्चकेशैर्मृगेश्वरस्यांत्यगतस्त्रिभागः ॥ १५॥

अथसिंहतृतीयस्यस्वरूपमुपजातिकयाह ॥ ऋक्षाननइति । ऋक्षःप्राणी ऋक्षाननः ऋक्षसदृशवक्त्रः । वानरतुल्यचेष्टः वानरेणकपिनातुल्यासदृशाचेष्टास्वभावोयस्य । दंडमायुधं । फलमाम्रादि । आमिषंमांसंचबिभर्तिधारयति । कूर्चीदीर्घश्मश्रुः मनुष्यः पुरुषःकु टिलैःकेशैर्मूर्द्धजैर्युक्तः । मृगेश्वरस्यसिंहस्यांत्यगस्त्रिभागः । एषनरद्रेष्काणः । चतुष्पदद्रेष्काणःसायुधोभौमसक्तश्च ॥ १५ ॥

पुष्पप्रपूर्णेनघटेनकन्यामलप्रदिग्धांवरसंवृतांगी ॥
वस्त्रार्थसंयोगमभीप्समानागुरोःकुलंवांछतिकन्यकाद्यः ॥ १६॥

अथकन्यापूर्वस्यस्वरूपमुपजातिकयाह ॥ पुष्पप्रपूर्णेनेति । कन्याकुमारी । पुष्पप्रपूर्णेनकुसुमपरिपूरितेनकुंभेनउपलक्षितामलप्रदिग्धैरतिमलोपेतैःअंबरैर्वस्त्रैःसंवृतांगीसंवृतावयवा वस्त्राण्यंबराणि । अर्थोधनम् । एषांसंयोगमभीप्समानावांछमानागुरोःकुलंव्रजतिगच्छति । कन्यकाद्यः प्रथमद्रेष्काणः । एषस्त्रीद्रेष्काणो बुधसक्तश्च ॥ १६ ॥

पुरुषःप्रगृहीतलेखनिःश्यामोवस्त्राशिराव्ययायकृत् ॥
विपुलंचविभर्त्तिकार्मुकंरोमव्याप्ततनुश्चमध्यमः ॥ १७ ॥

अथकन्याद्वितीयस्यस्वरूपंवैतालीयेनाह॥पुरुषइति।पुरुषोनरःप्रगृहीतलेखनिः येनाक्षराणिलिख्यंतेसालेखनिः । श्यामोश्यामवर्णः । वस्त्राशिराः कर्पटसंयमितमूर्द्धा । केचिद्बद्धशिराइतिपठंति । संयमितशिराः । व्ययंव्ययकृत् । आयंप्रवेशंचकरोतिगणयति । विपुलंविस्तीर्णंकार्मुकंधनुर्बिभर्त्तिधारयति । रोमव्याप्ततनुः रोमशशरीरः । एषमध्यमोद्वितीयद्रेष्काणः । एषनरद्रेष्काणःसायुधः सौरसक्तश्च ॥ १७ ॥

गौरीसुधौताग्रदुकूलगुप्तासमुच्छ्रिताकुंभकटच्छुहस्ता ॥
देवालयंस्त्रीप्रयताप्रवृत्तावदंतिकन्यांत्यगतस्त्रिभागः ॥ १८ ॥

अथकन्यातृतीयस्यज्ञानमुपजातिकयाह ॥ गौरीगौरवर्णा । सुधौतान्यग्राणि यस्मिन् दुकूलेपटविशेषेतेनगुप्ताच्छादिता । केचित्तुदुकूलहस्ताइतिपठंति । समुच्छ्रिताअत्युच्चा।कुंभोघटः। कटच्छुर्दर्वीप्रसिद्धा गृहोपयोगिकंलोहभांडंतत्करे हस्ते यस्याः । देवालयंसुरगृहम्।स्त्रीयुवतिः।प्रयतासमाहिताप्रवृत्तागंतुमुद्यताववदंतिकथयंतिमुनयः।कन्यांत्यगतस्त्रिभागःतृतीयद्रेष्काणः। एषस्त्रीद्रेष्काणः । शुक्रसक्तश्च ॥ १८ ॥

वीथ्यंतरापणगतःपुरुषस्तुलावानुन्मानमानकुशलःप्रतिमानहस्तः ॥ भांडंविचिंतयतितस्यचमूल्यमेतद्रूपंवदंतियवनाः प्रथमंतुलायाः ॥ १९ ॥

अथतुलाद्यस्वरूपंवसंततिलकेनाह ॥ वीथ्यंतरेति । वीथ्यंतरेमार्गमध्ये यदापणंप्रसारकः समवस्थितस्तत्रगतः पुरुषोनरस्तुलावान् तुलाहस्तः विद्यमानतुलः। उन्मानेऊर्ध्वमानेतुलादिकेमानेमानशब्देनकुडवादौचतस्मिन्कुशलः तज्ज्ञः । प्रतिमानंयेनद्रव्याणिसुवर्णरत्नादीनि परिच्छिद्यंतेतत्तुहस्तेयस्य। भांडंक्रयद्रव्यं विचिंतयतिध्यायति तस्यभांडस्यैतन्मूल्यमिति तस्यच भांडस्यचमूल्यंविचिंतयति । एतद्यवनास्तुलायाःप्रथमद्रेष्काणस्यरूपंवदंति कथयंति । एषनरद्रेष्काणःशुक्रसक्तश्च ॥ १९ ॥

कलशंपरिगृह्यविनिष्पतितुंसमभीप्सतिगृध्रमुखःपुरुषः ॥
क्षुधितस्तृषितश्चकलत्रसुतान्मनसैतितुलाधरमध्यगतः ॥ २० ॥

अथतुलाद्वितीयस्यस्वरूपंत्रोटकेनाह ॥ कलशमिति । गृध्रः पक्षी गृध्रमुखोगृध्राननः। कलशंकुंभंगृहीत्वाविनिष्पतितुंनिर्विशेषंपातितुमभीप्सातिवांछति । यतःक्षुधितोबुभुंक्षितः तृषितःपिपासितोतः कलत्रंभार्यां सुतान्पुत्रान्मनसाचित्तेनैतिगच्छति । अभीप्सति अभिलषतिस्मरतीत्यर्थः । इत्येवंप्रकारः तुलाधरमध्यगतः तुलाद्वितीयद्रेष्काणः । एषनरद्रेष्काणःखगद्रेष्काणःशनैश्चरसक्तश्च ॥ २० ॥

विभीषयंस्तिष्ठतिरत्नचित्रितोवनेमृगान्कांचनतूणवर्मभृत् ॥
फलामिषंवानररूपभृन्नरस्तुलावसानेयवनैरुदाहृतः ॥ २१ ॥

अथतुलातृतीयस्यस्वरूपंवंशस्थेनाह ॥ विभीषयन्निति । रत्नचित्रितोमणिभिर्विभूषितः । वनेऽरण्येमृगान्हरिणान्विभीषयन् भीषांकुर्वन्तिष्ठति । कीदृशः कांचनंसौवर्णं तूणंशराधानंवर्मसन्नाहं तेचबिभर्त्तिधारयति । फलान्यामिषंचमांसंबिभर्त्तिनरोमनुष्योवानररूपभृत् वानरस्यकपेरिवरूपंबिभर्तिधारयति । फलान्याम्रादीनि । केचिद्धनुर्द्धरः किन्नररूपभृन्नर इतिपठंति । धनुर्द्धरः चापहस्तः । किन्नरोदेवयोनिरश्वमुखः पुरुषः । तुलावसानेतुलायास्तृतीयद्रेष्काणेयवनैः पुराणयवनैरुदाहृतःकथितः । नरोमनुष्योवानराकारोऽयंचतुष्पदद्रेष्काणोबुधसक्तश्च ॥ २१ ॥

वस्त्रैर्विहीनाभरणैश्चनारीमहासमुद्रात्समुपैतिकूलम् ॥
स्थानच्युतासर्पनिबद्धपादामनोरमावृश्चिकराशिपूर्वः ॥ २२ ॥

अथवृश्चिकप्रथमस्यस्वरूपमुपजातिकयाह ॥ वस्त्रैरिति । स्त्रीवस्त्रैरंबरैस्तथाभरणैरलंकरणैश्चविहीनावर्जिता । महासमुद्रान्महासागरात् कूलंसमुपैत्यागच्छति । स्थानच्युतास्वस्थानात् भ्रष्टा। सर्पनिबद्धपादाभुजगनियमितचरणा । मनोरमाचित्तानंदविधायिनी चित्ताह्लादकरी।वृश्चिकराशेः । पूर्वःप्रथमद्रेष्काणः । एषस्त्रीद्रेष्काणोव्यालद्रेष्काणोभौमसक्तश्च ॥ २२ ॥

स्थानसुखान्यभिवांछतिनारीभर्तृकृतेभुजगावृतदेहा ॥
कच्छपकुंभसमानशरीरावृश्चिकमध्यमरूपमुशंति ॥ २३ ॥

अथवृश्चिकद्वितीयस्यस्वरूपंदोधकेनाह ॥ स्थानेति । नारीस्त्री स्थानसुखान्यभिवांछति। भर्तृकृतेपतिनिमित्तं। भुजगावृतदेहासर्पव्याप्तशरीरा। कच्छपः कूर्मः । कुंभोघटः । तत्समानशरीरातत्तुल्यदेहा । वृश्चिकेमध्यमरूपंद्वितीयंद्रेष्काणमुशंतिकथयंति । एषस्त्रीद्रेष्काणोव्यालद्रेष्काणः जीवसक्तश्च ॥ २३ ॥

पृथुलचिपिटकूर्मतुल्यवक्त्रः श्वमृगवराहसृगालभीषकारी ॥
अवतिचमलयाकरप्रदेशंमृगपतिरंत्यगतस्यवृश्चिकस्य ॥२४॥

अथवृश्चिकतृतीयस्वरूपज्ञानंपुष्पिताग्रयाह ॥ पृथुलचिपिटमिति । पृथुलं विस्तीर्णंचिपिटंचर्पटं कूर्मतुल्यंकच्छपसदृशंवक्त्रंमुखंयस्य । श्वासारमेयः । मृगोहरिणः । सृगालःक्रोष्टा।वराहः सूकरः । एषांभीषकारीभयकारी । मलयस्यचंदनस्याकरस्यप्रदेशमुत्पत्तिस्थानमवतिरक्षति । सचमृगपतिः सिंहः । अंत्यगतोवृश्चिकस्यतृतीयद्रेष्काणः । एष कूर्माननः सिंहद्रेष्काणः । चतुष्पदद्रेष्काणः चंद्रसक्तश्च ॥ २४ ॥

मनुष्यवक्त्रोऽश्वसमानकायोधनुर्विगृह्यायतमाश्रमस्थः ॥
क्रतूपयोज्यानितपस्विनश्चररक्षआद्योधनुषस्त्रिभागः ॥ २५ ॥

अथधन्विपूर्वस्यस्वरूपज्ञानमिंद्रवज्रयाह ॥ मनुष्यवक्त्रइति । मनुष्यवक्त्रोनरवदनः । अश्वसमानकायः तुरगसदृशदेहः । आयतंदीर्घं धनुश्चापंगृहीत्वा आश्रमस्थः तत्राश्रमेतिष्ठति । क्रतूपयोज्यानि यज्ञोपकरणादीनियज्ञभांडानिस्रुक्स्रुवादीनि तपस्विनः तापसान्ररक्षरक्षितवान् । आद्यः । प्रथमोधनुषस्त्रिभागोधन्विद्रेष्काणः । केचिच्चररक्षपूर्वइतिपठंति । धनुषः पूर्वस्त्रिभागः प्रथमद्रेष्काणः । एषोऽश्वसमानकायः नरद्रेष्काणः । चतुष्पात्सायुधद्रेष्काणः जीवसक्तश्च ॥ २५ ॥

मनोरमाचंपकहेमवर्णाभद्रासनेतिष्ठतिमध्यरूपा ॥
समुद्ररत्नानिविघट्टयंतीमध्यात्रिभागोधनुषःप्रदिष्टः ॥ २६ ॥

अथधन्विद्वितीयस्यस्वरूपज्ञानमुपजातिकयाह ॥ मनोरमेति । मनोरमा चित्ताह्लादकारिणी । चंपकंपुष्पविशेषः हेमसुवर्णं तत्सदृशवर्णा तत्समकांतिः । भद्रासने आसनविशेषेतिष्ठति तत्रउपविष्टा । मध्यमरूपा नचातिशोभना नाप्यत्यशोभना।समुद्ररत्नानि सागरमणीन् । विघट्टयंतीस्त्रीतिष्ठति । धनुषोमध्यत्रिभागोद्वितीयद्रेष्काणोमुनिभिः प्रदिष्टउक्तः । एषस्त्रीद्रेष्काणोभौमसक्तश्च ॥ २६ ॥

कूर्चीनरोहाटकचंपकाभोवरासनेदंडधरोनिषण्णः ॥
कौशेयकान्युद्वहतेजिनंचतृतीयरूपंनवमस्यराशेः ॥ २७ ॥

अथधन्वितृतीयस्यस्वरूपमुपजातिकयाह ॥ कूर्चीनरइति । नरोमनुष्यः कू-

र्चीदीर्घश्मश्रुः हाटकंसुवर्णं चंपकः पुष्पविशेषः । तदाभोतत्सदृशकांतिः । तत्समानद्युतिः । वरासनेप्रधानासनेनिषण्णः उपविष्टः । दंडधरोदंड-हस्तः । कौशेयकानिपट्टविशेषाणि उद्वहतेधारयति । अजिनंमृगचर्म नवमस्यराशेर्धनुषः तृतीयद्रेष्काणस्यस्वरूपं एषनरद्रेष्काणः सायुधः अर्कसक्तश्च ॥ २७ ॥

रोमचितोमकरोपमदंष्ट्रः सूकरकायसमानशरीरः ॥
योक्त्रकजालकबंधनधारीरौद्रमुखोमकरप्रथमस्तु ॥ २८ ॥

अथमकरप्रथमस्यस्वरूपंदोधकेनाह ॥ रोमेति । रोमचितोरोमशः मकरोपमदंष्ट्रः मकरतुल्यदंष्ट्रःमकरोजलचरप्राणी।सूकरस्यवराहस्य कायोदेहःतत्समानशरीरः तत्तुल्यतनुः । योक्त्रकंयेनबलीवर्दायोज्यंते । जालकः प्रसिद्धः येनपक्षिणोबध्यंते । बंधनंनिगडादि । एतानिधारयति । तच्छीलः । रौद्रमुखोवक्रिताननः । मकरप्रथमः प्रथमद्रेष्काणः । एष पुरुषद्रेष्काणः । बंधनधारित्वात्सनिगडः । सूकरसमानशरीरः नसूकरः तस्मान्नचतुष्पात् । शनैश्चरसक्तश्च ॥ २८ ॥

कलास्वभिज्ञाब्जदलायताक्षीश्यामाविचित्राणिचमार्गमाणा ॥
विभूषणालंकृतलोहकर्णायोषाप्रदिष्टामकरस्यमध्ये ॥ २९ ॥

अथमकरद्वितीयस्यस्वरूपमुपजातिकयाह ॥ कलास्वभिज्ञाब्जदलायताक्षीति । कलास्वभिज्ञाआभिमुख्येनजानाति । अब्जदलायताक्षी । अब्जदलंपद्मपत्रंतद्वदायतेदीर्घेअक्षिणीयस्याः सादीर्घनेत्राचश्यामाश्यामवर्णा विचित्राणिनानाप्रकाराणिवस्तूनिचमार्गमाणा अभीप्समाना विभूषणैरलंकरणैरलंकृता । लोहकर्णालोहयुक्तश्रोत्रा । लोहाभरणंकर्णयोर्यस्याः सा । योषास्त्रीमकरस्यमध्येद्वितीयद्रेष्काणेप्रदिष्टाउक्ता । एषः स्त्रीद्रेष्काणः । शुक्रसक्तश्च ॥ २९ ॥

किन्नरोपमतनुः सकंबलस्तूणचापकवचैःसमन्वितः ॥
कुंभमुद्वहतिरत्नचित्रितंस्कंधगंमकरराशिपश्चिमः ॥ ३० ॥

अथमकरतृतीयस्यस्वरूपंरथोद्धतयाह ॥ किंनरोपमेति । किंनरोपमतनुः किन्नरादेवयोनयः अश्वमुखाः पुरुषास्तत्सदृशीतनुः । सकंबलः कंबलेनसहितः । तूणंशराधारंचापंधनुः कवचं सन्नाहः एतैस्तूणचापकवचैः शराधारधनुःसन्नाहैः । समन्वितोयुक्तः । कुंभंघटंरत्नविचि-

त्रितंमणिविरचितंस्कंधगमंसासक्तमुद्वहति धारयति। मकरराशेः पश्चिमस्तृतीयद्रेष्काणः । एषपुरुषद्रेष्काणः सायुधः बुधसक्तश्च ॥ ३० ॥

स्नेहमद्यजलभोजनागमव्याकुलीकृतमनाःसकंबलः ॥
कोशकारवसनोजिनान्वितोगृध्रतुल्यवदनोघटादिगः ॥ ३१ ॥

अथकुंभप्रथमद्रेष्काणस्यस्वरूपंदोधकेनाह ॥ स्नेहमद्यजलभोजनेति । स्नेहस्तैलादि । मद्यंपानविशेषः । जलमुदकं । भोजनमशनम् । एतेषांयआगमः तेनव्याकुलितंमनः चित्तंयस्य । सकंबलः कंबलसहितः । कोषकारवसनः पट्टवासाः । अजिनान्वितः कृष्णमृगचर्मयुक्तः । गृध्रःपक्षी तत्तुल्यवदनः तत्समवक्त्रः । घटादिगः कुंभप्रथमद्रेष्काणः । एषनरद्रेष्काणः खगश्च सौरसक्तश्च ॥ ३१ ॥

दग्धेशकटेसशाल्मलेलोहान्याहरतेंगनावने ॥
मलिनेनपटेनसंवृताभांडैर्मूर्ध्निगतैश्चमध्यमः ॥ ३२ ॥

अथकुंभद्वितीयस्वरूपंवैतालीयेनाह ॥ दग्धेशकटेइति । शकटेगंत्र्यांदग्धे अग्निनाभस्मीकृते । सशाल्मलेशाल्मलवृक्षैः सहिते । अंगनास्त्रीलोहान्याहरतेगृह्णाति । वनेअरण्येमलिनेनपटेनसमलेनवाससासंवृताप्रावृताभांडैः भांडप्रकारैः मूर्ध्निगतैः मस्तकारोपितैः उपलक्षिता । केचिद्भांडैरारोपितैः परिपूर्णइतिपठंति । मध्यमोद्वितीयद्रेष्काणः । एषस्त्रीद्रेष्काणः साग्निकोबुधसक्तश्च ॥ ३२ ॥

श्यामःसरोमश्रवणःकिरीटीत्वक्पत्रनिर्यासफलैर्बिभर्ति ॥ ॥
भांडानिलोहव्यतिमिश्रितानिसंचारयंत्यंतगतोघटस्य ॥३३॥

अथकुंभतृतीयस्यस्वरूपज्ञानमिंद्रवज्रयाह ॥ श्यामइति । श्यामःश्यामवर्णः।सरोमश्रवणः लोमशकर्णः। किरीटीमौलियुक्तः। त्वक्चर्मपत्रंपर्णं। निर्यासो वृक्षनिर्यासः यथागुग्गुलुः स्नेहः । फलंचसुप्रसिद्धमेवाम्रादि । एतैःसहभांडानिलोहव्यतिभिंश्रितानि लोहसंयुक्तानिबिभर्तिधारयति । तानिचसंचारयाति स्थानात् स्थानांतरंनयति । घटस्यकुंभस्यांतगतः । तृतीयद्रेष्काणः । एषनरद्रेष्काणःशुक्रसक्तश्च ॥ ३३ ॥

स्रुग्भांडमुक्तामणिशंखमिश्रैर्व्याक्षिप्तहस्तःसविभूषणश्च ॥
भार्याविभूषार्थमपांनिधाननावाप्लवत्यादिगतोझषस्य॥ ३४ ॥

अथमीनाद्यस्यस्वरूपमिंद्रवज्रयाह ॥ स्रुग्भांडेति । स्रुग्भांडानि यज्ञोपकरणभांडानि । मुक्तामौक्तिकं । मणयःप्रसिद्धाः । शंखःप्रसिद्धएव । एतैर्मिश्रैरेकीकृतैः । व्याक्षिप्तोहस्तोयस्य आकुलकरः । सविभूषणःसाभरणः । भार्याजाया तद्विभूषार्थमलंकरणार्थमपांनिधानंसमुद्रंनावाप्लवति । नौस्थोगच्छति । केचिन्महार्णवंचनावाप्लवतीतिपठंति । झषस्यमीनस्यादिगतःप्रथमद्रेष्काणः । एषनरद्रेष्काणोजीवसक्तश्च ॥ ३४ ॥

अत्युच्छ्रितध्वजपताकमुपैतिपोतंकूलंप्रयातिजलधेःपरिवारयुक्ता ॥ वर्णेनचंपकमुखाप्रमदात्रिभागोमीनस्यचैषकथितोमुनिभिर्द्वितीयः ॥ ३५ ॥

अथमीनद्वितीयस्यस्वरूपज्ञानंवसंततिलकेनाह ॥ अत्युच्छ्रितेति । अत्युच्छ्रिता अतीवोच्चध्वजाः पताकायस्मिन्पोतेतमुपैति आरोहति । जलधेःसमुद्रस्यकूलंतटंप्रयाति । प्रमदास्त्री।कीदृशी परिवारयुक्तासखीजनेनावृता । चंपकंपुष्पविशेषः पंचककांतिः । मुखवर्णेनचंपककांतिमुष्णातीत्यर्थः । एषमीनस्यद्वितीयत्रिभागोमुनिभिर्गदितउक्तः।एषस्त्रीद्रेष्काणश्चंद्रसक्तश्च ॥३५॥

श्वभ्रांतिकेसर्पनिवेष्टितांगोवस्त्रैर्विहीनःपुरुषस्त्वटव्याम् ॥ चौरानलव्याकुलितांतरात्माविक्रोशतेंत्योपगतोझषस्य ॥३६॥

इतिबृहज्जातकेद्रेष्काणस्वरूपाऽध्यायःसमाप्तः ॥ २७ ॥

अथमीनस्यतृतीयद्रेष्काणस्वरूपज्ञानमिंद्रवज्रयाह ॥ श्वभ्रांतिकेति । श्वभ्रांतिके गर्तसमीपे । सर्पवेष्टितांगोभुजगावृतावयवः । वस्त्रैरंबरैर्विहीनोरहितः पुरुषोनरः । अटव्यामरण्येचौरैस्तस्करैः अनलेनाग्निनाव्याकुलितः क्षुभितोंतरात्मायस्य । विक्रोशतेरोदिति । झषस्यमीनस्यांत्योपगतः तृतीयद्रेष्काणःएषव्यालद्रेष्काणोभौमसक्तश्च । द्रेष्काणस्वरूपस्यप्रयोजनंप्रदेशेषु व्याख्यातम् । तथाचयात्रायांवक्ष्यति । द्रेष्काणाकारचेष्टांगुणसदृशफलंयोजयेद्वृद्धिहेतोर्द्रेष्काणेसौम्यरूपेकुसुमफलयुतेरत्नभांडान्वितेच । सौम्यैर्दृष्टेजयःस्यात्प्रहरणसदृशेपापदृष्टेचभंगःसंमोहोवाथबंधःसभुजगनिगडेपापयुक्तेपिपासुरिति । अन्यच्चास्यप्रयोजनं चौररूपस्थानादिज्ञानम् । उक्तंचषट्पंचाशिकायां पृथुयशसा । अंशकाज्ज्ञायतेद्रव्यंद्रेष्काणैस्तस्कराःस्मृताः राशिभ्यःकालदिग्देशावयोज्ञातिश्चलग्नपात् ॥ एवंवृत्तानि ॥ ३६ ॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकेद्रेष्काणाऽध्यायः ॥२७ ॥

---

अथातउपसंहाराध्यायोव्याख्यायते ॥ राशिप्रभेदोग्रहयोनि-
भेदोवियोनिजन्माथनिषेककालः ॥ जन्माथसद्योमरणंतथायु-
र्दशाविपाकोष्टकवर्गसंज्ञः ॥ १ ॥

अथातउपसंहाराध्यायोव्याख्यायते । अथाध्यायसंग्रहमुपजातिकयाह ॥ राशिप्रभेदइति । राशिप्रभेदः प्रथमोध्यायः । ग्रहयोनिभेदोद्वितीयः २ वियोनिजन्मातृतीयः ३ अथशब्दआनंतर्ये । निषेककालश्चतुर्थः ४ जन्मविधिः पंचमः ५ अथसद्योमरणमरिष्टाऽध्यायः षष्ठः ६ आयुर्विभागःसप्तमः ७ दशाविभागोष्टमः ८ अष्टकवर्गसंज्ञोनवमः ९ ॥ १ ॥

कर्माजीवोराजयोगाःखयोगाश्चांद्रायोगाद्विग्रहाद्याश्चयोगाः ॥
प्रव्रज्याथोराशिशीलानिदृष्टिर्भावस्तस्मादाश्रयोथप्रकीर्णः ॥२॥

अथशेषाध्यायसंग्रहंशालिन्याह ॥ कर्माजीवइति । कर्माजीवोदशमः १० राजयोगाऽध्यायएकादशः ११ खयोगाः नाभसयोगाध्यायोद्वादशः १२ चांद्रयोगाः सुनफाद्याश्चंद्रयोगाध्यायस्त्रयोदशः १३ द्विग्रहत्रिग्रहयोगाध्यायश्चतुर्दशः १४ प्रव्रज्यायोगाध्यायःपंचदशः १५ अथोनंतरंराशिशीलाध्यायः षोडशः १६ दृष्टिफलाध्यायः सप्तदशः १७ तस्मात्परोभावाध्यायोष्टादशः १८ अथातःपरमाश्रयाध्यायएकोनविंशतितमः १९ प्रकीर्णाध्यायोविंशतिः २० ॥ २ ॥

नेष्टायोगाजातकंकामिनीनांनिर्याणंस्यान्नष्टजन्मदृक्काणः ॥
अध्यायानांविंशतिःपंचयुक्ताजन्मन्येतद्यात्रिकंचाभिधास्ये॥३॥

अथशेषाध्यायसंग्रहंशालिन्याह ॥ नेष्टायोगाइति । अनिष्टयोगाऽध्यायएकविंशतिः २१ कामिनीनांस्त्रीणांजातकाध्यायोद्वाविंशतिः २२ निर्याणंमरणज्ञानाध्यायस्त्रयोविंशतिः २३ नष्टजातकाऽध्यायश्चतुर्विंशतिः २४ द्रेष्काणस्वरूपाध्यायः पंचविंशतिः २५ एवंपंचयुक्ताध्यायानांविंशतिः । जन्मनिजातकेउक्ताकथितोक्ताएतज्जातके ॥ ३ ॥

---

१ एतेन षोडशाध्याये केश्चित् त्रयोऽध्यायाः प्रकरणभेदेनकल्पिताः सैव सरणिः टीकाकृद्भिरादृतेतिगम्यते ।

प्रश्नास्तिथिर्भंदिवसः क्षणश्चचंद्रोविलग्नंत्वथलग्नभेदः ॥
शुद्धिर्ग्रहाणामथचापवादोविमिश्रकाख्यंतनुवेपनंच ॥ ४ ॥

एवमिदानींयात्रिकेयात्रायांनिबद्धमध्यायसंग्रहमभिधास्येकथयिष्ये तच्चो जातिकयाह ॥ प्रश्नास्तिथिरिति । प्रश्नाः प्रश्नप्रभेदाध्यायः । तिथिस्ति थिबलाध्यायः । भंनक्षत्राभिधानम् । दिवसोदिवसाभिधानंवारफललक्षणम् क्षणोमुहूर्तनिर्देशः । चंद्रश्चंद्रबलाध्यायः । लग्नंचलग्नविनिश्चयः । अथा तरं लग्नभेदोहोराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागानांलक्षणं सफ ग्रहाणांशुद्धिः सफला समस्तग्रहाणांकुंडलिकाफलम् । अथानंतरम् । पवादाध्यायः । विमिश्रकाख्यंमिश्रकाध्यायः । तनुवेपनंदेहस्पंदनम् ॥ ४

अतःपरंगुह्यकपूजनंस्यात्स्वप्नंततः स्नानविधिःप्रदिष्टः ॥
यज्ञोग्रहाणामथनिर्गमश्चक्रमाच्चादिष्टः शकुनोपदेशः ॥ ५ ॥

शेषाध्यायस्यकीर्तनमुपजातिकयाह ॥ अतःपरमिति । अतोऽस्मात्परंगुह्य-कपूजनंस्याद्भवेत् । स्वप्नंस्वप्नाध्यायः । ततोनंतरंस्नानविधिः प्रदिष्टः उक्तः । ग्रहाणांयज्ञोग्रहयज्ञः । अथानंतरंनिर्गमः प्रास्तानिकं । क्रमात्परि-पाट्यादिष्टउक्तः । शकुनोपदेशः शकुनरुतज्ञानम् । एषयात्रायांसंग्रहः ॥ ५ ॥

विवाहकालः करणंग्रहाणां प्रोक्तंपृथक्तद्विपुलाथशाखा ॥
स्कंधैस्त्रिभिर्ज्यौतिषसंग्रहोयंमयाकृतोदैवविदांहिताय ॥ ६ ॥

अथशेषवस्तुसंग्रहमुपजातिकयाह ॥ विवाहकालइति । विवाहकालोविवाह-पटलम् । ग्रहाणांकरणंपंचसिद्धांतिकायांप्रोक्तं कथितं । पृथग्विभज्यतद्विपुला तस्यकरणस्यशुभाशुभज्ञानायविपुलाविस्तीर्णाशाखाकथिता । त्रिभिः स्कंधै-रेतैर्गणितहोरासंहिताख्यैरयंज्योतिःशास्त्रसंग्रहोमयावराहमिहिराचार्येण दैव विदांसांवत्सरिकाणांहितार्थंकृतोविरचितः । विस्तीर्णशास्त्राण्यालोच्यसंक्षे पतोमयाकृतः ॥ ६ ॥

पृथुविरचितमन्यैः शास्त्रमेतत्समस्तंतदनुलघुमयेदंतत्प्रदेशा-र्थमेव ॥ कृतमिहहिसमर्थंधीविषाणामलत्वेममयदिहयदुक्तंस-ज्जनैःक्षम्यतांतत् ॥ ७ ॥

एतन्मालिन्याह पृथुविरचितमन्यैरिति । एतत्समस्तंसकलशास्त्रमन्यैरा-चार्यैर्यवनेश्वरादिभिः पृथुविस्तीर्णंविरचितंकथितम् । तदनुतदेवशोभनतरं

ातत्प्रदेशार्थंतदुपदिष्टार्थंलघुस्वल्पंकृतम् । तत्प्रदेशेऽपियोर्थःसोस्मिंस्तात्पर्या-
।हियस्मादर्थेइहास्मिन्शास्त्रेकृतंधीविषाणामलत्वेबुद्धिशृंगनिर्मलीकरणवि-
षसमर्थमुक्तमेतत् कृतंमयाचेहसंग्रहे यदुक्तमशोभनमुक्तंकथितं तत्सज्जनैः
डितैर्ममक्षम्यतांक्षंतव्यमित्यर्थः ॥ ७ ॥

ग्रंथस्ययत्प्रचरतोस्यविनाशमेतिलेख्याद्बहुश्रुतमुखाधिगमक्र-
मेण ॥ यद्वामयाकुकृतमल्पमिहाकृतंवाकार्यंतदत्रविदुषाप-
रिहृत्यरागम् ॥ ८ ॥

अथकालविशेषेणकुकृताल्पकृतयोश्चपुनःकरणेसतांप्रार्थनायवसंततिलके-
नाह ॥ ग्रंथस्येति । अस्यग्रंथस्ययत्प्रचरतोविचरमाणस्ययद्विनाशमेतियाति
लेख्याल्लेखकदोषात् ततबहुश्रुतमुखाधिगमक्रमेण बहुश्रुतानांपंडितानां
मुखादधिगम्यज्ञात्वाक्रमेणपरिपाट्या विदुषापंडितेनरागंमात्सर्यमप-
हृत्यविहायकर्तव्यम् । तेचशास्त्रार्थापेक्षयासंस्कारेणसमर्थाः । यद्वा । मयाकु-
कृतंकुत्सितंकृतम् । तथाल्पमपरिपूर्णंतद्विचार्यविचारेणकर्तव्यमित्यर्थः ॥ ८ ॥

आदित्यदासतनयस्तदवाप्तबोधःकापित्थकेसवितृलब्धवर-
प्रसादः ॥ आवंतिकोमुनिमतान्यवलोक्यसम्यग्घोरांवराह-
मिहिरोरुचिरांचकार ॥ ९ ॥

तत्रादित्यदासाख्यस्यपितुर्नाम कापित्थाख्येग्रामेवरदनामादित्यदासाच्चवि-
ज्ञानागमंस्वनिवासमुज्जयिनींचनामहोराशास्त्रनामच वसंततिलकेनाह ॥ आ-
दित्यदासेति । आदित्यदासाख्योब्राह्मणः तस्यतनयःपुत्रः तस्मादेव
पितुरादित्यदासादवाप्तःबोधःज्ञानंयेन । कापित्थाख्येग्रामेयोसौभगवान्सवि-
ासूर्यस्तस्माल्लब्धःप्राप्तोवरःप्रसादोयेन । आवंतिकःआवंतकेदेशेउज्जयिन्यां
ास्तव्यः । कोसौवराहमिहिरः अयंमुनिमतानिऋषिप्रणीतानिशास्त्राण्यवलो-
क्यविचार्यसम्यग्यथावस्तुकृत्वाहोरांजातकशास्त्रंरुचिरांशोभनांसुगमांचकार-
कृतवानिति ॥ ९ ॥

दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनेदम् ॥
शास्त्रमुपसंगृहीतंनमोस्तुपूर्वप्रणेतृभ्यः ॥ १० ॥

इतिबृहज्जातके उपसंहाराध्यायः ॥ २८ ॥

---

अथसतांप्रणामपूर्वकाणिशास्त्राणिप्रणामांतानिकृत्वाततःशास्त्रावसानेपूर्वप्रणेतृणांनमस्कारमार्ययाह ॥ दिनकरेति । दिनकरोर्कस्तदादिकाःसर्वएवग्रहाः मुनयोवासिष्ठाद्याः गुरुरादित्यदासः तेषांचरणप्रणिपातेनपादनमस्कारकरणेनकृतोयःप्रसादोनुकंपातेनानुनयेनमतिर्बुद्धिर्यस्यतेनदिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनामयेदंशास्त्रमुपसंगृहीतं स्वीकृतमस्ति । तस्मात्पूर्वप्रणेतृभ्यःपूर्वशास्त्रकारेभ्योनमोस्तु नमस्करणेनयःकृतप्रसादः नमइतिभद्रम् १०॥

इति श्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौउपसंहाराध्यायःसमाप्तः ॥ २८ ॥

वराहमिहिराचार्यकृतेहोरामहोदधौ । अर्थिनामुत्पलश्चक्रेऽर्थाप्तयेविवृतिप्लवम् ॥ १ ॥ चिंतामणिरितिख्याताटीकाशास्त्रज्ञवल्लभा।सप्तसार्द्धसहस्राणि ७५०० मानमस्यामनुष्टुभाम् ॥ २ ॥ प्रीतिंदौष्ट्यंचपरित्यज्यटीकांसम्यग्विचार्यच। उपयोग्यात्रशास्त्रेचेत्संग्राह्यानोपरोधतः॥ ३ ॥ व्याख्येयंयन्मयात्यक्तंयच्चयुक्तिविवर्जितम्।भ्रांत्याविलिखितंयच्चतत्सर्वंस्फुटतांनयेत्। चैत्रमासस्यपंचम्यांसितायांगुरुवासरे। वस्वष्टाष्टमितेशाके ८८८ कृतेयंविवृतिर्मया ॥ ५ ॥ विधायटीकांशास्त्रेस्मिन्यत्किंचित्पुण्यमर्जितम् । तेननिर्मत्सरीभूयात्सौजन्यालंकृतोजनः ॥ ६ ॥ दीर्घस्वरोष्ठ्यादिविधेयतांसाहाष्टादशेव्यंजनसप्तकेन । स्वार्थंचवेद्यांसमवस्थितेन भाष्योत्पलेचैवलिखापितस्तु ॥ ७ ॥

## ॥ इतिभट्टोत्पलकृताबृहज्जातकविवृतिः समाप्ता ॥

इदं पुस्तकं प्रह्लादपुरवास्तव्यज्योतिर्विज्जोईतारामकाशिरामेण सम्यक्परिशोधितम् तदेतत् श्रीकृष्णदासात्मजखेमराजश्रेष्ठिना मुंबय्यां स्वकीये "श्रीवेङ्कटेश्वर" मुद्रालये मुद्रयित्वा प्रकाशितम् ॥

शके १८१७ संवत् १९५२.

---

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" छापाखाना-मुम्बई.